( मधुस्त्रिꣳशत् ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

( अथ प्रथमाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ) ।

कल्पः—“ ऋतुग्रहैः[1] प्रचरतो द्रोणकलशाद्गृह्यन्ते न साद्यन्ते पूर्वेषां शेषेतरानाभिगृह्णातिः पूर्वोऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थातोपयामगृहीतोऽसि मधुत्येतैः प्रतिमन्त्रं सꣳसर्पोऽस्यꣳहस्पत्याय त्वेति त्रयोदशचतुर्दशौ गृह्येते ” ति ।

मन्त्रपाठस्तु—

मधुश्चेति । अत्र मध्वादिशब्दाः क्रमेण चैत्रादिमासानां वाचकाः । संसर्पाꣳहस्पतिशब्दयोरर्थोऽन्यत्र दर्शितः—

“ असंक्रान्ताविकवर्षे द्वौ चेत्संसर्प आदिमः ।
क्षयमासो द्विसंक्रान्तः स चांहस्पतिसंज्ञकः ” इति ॥

मन्त्रादावुपयामेति प्रयुञ्जीत । हे सोम त्वमुपयामगृहीतो मधुश्चासि । एवमन्यत्रापि योज्यम् ।

ऋतुग्रहं( हान् )विधत्ते—

“ यज्ञेन वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति संवत्सरेण योपायित्वा सुवर्गं लोकमायन्तमृषय ऋतुग्रहैरेवानु प्राजानन्यदृतुग्रहा गृह्यन्ते सुवर्गस्य लोकस्य प्रज्ञात्यै ” [ सं० का० ६ प्र० ५ अ० ३ ] इति ।

संवत्सरेण योपयित्वा कालविलम्बेन मोहयित्वा । यत ऋषयो मनुष्येष्वभिज्ञाः ।

संख्यां विधत्ते—

“ द्वादश गृह्यन्ते द्वादश मासाः संवत्सरः संवत्सरस्य प्रज्ञात्यै ” [ सं० का० ६ प्र० ५ अ० ३ ] इति ।

त्रयोदशचतुर्दशयोरप्येतदुपलक्षणम् । अत एव सूत्रकार आह—“ द्वादश त्रयोदश चतुर्दश वा गृह्यन्ते ” इति ।

आदावन्ते च द्वयोर्ग्रहणं विधत्ते—

१ क. ग. घ. ङ. प्रचरति । २ क. ग. घ. ङ. °ति । त्र° ।

( ऋतुग्रहाभिधानम् )

" सह प्रथमौ गृह्येते सहोत्तमौ तस्माद्द्वौद्वावृतू " [ सं० का० ६ प्र० ५ अ० ३ ] इति।

मधुश्च माधवश्चेत्येतौ प्रथमौ। तपश्च तपस्यश्चेत्येतावुत्तरौ। यस्माद्द्वयोः साहित्यमत्र विहितं तस्माद्द्वौद्वौ मासावृत्ववयवौ।

पात्रस्थसोमं वह्नौ स्रावयितुं बिलस्य पार्श्वयोर्द्वे मुखे विधत्ते—

" उभयतोमुखमृतुपात्रं भवति को हि तद्वेद यत ऋतूनां मुखम् " [ सं० का० ६ प्र० ५ अ० ३ ] इति।

ऋतूनां मुखमृतुधर्मप्रवृत्त्यारम्भो यतो यस्मात्कालादारभ्य भवति तत्को नाम वेद। तस्मादृतुपात्रस्य मुखद्वयं कुर्यात्।

अध्वर्युप्रतिप्रस्थात्रोः प्रैषमन्त्रावुत्पादयति—

ऋतुना प्रेष्येति षट्कृत्व आह षड्वा ऋतव ऋतूनेव प्रीणात्यृतुभिरिति चतुश्चतुष्पद एव पशून्प्रीणाति द्विः पुनर्ऋतुनाऽऽह द्विपद एव प्रीणाति " [ सं० का० ६ प्र० ५ अ० ३ ] इति।

हे मैत्रावरुण ऋतुना निमित्तेन होतारं प्रेष्य तमिमं मन्त्रं प्रथमतृतीयपञ्चमेष्वध्वर्युर्ब्रूयात्। द्वितीयचतुर्थषष्ठेषु प्रतिप्रस्थाता ब्रूयात्। एवं षट्कृत्वस्तद्वचनम्। तेन भवत्यृतूनां प्रीतिः। ऋतुभिः प्रेष्येति सप्तमनवमयोरध्वर्युर्ब्रूयात्। अष्टमदशमयोः प्रतिप्रस्थाता। तेन चतुरावर्तनेन पशूनां प्रीतिः। ऋतुना प्रेष्येत्यध्वर्युरेकादशे ब्रूयात्। प्रतिप्रस्थाता द्वादशे। तेन द्विरावर्तनेन मनुष्याणां पक्षिणां च प्रीतिः।

पूर्वोक्तामेव षट्चतुर्द्विसंख्यामुपजीव्योपजीवकभावेन प्रशंसति—

" ऋतुना प्रेष्येति षट्कृत्व आहर्तुभिरिति चतुस्तस्माच्चतुष्पादः पशव ऋतूनुप जीवन्ति द्विः पुनर्ऋतुनाऽऽह तस्माद्द्विपादश्चतुष्पदः पशूनुप जीवन्ति " [ सं० का० ६ प्र० ५ अ० ३ ] इति।

गवादयश्चतुष्पादः शीतोष्णादीनृतुधर्मानुपजीवन्ति। मनुष्याश्च द्विपादः पशुगतक्षीरादीनुपजीवन्ति।

स्वर्गारोहणसोपानरूपेण प्रशंसति—

" ऋतुना प्रेष्येति षट्कृत्व आहर्तुभिरिति चतुर्द्विः पुनर्ऋतुनाऽऽहाऽऽक्रमणमेव

१ क. ग. घ. ङ. रेखे। २ क. ग. घ. ङ. °त्कारणादा°। ३ ख. °ण पुनः प्र°।

तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै ” [ सं० का० ६ प्र० ५ अ० ३ ] इति ।

आक्रम्यते प्राप्यते स्वर्गोऽनेनेत्याक्रमणः सेतुः । यथा सेतोरधोभागो विशाल ऊर्ध्वभागः संकुचितस्तथैवात्र षट्चतुर्द्विसंख्या द्रष्टव्या । सोपानेष्वप्येतत्समानम् ।

अध्वर्युप्रतिप्रस्थात्रोर्युगपद्गमनं निषेधति—

“ नान्योऽन्यमनु प्र पद्येत यदन्योऽन्यमनुप्रपद्येतर्तुर्ऋतुमनु प्र पद्येतर्तवो मोहुकाः स्युः ” [ सं० का० ६ प्र० ५ अ० ३ ] इति ।

अध्वर्युप्रतिप्रस्थातृभ्यां प्रथमद्वितीयौ ग्रहौ सह गृहीतौ । ततो हविर्धानान्निष्क्रम्य गत्वाऽऽहवनीये हुत्वा पुनः प्रत्यागत्य हविर्धाने ग्रहान्तरं ग्रहीतव्यम् । तत्रैकः पुरतोऽन्यः पृष्ठत इत्येवं युगपन्न गन्तव्यं किंतु पर्यायेण । यद्यृतुग्रहे तयोः सहगमनं स्यात्तदानीमेकमृतुमन्योऽनुप्रविशेत् । तदा सांकर्यादृतवो मोहहेतवो भवेयुः ।

कालभेदवदुभयोर्मार्गभेदं विधत्ते—

“ प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्र पद्यते प्रसिद्धं प्रतिप्रस्थातोत्तरेण तस्मादादित्यः षण्मासो दक्षिणेनैति षडुत्तरेण ” [ सं० का० ६ प्र० ५ अ० ३ ] इति ।

प्रथमतः सिद्धं प्रसिद्धमादित आरभ्येत्यर्थः । यस्मादृत्विजोर्दक्षिणोत्तरौ द्वौ मार्गौ तस्मादादित्यस्यापि दक्षिणायनोत्तरायणे भवतः । अत्र सूत्रम्—“ ग्रहावादायोपनिष्क्रामतो दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता द्वार्बाहुं निश्रयमाण उपरमन्यथाध्वर्युराश्रावयति आश्रावयास्तु श्रौषड्ऋतुना प्रेष्येति वषट्कृते जुहोति निष्क्रामत्येवं प्रतिप्रस्थाता प्रपद्यते तथाऽध्वर्युः ” इति । यदा हविर्धानात्प्रतिप्रस्थाता निष्क्रामति तदाऽध्वर्युर्हविर्धानं प्रविशतीत्येवं व्यत्ययेनोभयोर्गमनम् ।

मधुश्चेत्यादिमन्त्रैरेव द्वादशमासानां प्रीतत्वात्संसर्पमन्त्रस्य निर्विषयत्वमाशङ्क्य व्याचष्टे—

“ उपयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वेत्याहास्ति त्रयोदशो मास इत्याहुस्तमेव तत्प्रीणाति ” [ सं० का० ६ प्र० ५ अ० ३ ] इति ।

अधिकमासस्त्रयोदशः ॥

---

१ ख. ततः । २ क. घ. ङ. °ता प्रपद्य° । ३ क. घ. ङ. °तेऽध्व° ।

(ऐन्द्राग्नवैश्वदेवग्रहयोरभिधानम्)

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

(अथ प्रथमाष्टके चतुर्थप्रपाठके पञ्चदशोऽनुवाकः)।

इन्द्राग्नी आ गतꣳ सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता। उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा (१)॥

(इन्द्राग्नी विꣳशतिः)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

(अथ प्रथमाष्टके चतुर्थप्रपाठके षोडशोऽनुवाकः)।

ओमासश्चर्षणीधृतो विश्वे देवास आ गत। दाश्वाꣳसो दाशुषः सुतम्। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः (१)॥

(ओमासो विꣳशतिः)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

(अथ प्रथमकाण्डे चतुर्थप्रपाठके पञ्चदशषोडशानुवाकौ)।

कल्पः—"अभक्षितेन पात्रेणाध्वर्युरैन्द्राग्नं गृह्णातीन्द्राग्नी आ गतꣳ सुतमिति ग्रहणसादनौ" इति।

पाठस्तु—

**इन्द्राग्नी इति।** हे इन्द्राग्नी सुतमभिषुतं सोमं प्रत्यागतमागच्छतम्। कीदृशं सोमम्। गीर्भिः स्तुतिभिर्युक्तमिति शेषः। नभो नभोवस्थितैः स्वर्गनिवा-

सिभिर्देवैर्वरेण्यं प्रार्थनीयम् । अस्य सोमस्य संबन्धिनं स्वकीयमंशं पातं युवां पिबतम् । कीदृशौ युवाम् । धिया बुद्ध्येषिता प्रार्थितौ । स्पष्टमन्यत् ।

कल्पः–"वैश्वदेवं शुक्रपात्रेण गृह्णात्योमासश्चर्षणीधृत इति ग्रहणसादनौ" इति ।

पाठस्तु–

**ओमास इति** । हे विश्वे देवा आगताऽऽगच्छत । कीदृशाः । ओमासो रक्षितारः । चर्षणीधृतो मनुष्यपोषकाः । अनिष्टनिवारणं रक्षणम् । इष्टप्रापणं पोषणम् । सुतमभिषुतं दाशुषो दत्तवतो यजमानस्य दाश्वांसः फलं पूर्वं दत्तवन्तः । स्पष्टमन्यत् ।

मन्त्रानुपेक्ष्यैन्द्राग्नग्रहं विधत्ते–

"सुवर्गाय वा एते लोकाय गृह्यन्ते यदृतुग्रहा ज्योतिरिन्द्राग्नी यदैन्द्राग्नमृतुपात्रेण गृह्णाति ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्यानुख्यात्यै" [ सं० का० ६ प्र० ५ अ० ४ ] इति ।

यदेतदृतुपात्रमध्वर्युहस्ते भक्षणीयेन सोमेनोपेतं तेनैन्द्राग्नं गृह्णीयात् । तथा सत्यृतुग्रहैः प्राप्तः स्वर्ग इन्द्राग्निज्योतिषा प्रकाशितो भवति ।

बलप्रदत्वेनैन्द्राग्नं प्रशंसति–

"ओजोभृतौ वा एतौ देवानां यदिन्द्राग्नी यदैन्द्राग्नो गृह्यत ओज एवाव रुन्धे" [ सं० का० ६ प्र० ५ अ० ४ ] इति ।

ग्रहान्तरं विधत्ते–

"वैश्वदेवः शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजा असावादित्यः शुक्रो यद्वैश्वदेवः शुक्रपात्रेण गृह्णाति तस्मादसावादित्यः सर्वाः प्रजाः प्रत्यङ्ङुदेति तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति" [सं० का० ६ प्र० ५ अ० ४] इति । शुक्रग्रहस्य यत्पात्रं तेन वैश्वदेवं गृह्णीयात् । वैश्वदेवीः सर्वाः प्रजाः प्रति शुक्रग्रहाभिमान्यादित्यः प्रत्यङ्प्रत्येकमभिमुख उदेति । तदेतत्सर्वस्याप्यनुभवसिद्धम् ।

तेजःप्रदत्वेन वैश्वदेवं प्रशंसति–

"वैश्वदेवः शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजास्तेजः शुक्रो यद्वैश्वदेवः शुक्रपात्रेण गृह्णाति प्रजास्वेव तेजो दधाति" [सं० का० ६ प्र० ५ अ० ४] इति ।

इन्द्राग्नी ओमास इत्येते गायत्र्यौ ॥

---

१ क. घ. ङ. °पूर्ववद्दत्त° ।

( मरुत्वतीयमाहेन्द्रग्रहाभिधानम् )

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके पञ्चदशषोडशावनुवाकौ ॥ १५ ॥ १६ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके सप्तदशोऽनुवाकः )।

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम्। विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते (१) ॥

( मरुत्वन्तꣳ षड्विꣳशतिः )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः )।

इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य। तव प्रणीती शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते (१) ॥

( इन्द्र मरुत्व एकान्नत्रिꣳशत् )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ प्रथमाष्टक चतुर्थप्रपाठके एकोनविंशोऽनुवाकः )।

मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोम-मनुष्वधं मदाय। आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳ राजाऽसि प्रदिवः सुतानाम्। उप-यामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनि-रिन्द्राय त्वा मरुत्वते ( १ ) ॥

( मरुत्वानेकान्नत्रिꣳशत् )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके विंशोऽनुवाकः )।

महाꣳ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाꣳ इव। स्तोमैर्वत्सस्य वावृधे। उपयामगृही-तोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ( १ )॥

( महानेकान्नविꣳशतिः )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठक एकविंशोऽनुवाकः )।

महाꣳ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। अस्मद्रियग्वावृधे वीर्या-योरुः पृथुः सुकृतः कर्तृभिर्भूत्। उपयामगृ-हीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ( १ ) ॥

( मरुत्वतीयमाहेन्द्रग्रहाभिधानम् )

( महान्नृवत्षड्विꣳशतिः ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

(अथ प्रथमकाण्डे चतुर्थप्रपाठके सप्तदशाष्टादशैकोनविंशविंशैकविंशानुवाकाः)।

कल्पः—" मरुत्वन्तमिति स्वेनर्तुपात्रेणाध्वर्युः पूर्वं मरुत्वतीयं गृह्णातीन्द्र मरुत्व इति स्वेन प्रतिप्रस्थातोत्तरम्[1] " इति ।

पाठस्तु—

**मरुत्वन्तमिति** । इहास्मिन्कर्मणि तमिन्द्रमाह्वयाम । कीदृशम् । मरुद्गणैरुपेतं जलस्य वर्षितारं कामानां वर्धयितारमकुत्सितारिं वृत्रादीनां शत्रूणामतिप्रबलत्वात्, दिवि भवं दुष्टानां शासितारं विश्वं पालयितुं सहिष्णुमनलसमित्यर्थः। अवसे रक्षणाय । नूतनायोग्रम्, इदानींतनेभ्यो वैरिभ्यो यजमानं रक्षितुं तद्वैरिषूग्रमित्यर्थः । सहोदां बलप्रदम् । हे मरुद्गणयुक्तेन्द्र त्वमिहास्मिन्कर्मणि सोमं पाहि पिब । यथा शा(श)र्यातिनामकस्य यजमानस्य संबन्धिनि कर्मण्यभिषुतस्य सोमस्यांशमपिबस्तद्वच्छूर तव प्रणीती प्रणयनेनानुज्ञया सुयज्ञाः पूर्वे कवयस्तव शर्मणि सुखे[2] निमित्तभूते सत्याभिमुख्येन विवासन्ति परिचैय(र)न्ति[3] तद्वदयमपि यजमान इत्यर्थः । स्पष्टमन्यत् ।

कल्पः—" अभक्षितेन पात्रेणाध्वर्युस्तृतीयं मरुत्वतीयं गृह्णाति मरुत्वाꣳ इन्द्रेति ग्रहणसादनौ " इति ।

पाठस्तु—

**मरुत्वाꣳ इन्द्रेति** । हे इन्द्र मरुद्भिर्युक्तो वर्षिता च त्वं रणाय क्रीडार्थं सोमं पिब । कीदृशम् । अनुष्वधम् । स्वधाशब्दोऽन्नवाची सवनीयपुरोडाशानाचष्टे । तामनुसृत्य[4] वर्तमानम् । किंच । मदाय हर्षाय मध्वो मधुरस्य पीतस्य सोमस्योर्मिं सारं त्वदीये जठर आसिञ्चस्व स्थापय । त्वं प्रदिवः प्राप्यस्य स्वर्गस्य सुतानां सोमानां च राजाऽसि । अत एव प्रार्थ्यसे । स्पष्टमन्यत् ।

---

१ ख. °त्तरेणोत्तर° । २ क. घ. ङ. °खे स° । ३ घ. ङ. °रिचय° । ४ क. ख. तानन्नु° ।

( मरुत्वतीयमाहेन्द्रग्रहाभिधानम् )

कल्पः–" माहेन्द्रं शुक्रपात्रेण गृह्णाति महा२ इन्द्रो य ओजसेति ग्रहण-सादनौ " इति ।

पाठस्तु–

**महा२ इन्द्र इति ।** वृष्टिमान्पर्जन्य इव य इन्द्र ओजसा बलेन महान्स इन्द्रो वत्सस्थानीयस्य यजमानस्य स्तोमैः स्तोत्रैर्वावृधे वर्धताम् । स्पष्टमन्यत् ।

अस्मिन्नेव माहेन्द्रग्रहे विकल्पितं मन्त्रान्तरमेवमाम्नायते–

**महा२ इन्द्र इति ।** अयं महानिन्द्रो नृवन्मनुष्यवदाचर्षणिप्राश्चर्षणीन्मनुष्यान्प्रति अभीष्टभोगैः पूरयतीति चर्षणिप्राः । यथा राजामात्यादिर्मनुष्यः सेवकानभीष्टभोगैरापूरयाति तद्वत् । अपि चायं द्वयोः प्रकृतिविकृतिरूपयोः सोमयागयोर्बर्हो वृद्धिर्यस्येति द्विबर्हाः । सहोभिर्बलैरमिनोऽमित उपमानरहितः । अस्मद्रियगस्मत्सदृशो वावधे वृद्धिं प्राप्तः । यथा वयमस्यानुग्रहाद्वृद्धिं प्राप्तास्तथैवायमप्यस्मदीयैर्हविर्भिर्विवृद्धः । एतदेव प्रपञ्च्यते–वीर्याय सामर्थ्यसिद्धये कर्तृभिर्यजमानैरयं सुकृतो भूत्सुष्ठु वर्धितोऽभूत् । कीदृशी तस्य वृद्धिः । उरुर्यशसा विपुलः पृथुर्बलेन विस्तृतः । स्पष्टमन्यत् । मन्त्रा उपेक्षिताः ।

त्रीन्मरुत्वतीयग्रहान्विधत्ते–

" इन्द्रो मरुद्भिः सांविद्येन माध्यंदिने सवने वृत्रमहन्यन्माध्यंदिने सवने मरुत्वतीया गृह्यन्ते वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते " [ सं० का० ६ प्र० ५ अ० ५ ] इति ।

सांविद्यं संप्रतिपत्तिरैकमत्यम् ।

तेषां ग्रहाणां पात्रं विधत्ते–

" तस्य वृत्रं जघ्नुष ऋतवोऽगृह्यन्त्स ऋतुपात्रेण मरुत्वतीयानगृह्णात्ततो वै स ऋतून्प्राजानाद्यदृतुपात्रेण मरुत्वतीया गृह्यन्त ऋतूनां प्रज्ञात्यै " [ सं० का० ६ प्र० ५ अ० ५ ] इति ।

ग्रहत्रयं वज्ररूपेण प्रशंसति–

" वज्रं वा एतं यजमानो भ्रातृव्याय प्र हरति यन्मरुत्वतीया उदेव प्रथमेन गच्छति प्र हरति द्वितीयेन स्तृणुते तृतीयेन " [ सं० का० ६ प्र० ५ अ० ५ ] इति ।

---

१ क. घ. ङ. °तिरू° । २ क. घ. ङ. °धं सप्र° ।

( मरुत्वतीयमाहेन्द्रग्रहाभिधानम् )

स्तृणुते हिनस्ति।

धनुःसंपादनरूपेण[1] पुनः प्रशंसति—

" आयुधं वा एतद्यजमानः सꣳस्कुरुते यन्मरुत्वतीया धनुरेव प्रथमो ज्या द्वितीय इषुस्तृतीयः " [ सं० का० ६ प्र० ५ अ० ५ ] इति।

संपादितस्य धनुषः प्रयोगरूपेण[2] पुनः प्रशंसति—

" प्रत्येव प्रथमेन धत्ते वि सृजति द्वितीयेन विध्यति तृतीयेन " [ सं० का० ६ प्र० ५ अ० ५ ] इति।

प्रतिधत्त एव बाणं संदधात्येव।

प्राणादिप्रीणयितृत्वरूपेण पुनः प्रशंसां कर्तुमाख्यायिकामाह—

" इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानः स हरितोऽभवत्स एतान्मरुतीयानात्मस्परणानपश्यत्तानगृह्णीत प्राणमेव प्रथमेनास्पृणुतापानं द्वितीयेनाऽऽत्मानं तृतीयेन " [ सं० का ६ प्र० ५ अ० ५ ] इति।

प्रबलेनारिकुलेन सह विरोधरूपमपराधं कृतवानस्मीति भीत्या परां परावतमत्यन्तदूरं पलाय्य स हरितो विवर्णोऽभवत्। आत्मस्परणान्स्वस्य भीतिनिवारणेन प्रीणयितॄन्प्रतिजग्राह प्राणापानक्षेत्रज्ञानां प्रीतिरभूत्।

इदानीं प्रशंसति—

" आत्मस्परणा वा एते यजमानस्य गृह्यन्ते यन्मरुत्वतीयाः प्राणमेव प्रथमेन स्पृणुतेऽपानं द्वितीयेनाऽऽत्मानं तृतीयेन " [ सं० का० ६ प्र० ५ अ० ५ ] इति।

अथ माहेन्द्रग्रहं विधत्ते—

"इन्द्रो वृत्रमहन्तं देवा अब्रुवन्महान्वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वꣳ स एतं माहेन्द्रमुद्धारमुदहरत वृत्रꣳ हत्वाऽन्यासु देवतास्वधि यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरतेऽन्यासु प्रजास्वधि " [ सं० का० ६ प्र० ५ अ० ५ ] इति।

उद्ध्रियते गृह्यत इत्युद्धारो ग्रहस्तमुदहरतागृह्णात्[3]। वृत्रहननेनोद्धारेणैवाय[4]मन्यासु देवतासु मध्येऽध्यधिकोऽभवत्[5]।

---

१ क. °ण प्र°। २ क. घ. ङ. °ण प्र°। ३ क. घ. ङ. ग्रहः। उद्°। ४ क. ग. घ. ङ. °रेण वाऽय°। ३ क. ग. घ. ङ. °को भवेत्।

माहेन्द्रस्य पात्रं विधत्ते—

" शुक्रपात्रेण गृह्णाति यजमानदेवत्यो वै माहेन्द्रस्तेजः शुक्रो यन्माहेन्द्रꣳ शुक्रपात्रेण गृह्णाति यजमान एव तेजो दधाति " [ सं० का० ६ प्र० ५ अ० ५ ] इति ।

मरुत्वन्तमिन्द्र मरुत्वो मरुत्वान्महाꣳ इन्द्रो नृवदित्येतास्त्रिष्टुभः । महाꣳ इन्द्रो य ओजसेति गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके सप्तदशाष्टादशैकोनविंशविंशैकविंशानुवाकाः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ) ।

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते । उपयामगृहीतोऽस्यादित्येभ्यस्त्वा । कदा चन प्र युच्छस्युभे नि पासि जन्मनी । तुरीयाऽऽदित्य सवनं त इन्द्रियमा तस्थावमृतं दिवि । यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत् । विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामि ( १ ) ॥

( वः सप्ततिꣳशतिश्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( आदित्यग्रहाभिधानम् )

( अथ प्रथमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ) ।

कल्पः—"आदित्यपात्रेण य आदित्यस्थाल्यां द्विदेवत्यग्रहसंपातास्तेभ्यः सोमं गृह्णाति कदा चन स्तरीरसीति कदा चन प्र युच्छसीति शृतातङ्क्यं दधि यज्ञो देवानामिति पुनः सोमं गृहीत्वा विवस्व आदित्येति तस्मिन्ग्रावाणमुपांशुसवनमवधाय तेनैनं मेलयित्वा या दिव्या वृष्टिस्तया त्वा श्रीणामीति शृतातङ्क्येन दध्ना पयसा वा वृष्टिकामस्य श्रीत्वा तद्ग्रावाणमुद्गृह्णाति यद्युद्गृहीतस्य ताजग्बिन्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरमवर्षुको न सादयति" इति ।

प्रथममन्त्रपाठस्तु—

**कदा चनेति**। हे इन्द्र त्वं कदाचिदपि स्तरीर्हिंसको न भवसि। किंतु दाशुषे हविर्दत्तवते यजमानाय फलप्रदानार्थं सश्चसि गच्छसि । कुत्र । उपोपेन्नु यजमानस्यात्यन्तसमीप एव । हे मघवन्भूय इन्नु पुनरेव देवस्य तव दानं देयं हविः पृच्यते संबध्यते यजमानेन हविर्दीयत इत्यर्थः । स्पष्टमन्यत् ।

उत्तरमन्त्रस्तु—

**कदा चन प्रेति** । प्रशब्दो निषेधार्थः । युच्छिधातुः प्रमादार्थः । हे इन्द्र कदाचिदपि न प्रमाद्यसि किंतु वर्तमानमागामि चेत्युभे यजमानस्य जन्मनी निपासि नितरां पालयसि । तृतीयमित्यस्मिन्नर्थे वर्णव्यत्ययेन तुरीयशब्दः प्रयुक्तः । हे आदित्य तृतीयसवनं ते त्वदीयं, तस्मिन्सवन इन्द्रियाभिवृद्धिकारणममृतसमानं दधि दिवि द्युलोकसमाने हविर्धान आभिमुख्येन स्थितम् ।

उत्तरमन्त्रस्तु—

**यज्ञ इति** । अयं यज्ञपुरुषो देवानां सुम्नं सुखं प्रत्येति जानात्युत्पादयतीत्यर्थः । हे आदित्या अस्मान्मृडयन्तः सुखयन्तो भवथ( त )। युष्माकं सुमतिरनुग्रहबुद्धिरर्वाचीनेष्वस्मासु प्रवृत्ता सत्याववृत्यादावर्तताम् । या सुमतिरंहोश्चिदस्मदीयपापाद्व्यावर्तत(ते ) । पापं विनाशयतीत्यर्थः । सा सुमतिर्वरिवोवित्तराऽसदतिशयेन परिचर्याभिज्ञा भवतु ।

उत्तरमन्त्रस्तु—

**विवस्व इति** । हे विवस्वो विशिष्टनिवासाऽऽदित्य विवस्वन्नामक एष तृतीयस्तव सोमस्तेन सोमदर्शनेन मन्दस्व हृष्टो भव । तेन सोमपानेन तृप्तो भव। तव वर्पयितारो वयमपि तृप्ता भूयास्म ।

---

१ क. ग. घ. ङ. °तास्तदीयसो° । २ ख. °त्वा ग्रावा° । ३ ख. °व च दे° ।

उत्तरमन्त्रस्तु—

या दिव्येति । हे सोम दिव्यवृष्टिहेतुना दध्ना त्वां मिश्रयामि ।

अथाऽऽदित्यग्रहं विधातुमाख्यायिकामाह—

"अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या उच्छेषणमददु-स्तत्प्राश्नात्सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त" [ सं० का० ६ प्र० ५ अ० ६ ] इति ।

साध्येभ्यः साध्यनामकेभ्यः । आधानप्रकरणोक्तविधानेन संपादितो ब्रह्मौदनः। उच्छेषणं हुतशिष्टम् ।

पुत्रचतुष्टयेनाप्यनिवृत्ते कामे पुनः प्रयुक्तवतीत्याह—

" सा द्वितीयमपचत्साऽमन्यतोच्छेषणान्म इमेऽज्ञत यदग्रे प्राशिष्यामीतो मे वसीयाश्सो जनिष्यन्त इति साऽग्रे प्राश्नात्सा रेतोऽधत्त तस्यै व्यृद्धमाण्डमजायत" [ सं० का० ६ प्र० ५ अ० ६ ] इति ।

इमेऽज्ञत चत्वारोऽजायन्त । अत्यन्तधनिकपुत्रोत्पत्त्यपेक्षया होमात्प्रागेव प्राशनेनैवापराधेन तस्या आण्डं गर्भस्थानं व्यृद्धं गर्भशून्यमभवत् ।

व्यृद्धिनिवारणाय पुनः प्रयुक्तवतीत्याह—

" साऽऽदित्येभ्य एव तृतीयमपचद्भोगाय म इदश्श्रान्तमस्त्विति तेऽब्रुवन्वरं वृणामहै योऽतो जायाता अस्माकश्स एकोऽसद्योऽस्य प्रजायामृद्ध्याता अस्माकं भोगाय भवादिति ततो विवस्वानादित्योऽजायत तस्य वा इयं प्रजा यन्मनुष्यास्ता-स्वेक एवर्द्धो यो यजते स देवानां भोगाय भवति"[सं० का०६ प्र०५ अ०६] इति ।

इदमाण्डं श्रान्तं गर्भाभावेन पुरा संतप्तमासीत् । इदानीं मम गर्भधारणेनादि-त्यैर्भोगायास्त्वित्युक्त्वा ब्रह्मौदनमादित्येभ्योऽजुहोत् । त(अ)त आण्डाद्यो जायते सोऽस्माकं मध्य एक आदित्योऽस्तु । अस्याऽऽदित्यस्य संबन्धिन्यां प्रजायां यः समृद्धः सोऽस्माकं भोगाय भवत्विति वरः । तत आण्डाद्विवस्वान्नामक आदित्य उत्पन्नः । ये मनुष्यास्ते तस्याऽऽदित्यस्य प्रजा वृष्टिद्वारेणोत्पादकत्वात् । तासु प्रजासु यो यजते स एव समृद्धत्वाद्देवानां भोगाय भवति ।

इत्यमाख्यायिकया ग्रहदेवतां निरूप्य ग्रहणापादानं निरूपयितुमाख्यायिकान्त-रमाह—

( आदित्यग्रहाभिधानम् )

"देवा वै यज्ञाद्रुद्रमन्तरायन्त्स आदित्यानन्वाक्रमत ते द्विदेवत्यान्प्रापद्यन्त तान्न प्रति प्रायच्छन्तस्मादपि वध्यं प्रपन्नं न प्रति प्र यच्छन्ति" [ सं० का० ६ प्र० ५ अ० ६ ] इति।

देवा यज्ञं कुर्वन्तस्तस्मिन्यज्ञे रुद्रं विस्मृतवन्तः। स च रुद्र आदित्याननुप्राप्याबाधत। तेन बाधिता आदित्या ऐन्द्रवायवादिग्रहाञ्शरणं प्रपन्नाः। ते च ग्रहदेवास्तानादित्यान्रुद्राय नैव प्रत्यर्पितवन्तः। तस्माल्लोके वैरवध्योऽपि चोरादिर्यदि शरणं प्राप्नुयात्तदा तं परेभ्यो नैव प्रत्यर्पयन्ति।

आदित्यग्रहं विधत्ते—

"तस्माद्द्विदेवत्येभ्य आदित्यो निर्गृह्यते" [ सं० का० ६ प्र० ५ अ० ६ ] इति।

यस्मादादित्या द्विदेवत्यग्रहान्प्रपन्नास्तस्माद्द्विदेवत्यग्रहेभ्यो निष्कृष्याऽऽदित्यग्रहं गृह्णीयात्।

आदित्यानां हुतशेषेण ब्रह्मोदनेनोत्पन्नत्वात्तेषां द्विदेवत्यशेषाद्ग्रहो युक्त इत्याह—

"यदुच्छेषणादजायन्त तस्मादुच्छेषणाद्गृह्यते" [ सं० का० ६ प्र० ५ अ० ६ ] इति।

ग्रहणे कदा चनेत्यादिमन्त्रांस्त्रीन्विनियुङ्क्ते—

"तिसृभिर्ऋग्भिर्गृह्णाति माता पिता पुत्रस्तदेव तन्मिथुनमुल्वं गर्भो जरायु तदेव तन्मिथुनम्" [ सं० का० ६ प्र० ५ अ० ६ ] इति।

मातापितृरूपं मिथुनं पुत्रेण सह तदेकं(व) त्रयात्मकम्। गर्भवेष्टनोदकमुल्वं, तद्वेष्टनं पट्टसदृशं जरायुनामकम्। तदुभयरूपं मिथुनं गर्भेण सह त्रयात्मकम्। तेन सदृशमिदमृक्त्रयात्मकम्।

अस्मिन्ग्रहे दधिमेलनं विधत्ते—

"पशवो वा एते यदादित्य ऊर्ग्दधि दध्ना मध्यतः श्रीणात्यूर्जमेव पशूनां मध्यतो दधाति" [ सं० का० ६ प्र० ५ अ० ६ ] इति।

आदित्यस्य वृष्टिद्वारा पशूपकारित्वात्पशुत्वम्। दध्नो भोज्यत्वादूर्क्त्वम्। तेन दध्ना सोमं मध्ये मेलयेत्। प्रथममन्त्रेण सकृत्सोमं गृहीत्वा तृतीयमन्त्रेण पुनर्ग्रहीष्यमाणो मध्यममन्त्रेण दधि प्रक्षिपेदित्यर्थः।

---

१ क. ख. घ. ङ. °यत उभयरू°। २ क. घ. ङ. °कमिति त°। ३ ख. °माणे म°।

दृष्ण: किं(कं)चिद्गुणं विधत्ते—

" शृतातङ्क्येन मेध्यत्वाय तस्मादामा पक्वं दुहे " [ सं० का० ६ प्र० ५ अ० ६ ] इति ।

शीते बुध्नमातनक्तीति वचनात्तांनाम्यभाण्डे क्षीरे सम्यक्शीते सति पश्चा-दातश्चनीयम् । इह तुष्ण एव क्षीरे यदातश्चनेन निष्पन्नं दधि तेन मेळनीयम् । यस्मादत्र तप्तं क्षीरं तस्माल्लोकेऽपि आमा पाकरहिता गौः पक्वं धारोष्णरूपं क्षीरं दुहे दुग्धे प्रयच्छति ।

ग्रहस्याऽऽच्छादनं विधत्ते—

"पशवो वा एते यदादित्यः परिश्रित्य गृह्णाति प्रतिरुध्यैवास्मै पशून्गृह्णाति" [ सं० का० ६ प्र० ५ अ० ६ ] इति ] ।

अन्यतः पशून्निरुध्य यजमानार्थमेव तान्गृहीतवान्भवति । अत्र सूत्रम्— " दर्भैर्हस्तेन वाऽपिधायोत्तिष्ठति " इति ।

तदेतदेवाऽऽदित्यग्रहपरिश्रयणमनूद्य प्रशंसति—

" पशवो वा एते यदादित्य एष रुद्रो यदग्निः परिश्रित्य गृह्णाति रुद्रादेव पशूनन्तर्दधाति " [ सं० का० ६ प्र० ५ अ० ६ ] इति ।

अनेन ग्रहरूपाणां पशूनां घातकाद्रुद्राद्व्यवधानं भवति ।

मन्त्रमादित्यपरं ग्रावपरतया व्याचष्टे—

" एष वै विवस्वानादित्यो यदुपाꣳशुसवनः स एतमेव सोमपीथं परि शय आ तृतीयसवनाद्विवस्व आदित्यैष ते सोमपीथ इत्याह विवस्वन्तमेवाऽऽदित्यꣳ सोमपीथेन समर्धयति " [ सं० का० ६ प्र० ५ अ० ६ ] इति ।

विवस्वन्नामकस्याऽऽदित्यस्य ग्रहाभिमानित्वाद्ग्राव्णस्तद्रूपत्वम् । स च ग्रावै-तमेवाऽऽदित्यग्रहगतं सोमं[3] तृतीयसवनसमाप्तिपर्यन्तं परितः शेते । अतो ग्रावविषयत्वं मन्त्रस्य युक्तम् ।

काम्यदधिश्रयणं समन्त्रकं विधत्ते—

" या दिव्या वृष्टिस्तया त्वा श्रीणामीति वृष्टिकामस्य श्रीणीयाद्वृष्टिमेवाव रुन्धे यदि ताजक्प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरमवर्षुकः " [ सं० का० ६ प्र० ५ अ० ६ ] इति ।

---

१ ख. °देवाऽऽ° । २ ख. °न्त्रगतमादित्यपदं ग्रा° । ३ ख. °मं पातुं तृ° ।

( आदित्यग्रहाभिधानम् )

अस्यार्थः पूर्वमेव सूत्रे स्पष्टमुदाहृतः।

ग्रहान्तरवत्सादनादिप्रसक्तौ प्रतिषेधति—

"न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेन्न हुत्वाऽन्वीक्षेत यदन्वीक्षेत चक्षुरस्य प्रमायुकꣳ स्यात्तस्मान्नान्वीक्ष्यः" [ सं० का० ६ प्र० ५ अ० ६ ] इति।

एष ते योनिरिति मन्त्रस्यानाम्नातत्वान्नात्र गृहीतस्य सादनं सिद्धम्। किंतु तथैव प्रचारः। असन्नाद्गर्भाशयव्यतिरिक्तस्थानेऽपतितात्। यथा ग्रहान्तरं वषट्कारानुवषट्कारयोर्भिन्नं हूयते नात्र तथा किंतु सकृदेव। अनुवषट्कारे तु प्रजा अनुलक्ष्य रुद्रं क्रूरं प्रेरयेत्। अन्वीक्षणेऽध्वर्युरन्धो भवेत्। इत आरभ्य च्छन्दो लक्षणग्रन्थादुन्नेतव्यम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः॥ २२॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके त्रयोविंशोऽनुवाकः )।

वाममद्य संवितर्वाममु श्वो दिवेदिंवे वाममस्मभ्यꣳ सावीः। वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम। उपयामगृहीतोऽसि देवाय त्वा सवित्रे ( १ )॥

( वामं चतुर्विꣳशतिः )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके त्रयोविंशोऽनुवाकः॥ २३॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके चतुर्विंशोऽनुवाकः )।

अदब्धेभिः सवितः पायुभिष्ट्ꣳ शिवेभिरद्य परि पाहि नो गयम्। हिरण्यजिह्वः सुवि-

---

१ क. घ. ङ. तु प्र°।

ताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ।
उपयामगृहीतोऽसि देवाय त्वा सवित्रे ( १ ) ॥
( अदब्धेभिस्त्रयोविꣳशतिः ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
चतुर्थप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके पञ्चविंशोऽनुवाकः ) ।

हिरण्यपाणिमूतये सवितारमुप ह्वये । स
चेत्ता देवता पदम् । उपयामगृहीतोऽसि देवाय
त्वा सवित्रे ( १ ) ॥
( हिरण्यपाणिं चतुर्दश ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
चतुर्थप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके षड्विंशोऽनुवाकः ) ।

सुशर्माऽसि सुप्रतिष्ठानो बृहदुक्षे नम एष
ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ( १ ) ॥
( सुशर्मा द्वादश ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
चतुर्थप्रपाठके षड्विंशोऽनुवाकः ॥ २६ ॥

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठके त्रयोविंशचतुर्विंशपञ्चविंशषड्विंशानुवाकाः )

कल्पः—" वाममद्य सवितरित्यन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृहीत्वा न सादयति " इति ।

पाठस्तु—

**वाममद्येति** । हे सवितरद्यास्मभ्यं वामं वननीयं कर्मफलं सावीः प्रेरय देहीत्यर्थः । श्वोऽपि वामं सावीः । तत ऊर्ध्वं दिने दिने वामं सावीः । हे देव वामस्य

( सावित्रवैश्वदेवग्रहाभिधानम् )

वननीयस्य भूरेर्विस्तीर्णस्य क्षयस्य स्वर्गनिवासस्येच्छयाऽयाऽनया अद्वायुक्कया बुद्ध्या वामभाजो वननीयकर्मानुष्ठानवन्तः स्याम । स्पष्टमन्यत् ।

अत्रैव विकल्पितो द्वितीयो मन्त्र एवमाम्नायते—

**अदब्धेभिरिति** । हे सवितस्त्वमदब्धेभिरहिंसितैः पायुभिः पालकैः शिवेभिर्मङ्गलैरनुग्रहविशेषैर्नोऽस्माकं गयं गृहं परिपाहि सर्वतो रक्ष । हिरण्यजिह्वो हिता रमणीया जिह्वा यस्य सोऽस्माकं हितं प्रियं च वदतीत्यर्थः । तादृशस्त्वं सुविताय सुष्ठुगमनाय स्वर्गप्राप्तये नव्यसे नूतनाय तदिदं कर्म रक्ष । नोऽस्माकमघशंसः पापापवादनिन्दको भवान्माकिरीशत शक्तो मा भूत् ।

तृतीयो मन्त्रो विकल्पित एवमाम्नायते—

**हिरण्यपाणिमिति** । अस्मभ्यं दातुं हिरण्यं पाणौ यस्य स हिरण्यपाणिः । तादृशं सवितारमुपगम्य ह्वय आह्वयामि । किमर्थम् । ऊतये रक्षणाय । स सविता देवतारूपः पदमस्मद्योग्यं स्थानं चेत्ता ज्ञाता ।

कल्पः—“ एतेनैव सशेषेण वैश्वदेवं पूतभृतो गृह्णाति उपयामगृहीतोऽसि सुशर्माऽसीति ग्रहणसादनौ ” इति ।

पाठस्तु—

**सुशर्मेति** । हे वैश्वदेवग्रह शोभनं शर्म यस्य तव स त्वं सुशर्माऽसि । सुष्ठु प्रतिष्ठानं पात्रे स्थितिर्यस्यासौ सुप्रतिष्ठानोऽसि । उक्षे शस्त्रे शस्यमानाय तुभ्यं बृहन्नमोऽस्तु । स्पष्टमन्यत् ।

साविश्रग्रहं[1] विधत्ते[2]—

“ अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति प्रजापतिर्वा एष यदाग्रयणः प्रजानां प्रजननाय ” [ सं० का० ६ प्र० ५ अ० ७ ] इति ।

आग्रयणग्रहस्य कर्मनिष्पत्तिद्वारेण प्रजापालकत्वात्प्रजापतित्वादाग्रयणाद्ग्रहणं प्रजोत्पत्त्यै भवति ।

सादनादिकं पूर्ववन्निषेधति—

“ न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेत् ” [ सं० का० ६ प्र० ५ अ० ७ ] इति ।

---

१ क. घ. ङ. तत्रैव । २ क. घ. ङ. एवमेव ।

विहितं सावित्रग्रहं प्रशंसति--

"एष वै गायत्रो देवानां यत्सवितैष गायत्रियै लोके गृह्यते यदाग्रयणो यद- न्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति स्वादेवैनं योनेर्निर्गृह्णाति" [ सं० का० ६ प्र० ५ अ० ७ ] इति ।

तत्सवितुर्वरेण्यमित्याम्नातत्वाद्देवानां मध्ये सविता गायत्रीसंबद्धः । आग्रय- णश्च गायत्र्याः स्थाने प्रातःसवने गृह्यते । अनेन संबन्धेनाऽऽग्रयणः सावित्रस्य स्वकीयो योनिः ।

सावित्रस्य तृतीयसवनसंबन्धं विधत्ते---

"विश्वे देवास्तृतीयꣳ सवनं नोदयच्छन्ते सवितारं प्रातःसवनभागꣳ सन्तं तृतीयसवनमभि पर्यणयन्ततो वै ते तृतीयꣳ सवनमुदयच्छन्यत्तृतीयसवने सावित्रो गृह्यते तृतीयस्य सवनस्योद्यत्यै" [ सं० का० ६ प्र० ५ अ० ७ ] इति ।

विश्वे देवाः स्वकीयं तृतीयसवनमुद्वोढुं नाशक्नुवन् । प्रातःसवने भागः सवि- तुर्युक्तस्तस्य गायत्रत्वात् । तादृशमपि सहकारित्वेन समानीय तृतीयसवनमुदवहन् । अतोऽत्र सावित्रो युक्तः ।

वैश्वदेवग्रहं विधत्ते---

"सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः सविता प्रसवानामीशे यत्सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सवितृप्रसूत एवास्मै प्रजाः प्र जनयति" [ सं० का० ६ प्र० ५ अ० ७ ] इति ।

यद्यपि पूर्वमन्तर्यामपात्रं तथाऽपीदानीं सवितृपात्रं संपन्नम् । कलशाद्द्रोण- कलशात् । प्रजानां विश्वैर्देवैः पाल्यत्वेन वैश्वदेवत्वम् । सर्वदेवसाधारणसोमाधा- रत्वात्कलशस्य वैश्वदेवत्वम् ।

सावित्रशेषे सोमे वैश्वदेवं विधत्ते---

"सोमे सोममभि गृह्णाति रेत एव तद्दधाति" [ सं० का० ६ प्र० ५ अ० ७ ] इति ।

अत एव मन्त्रे सुप्रतिष्ठान इत्येतदुपपन्नमित्याह---

"सुशर्माऽसि सुप्रतिष्ठान इत्याह सोमे हि सोममभिगृह्णाति प्रतिष्ठित्यै" [ सं० का० ६ प्र० ५ अ० ७ ] इति ।

मन्त्रपदानां किंचिद्विशेषविषयत्वं दर्शयति---

---

१ स्व, °नां कंचिद्विशेषं द° ।

( पात्नीवतग्रहाभिधानम् )

" एतस्मिन्वा अपि ग्रहे मनुष्येभ्यो देवेभ्यः पितृभ्यः क्रियते सुशर्माऽसि सुप्रतिष्ठान इत्याह मनुष्येभ्य एवैतेन करोति बृहदित्याह देवेभ्य एवैतेन करोति नम इत्याह पितृभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णाति " [ सं० का० ६ प्र० ५ अ० ७ ] इति।

अपि वैतस्मिन्नेव वैश्वदेवग्रहे मन्त्रपदैर्मनुष्यादीनां सूचितत्वात्सर्वार्थमिदं ग्रहणम्। तत्र सुशर्मशब्देन समीचीनसुखार्थिनो मनुष्याः सूचिताः। बृहच्छब्देनाधिकमहिमोपेता देवाः। नमःशब्देन नमस्कारप्रियाः पितरः।

सादनमन्त्रे विश्वेभ्य इत्येतत्सर्वार्थत्वाद्युक्तमित्याह—

" एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येषः " [ सं० का० ६ प्र० ५ अ० ७ ] इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके त्रयोविंशचतु-
र्विंशपञ्चविंशषड्विंशानुवाकाः॥ २३॥
२४॥ २५॥ २६॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके सप्तविंशोऽनुवाकः )।

बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः
पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३ इ पत्नी वा ३ः
सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा [ १ ]॥

( बृहस्पतिसुतस्य पञ्चदश )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
चतुर्थप्रपाठके सप्तविंशोऽनुवाकः॥ २७॥

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठके सप्तविंशोऽनुवाकः )।

कल्पः—" उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इत्युपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहीत्वा न सादयत्यग्ना३ इ पत्नीवा३ इति वषट्कृते जुहोति नानुवषट्करोत्यपि वोपांशु वषट्कुर्यात् " इति।

पाठस्तु—

बृहस्पतीति । हे इन्दो सोम तव संबन्धिनं ग्रहं गृह्णामि । कीदृशम् । पत्नीवद्देवताकम् । कीदृशस्य तव । इन्द्रियावतो वीर्यवतः । बृहस्पतिर्यजमानः । बृहतो यज्ञस्य परिपालनात् । तेन सुतस्याभिषुतस्य । हे पत्नीवन्नग्ने त्वष्ट्रा देवेन सजूः सह सोमं पिब स्वाहा हुतमिदमस्तु ।

पात्नीवतस्य ग्रहस्य पात्रं विधत्ते-

" प्राणो वा एष यदुपाꣳशुर्यदुपाꣳशुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्येते प्राणमेवानु प्रयन्ति प्राणमनूद्यन्ति " [ सं० का० ६ प्र० ५ अ० ८ ] इति ।

उपांशोः प्राणत्वं पूर्वमुक्तम् । वाचस्पतये पवस्वेत्यनेन गृहीतः प्रथमो ग्रहः । बृहस्पतिसुतस्येति गृह्यमाणश्चोत्तमो ग्रहः । यद्यपि दधिग्रहः पूर्वभावी तथाऽपि नासौ सोमग्रहः । अदाभ्यांशू सोमग्रहावपि न तौ नित्यौ । तस्मान्नित्येषु सोमग्रहेषूपांशुरेव प्रथमः । हारियोजनस्य पश्चाद्भावित्वेऽप्यग्निष्टोमसाम्नि समाप्ते सति यज्ञशेषत्वेनानुष्ठानम् । तस्मादग्निष्टोमापेक्षया पात्नीवतस्योत्तमत्वम् । तयोः प्रथमोत्तमयोरुपांशुपात्रेण ग्रहणं कुर्यात् । तथा सति प्राणमेवानुसृत्य प्रयन्ति प्रारभन्ते । उद्यन्ति समापयन्ति ।

पात्नीवतग्रहं विधत्ते-

" प्रजापतिर्वा एष यदाग्रयणः प्राण उपाꣳशुः पत्नीः प्रजाः प्र जनयन्ति यदुपाꣳशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति प्रजानां प्रजननाय तस्मात्प्राणं प्रजा अनु प्र जायन्ते " [ सं० का० ६ प्र० ५ अ० ८ ] इति ।

पत्नीरिति प्रथमा । प्राणमनु प्राणयुक्ताः प्रजा उत्पद्यन्ते ।

विहितं ग्रहं प्रशंसति-

" देवा वा इतइतः पत्नीः सुवर्गं लोकमजिगाꣳसन्ते सुवर्गं लोकं प्राजानन्त एतं पात्नीवतमपश्यन्तमगृह्णत ततो वै ते सुवर्गं लोकं प्राजानन्यत्पात्नीवतो गृह्यते सुवर्गस्य लोकस्य प्रज्ञात्यै " [ सं० का० ६ प्र० ५ अ० ८ ] इति ।

[देवाः] पत्नीरित इतः पात्नीवतग्रहमुपेक्ष्यान्यस्माद्ग्रहात् [स्वर्गं ज्ञातुमिच्छन्तोऽपि न प्रज्ञातवन्तः । पात्नीवतग्रहणेन तु प्रज्ञातवन्तः। इत्येतद्ग्रहो गृह्यते ।

एतद्गृहे घृतमेलनं विधत्ते-

" स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणस्तं घृतं वज्रं कृत्वाऽघ्नन्तं निरिन्द्रियं भूतमगृह्णन्तस्मात्स्त्रियो निरिन्द्रिया अदायादीरपि पापात्पुꣳस उपस्तितरं वदन्ति

१ क. घ. ङ. °स्मात् ।

( पात्नीवतग्रहाभिधानम् )

यद्घृतेन पात्नीवतꣳ श्रीणाति वज्रेणैवैनं वशे कृत्वा गृह्णाति ” [ सं० का० ६ प्र० ५ अ० ८ ] इति।

नातिष्ठत स्त्रीदेवताकत्वमसहमानः स्वात्मानं न प्रकाशितवान्। अघ्नन्नताडयन्। निरिन्द्रियं भूतं निर्वीर्यं जातम्। यस्मात्स्त्रीदेवताभ्यो गृह्यमाणः सोमो निःसामर्थ्यस्तस्माल्लोके स्त्रियः सामर्थ्यरहिता अपत्येषु दायभाजो न भवन्ति। पापात्पतितादपि पुंसोऽप्युपास्तितरं क्षीणतरं स्त्रीस्वरूपं वदन्ति।

आम्नातस्य बृहस्पतिसुतस्येति मन्त्रस्य शेषं पूरयित्वा व्याचष्टे—

“उपयामगृहीतोऽसीत्याहेयं वा उपयामस्तस्मादिमां प्रजा अनु प्र जायन्ते”। [ सं० का० ६ प्र० ५ अ० ८ ] इति।

उपेताः प्रजा येच्छति उत्पादनधारणादिना व्यवस्थापयतीत्युपयामो भूभागविशेषः।

बृहस्पतिशब्दस्यैव प्रयोगेऽभिप्रायमाह—

“ बृहस्पतिसुतस्य त इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयति ” [ सं० का० ६ प्र० ५ अ० ८ ] इति।

इन्दुशब्दो द्रवत्वसाम्येन रेत उपलक्षयतीत्याह—

“ इन्दो इत्याह रेतो वा इन्दु रेत एव तद्दधाति ” [ सं० का० ६ प्र० ५ अ० ८ ] इति।

इन्द्रियशब्देन तत्कार्यभूताः प्रजा उपलक्ष्यन्त इत्याह—

“ इन्द्रियाव इत्याह प्रजा वा इन्द्रियं प्रजा एवास्मै प्र जनयति ” [ सं० का० ६ प्र० ५ अ० ८ ] इति।

अग्निशब्दपत्नीवच्छब्दयोरभिप्रायं दर्शयति—

अग्ना३ इत्याहाग्निर्वै रेतोधाः पत्नीव इत्याह मिथुनत्वाय ” [ सं० का० ६ प्र० ५ अ० ८ ] इति।

त्वष्टृशब्दप्रयोजनमाह—

“ सजूर्देवेन त्वष्ट्रा सोमं पिबेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति ” [ सं० का० ६ प्र० ५ अ० ८ ] इति।

पात्नीवतग्रहस्य होममन्त्रे त्वष्टुः परामर्शो न युक्त इति शङ्कां वारयति—

“ देवा वै त्वष्टारमजिघाꣳसन्त्स पत्नीः प्रापद्यत तं न प्रति प्रायच्छन्त-

---

१ ख. यमयति। २ क. घ. ङ. °वसा°।

स्मादपि वध्यं प्रपन्नं न प्रति प्र यच्छन्ति तस्मात्पात्नीवते त्वष्ट्रेऽपि गृह्यते" [ सं० का० ६ प्र० ५ अ० ८ ] इति ।

यस्मात्पत्नीः शरणं गतस्तस्मात्त्वष्टा पत्नीरनुभागी भवति ।

सादनस्य प्रसक्तौ तद्वारयति—

" न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते" [सं०का०६प्र०५अ०८]इति ।

अनुवषट्कारे तूपांशुत्वगुणं विधत्ते—

" नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेद्यन्नानुवषट्कुर्यादशान्तमग्नीत्सोमं भक्षयेदुपांश्वनु वषट्करोति न रुद्रं प्रजा अन्ववसृजति शान्तमग्नीत्सोमं भक्षयति " [ सं० का० ६ प्र० ५ अ० ८ ] इति ।

अन्ववसृजेदनुप्राप्य सृष्टिं वारयेत् । अशान्तमनिष्टकरम् ।

अग्नीन्नेष्टोरध्वर्योः प्रैषमन्त्रमुत्पादयति—

" अग्नीन्नेष्टुरुपस्थमा सीद नेष्टः पत्नीमुदानयेत्याहाग्नीदेव नेष्टरि रेतो दधाति नेष्टा पत्नियाम् " [ सं० का० ६ प्र० ५ अ० ८ ] इति ।

हे आग्नीध्र नेष्टुः समीपमागत्योपविश । हे नेष्टः पत्नीमुत्थाप्येहाऽऽनय । अनेन प्रैषद्वयेन रेतः प्रजोत्पादनसामर्थ्योपेतं स्थापितं भवति ।

नेष्टृकारयितृकमुद्गातृकर्तृकं पत्नीविषयं दर्शनं विधत्ते—

" उद्गात्रा सं ख्यापयति प्रजापतिर्वा एष यदुद्गाता प्रजानां प्रजननाय " [ सं० का० ६ प्र० ५ अ० ८ ] इति ।

पत्नीकर्तृकं पन्नेजनीसंज्ञकजलस्य प्रवर्तनं विधत्ते—

"अप उप प्र वर्तयति रेत एव तत्सिञ्चति" [सं०का०६प्र०५अ०८] इति ।

प्रवर्तनाय तज्जलप्रक्षेपस्य स्थानं विधत्ते—

" ऊर्णोप प्र वर्तयत्यूरुणा हि रेतः सिच्यते " [ सं० का० ६ प्र० ५ अ० ८ ] इति ।

ऊरुप्रदेशे स्रावितं जलं गुह्यपर्यन्तं प्रवर्तते लोकेऽप्यूरुसहितेन प्रजननेन रेतः सिच्यते ।

ऊरुप्रदेशे वस्त्रापनयनं विधत्ते—

" नग्नंकृत्योरुमुप प्र वर्तयति यदा हि नग्न ऊरुर्भवत्यथ मिथुनी भवतोऽथ रेतः सिच्यतेऽथ प्रजाः प्र जायन्ते " [सं० का० ६ प्र०५ अ०८ ] इति ।

---

१ ख. मन्त्रा उत्पा° । २ क. °कं स्वप° । ख. °कं स्वगुह्ये प° ।

( हारियोजनग्रहाभिधानम् )

अथ मीमांसा ।

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"द्विदेवशेष आदित्यस्थाल्या आग्रयणाभिधाम् ।
स्थालीं प्राप्तस्ततः पात्नीवतस्य ग्रहणे सति ॥
तद्भक्षणे द्विदेवाः किं सार्धं पात्नीवतेन ते ।
उपलक्ष्या न वा पूर्वन्यायेनास्तूपलक्षणम् ॥
अन्य आग्रयणात्पात्नीवतो नैतस्य विद्यते ।
आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते " इति ।

ऐन्द्रवायवादयो द्विदेवत्याः । तेषां शेष आदित्यस्थालीमागच्छति । पुनरपि तस्याः स्थाल्या आग्रयणस्थालीमागच्छति । तस्या आग्रयणस्थाल्याः पात्नीवतो गृह्यते । तस्य पात्नीवतस्य भक्षण इन्द्रवाय्वादय उपलक्षणीयाः। पूर्वाधिकरणे यथा मित्रावरुणादिभिः सहेन्द्र उपलक्षितस्तद्वदिति प्राप्ते ब्रूमः—" मदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति " इत्याग्रयणपात्रस्यापादानत्वश्रवणात्ततो निःसृतस्य सोमरसस्य तत्संबन्धेऽपेते सति पश्चात्पत्नीवद्देवतायै ग्रहणं भवति । तथा सत्यत्यन्तभिन्नस्य पात्नीवतस्य पूर्वदेवेष्वाकाङ्क्षा नास्ति । पूर्वाधिकरणोक्तस्तु पुनरभ्युन्नीतः सोम ऐन्द्रशेषेण संसृष्टः । तस्य संसृष्टस्य भक्षणे मित्रावरुणादीनामिवेन्द्रस्यापि संबन्धो नापैतीति वैषम्यम् । तस्मात्पात्नीवतभक्षण इन्द्रवाय्वादयो नोपलक्षणीयाः ।

तत्रैवान्यच्चिन्तितम्—

"सह पत्नीवता त्वष्टा तद्ग्रहे लक्ष्यते न वा ।
सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात्सोऽपि लक्ष्यते ॥
सहत्वमात्रं त्वष्टुः स्यान्न पातृत्वमशब्दनात् ।
चोदनायां अभावाच्च न देवोऽतो न लक्ष्यते " इति ।

तस्मिन्नेव पात्नीवतग्रहे शेषभक्षणमन्त्रे पत्नीवता सह त्वष्टाऽप्युपलक्षणीयः। कुतः । त्वष्टुरपि तद्देवत्वात् । तच्च होममन्त्रादवगतम् । " अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा " इत्यस्मिन्मन्त्रे पत्नीवन्तमग्निं प्लुतान्तेन पदेन संबोध्य त्वष्ट्रा देवेन सह पिबेत्यभिधानात्पातृत्वेन पत्नीवत इव त्वष्टुस्तद्देवत्वम् ।

१ क. ऐन्द्रवायवादय । २ क. °था मैत्रा° । ३ क. सहैन्द्र । ४ ख. °णे मैत्रा° । ५ क. ऐन्द्रवायवाद्यो । ६ क. भक्षणे । ७ क. °मदर्शना° । ८ क. °यामभानाच्च । ख. °यामभा° । ९ क. देवेऽत्रोपल° ।

ततः पत्नीवत्त्वष्टृपीतस्येत्युपलक्षणमिति माप्ते ब्रूमः—पानकाले सहावस्थानमात्रं त्वष्टुः सजूरित्यनेन पदेन प्रतीयते न तु पातृत्वम्। असंबोधितस्य त्वष्टुः पिबेत्यनेन शब्देन सामानाधिकरण्याभावात्। न च पातृसहभावमात्रेण पातृत्वं, "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यत्र पुत्राणां वोढृत्वादर्शनात्। आस्तां मन्त्रः, विधिबलात्त्वष्टुर्देवत्वमिति चेन्न। "पात्नीवतमाग्रयणाद्गृह्णाति" इत्यत्र त्वष्टुरप्रतीतेः। तस्माददेवत्वात्त्वष्टा नोपलक्षणीयः।

(×तत्रैवान्यच्चिन्तितम्—

"पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान्मादयेत्यमी।
लक्ष्या न वा याज्ययोक्तेर्देवत्वादुपलक्षणम्॥
एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना।
अतोऽग्नेरेव देवत्वान्नान्येषामुपलक्षणम्॥

तस्यैव पात्नीवतग्रहस्य याज्यायामग्निं संबोध्य पत्नीवन्नामधारिणस्त्रयस्त्रिंशद्देवान्मादयेत्यभिधीयते—"पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व" इति। अनुष्वधमनुप्रदानम्। अत्र हूयमानेन सोमरसेन मादनीयत्वात्त्रयस्त्रिंशतां तद्देवत्वम्। अतस्तेऽपि भक्षणे लक्षणीया इति चेत्, न। यजमानेन मादनीयस्याग्नेरेव तद्देवत्वात्। त्रयस्त्रिंशद्देवास्तु वह्निना माद्यन्त इति न तेषामत्र देवत्वम्। तस्मान्नोपलक्षणम्)॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके
सप्तविंशोऽनुवाकः॥ २७॥

---

(अथ प्रथमाष्टके चतुर्थप्रपाठकेऽष्टाविंशोऽनुवाकः)।

हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि हरीः स्थ हर्योर्धानाः सहसोमा इन्द्राय स्वाहा (१)॥

---

× धनुश्चिह्नान्तर्गतं ख. पुस्तक एव।

१ क. मन्त्रवि°।

(हारियोजनग्रहाभिधानम्)

( हरिः षड्विंशतिः )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठकेऽष्टाविंशोऽनुवाकः ॥ २८ ॥

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टाविंशोऽनुवाकः )।

कल्पः—" परिधिषु प्रहृतेषून्नेता हारियोजनं गृह्णाति उपयामगृहीतोऽसि हरिरसीति द्रोणकलशेन सर्वमाग्रयणं गृहीत्वा न सादयति बह्वीभिर्धानाभिः श्रीत्वा हरीः स्थ हर्योर्धाना इति वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम् " इति।

पाठस्तु—

हरिरसीति। हे सोम त्वं हरिरसि हरितवर्णोऽसि। हरितमेधं पुनक्तीति हरियोजन इन्द्रस्तस्य संबन्धी हारियोजनः। इन्द्रदेवताक इत्यर्थः। हर्योरथयोः स्थाता हरिभ्यामश्वाभ्यां युक्ते रथे तिष्ठतीत्यर्थः। यद्यपीन्द्र एव रथे तिष्ठति तथाऽपि तदीयत्वात्सोमोऽपि तिष्ठतीत्युपचर्यते। इन्द्रेण पेयत्वादिन्द्राभेदेन वज्रस्य पोषकः। पृश्निरन्नं तस्य प्रेता यागसाधनद्वारेण प्रेरयिता। हे सोम देव तस्य ते तादृशस्य तव संबन्धिनं ग्रहं गृह्णामि। कीदृशम्। हरिवन्तमिन्द्रदेवताकम्। कीदृशस्य। इष्टयजुषः। इष्टं यज्ञसाधनत्वेन प्रयुक्तं ग्रहणसादनादिमन्त्ररूपं यजुर्यस्य सोऽयमिष्टयजुः। स्तुतास्त्रिवृत्पञ्चदशसप्तदशैकविंशनामकाः स्तोमा यस्यासौ स्तुतस्तोमः। शस्तानि उक्थानि प्रउगाज्यनिष्केवल्यमरुत्वतीयवैश्वदेवाग्निमारुतनामकानि शस्त्राणि यस्यासौ शस्तोक्थः। भृष्टास्तण्डुला धानाः। हे धाना यूयं हर्योरिन्द्ररथवाहकाश्वयोः संबन्धित्वेन हरीर्हरिशब्दार्थेन रूढाः स्थ। सोमेन मिश्रितत्वात्सहसोमाः स्थ। तादृशमिदं हविरिन्द्राय स्वाहा हुतमस्तु।

हारियोजनग्रहविधिमर्थवादेनोन्नयति—

" इन्द्रो वृत्रमहन्तस्य शीर्षकपालमुदौब्जत्स द्रोणकलशोऽभवत्तस्मात्सोमः समस्रवत्स हारियोजनोऽभवत् " [ सं० का० ६ प्र० ५ अ० ९ ] इति।

उदौब्जदुत्तानमभवत्। तस्माद्वृत्रशिरसो निष्पन्नाद्द्रोणकलशात्स्रुतः सोमरसो हारियोजनोऽभवत्। तस्माद्द्रोणकलशेन हारियोजनं गृह्णीयात्।

धानामेलनं विधत्ते—

" तं व्यचिकित्सज्जुहवानी३ मा हौषा३मिति सोऽमन्यत यद्धोष्याम्याम[1]

---

१ ख. °श्वं रथे यु°।

होष्यामि यन्न होष्यामि यज्ञवेशसं करिष्यामीति तमध्रियत होतुः सोऽग्निरब्रवीन्न मय्यामः होष्यसीति तं धानाभिरश्रीणाच्छृतं भूतमजुहोद्यद्धानाभिर्हारियोजनः श्रीणाति शृतत्वाय शृतमेवैनं भूतं जुहोति" [ सं० का० ६ प्र० ५ अ० ९ ] इति ।

तं हारियोजनं ग्रहं प्रति । आममपक्वम् । यज्ञवेशसं यज्ञविघातम् । स इन्द्रस्तं ग्रहं होतुमाध्रियत निश्चयमकरोत् । न होष्यसि मा हौषीः । शृतं भूतं पक्वं जातम् ।

धानानां बाहुल्यं विधत्ते-

"बह्वीभिः श्रीणात्येतावतीभिरेवास्यामुष्मिँल्लोके कामदुघा भवन्त्यथो खल्वाहुरेता वा इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति तस्माद्बह्वीभिः श्रीणीयात्" [ सं० का० ६ प्र० ५ अ० ९ ] इति ।

संख्यया यावत्यो धानास्तावत्यो यजमानस्य स्वर्गे कामधेनवो भवन्ति । किंच हारियोजनीधाना इन्द्रस्य कामधेनवः । पृश्नयोऽल्पतनवः ।

सवनीयस्य पशोः परिधिषु प्रहृतेषु हारियोजनकाल इत्येतद्विधत्ते-

"ऋक्सामे वा इन्द्रस्य हरी सोमपानौ तयोः परिधय आधानं यदप्रहृत्य परिधीञ्जुहुयादन्तराधानाभ्यां घासं प्र यच्छेत्प्रहृत्य परिधीञ्जुहोति निराधानाभ्यामेव घासं प्र यच्छति" [ सं० का० ६ प्र० ५ अ० ९ ] इति ।

ऋक्सामवेदात्मकाविन्द्रस्याश्वौ । तावप्यत्र सोमं पिबतः । अत एव हर्योर्धाना इत्युक्तम् । सवनीयपश्वङ्गभूता ये परिधयोऽग्निं परित आवृत्य तिष्ठन्ति ते तयोरश्वयोराधानम् । आधीयते मुखे प्रक्षिप्यतेऽश्वं नियन्तुमित्याधानं खलीनम् । मुखस्यान्तः स्थितमाधानं ययोरश्वयोस्ताभ्यामन्तराधानाभ्याम् । परिधिप्रहरणादूर्ध्वं होमे निराधानत्वात्सुखेनैव घासमत्तुं +शक्यते ।

नात्राध्वर्योर्होमः किंतून्नेतुरित्यमुमर्थं विधत्ते-

"उन्नेता जुहोति यातयामेव ह्येतर्ह्यध्वर्युः स्वगाकृतो यदध्वर्युर्जुहुयाद्यथा विमुक्तं पुनर्युनक्ति तादृगेव तत्" [ सं० का० ६ प्र० ५ अ० ९ ] इति ।

एतस्मिन्कालेऽध्वर्युर्यस्मात्स्वगाकृतः स्वाधीनगतिः कृतः प्रधानग्रहाणां समाप्तत्वेन पारतन्त्र्याभावात्तस्मादयं गतसाररूप इव । तथा सत्यध्वर्योर्होमे विमुक्तस्य बलीवर्दस्य श्रान्तस्य पुनः शकटे योगं इव भवति ।

---

+ भावे लट् । अत्र निराधानाभ्यामिति कर्तृपदाध्याहारः ।

---

१ क. ख. ग. घ. ङ. °तमध्रियत स । २ क. ख. ग. घ. ङ. होतुं नि° । ३ ख. सोऽब्रवीत् । ४ क. ग. घ. ङ. °गवद्भवति ।

( हारियोजनग्रहाभिधानम् )

गृहीतस्य हारियोजनस्य होमात्पूर्वं शिरसि धारणं विधत्ते—

" शीर्षन्नधिनिधाय जुहोति शीर्षतो हि स समभवत् " [ सं० का० ६ प्र० ५ अ० ९ ] इति।

अत्र सूत्रम्—" बह्वीभिर्धानाभिः श्रीत्वा शीर्षन्नधिनिधायोपनिष्क्रम्य " इति।

होमकालेऽश्वाश्रावणदेशादीषत्पुरतो वलनं कृत्वा होतव्यमिति विधत्ते—

" विक्रम्य जुहोति विक्रम्य हीन्द्रो वृत्रमहन्त्समृद्ध्यै " [ सं० का० ६ प्र० ५ अ० ९ ] इति।

भक्षणकाले हारियोजनधानानां मानसं चर्वणं विधत्ते—

" पशवो वै हारियोजनीर्यत्संभिन्द्यादल्पा एनं पशवो भुञ्जन्त उप तिष्ठेरन्यन्न संभिन्द्याद्बहव एनं पशवोऽभुञ्जन्त उप तिष्ठेरन्मनसा सं बाधत उभयं करोति बहव एवैनं पशवो भुञ्जन्त उप तिष्ठन्ते " [ सं० का० ६ प्र० ५ अ० ९ ] इति।

पशुप्राप्तिहेतुत्वाद्धानाः पशवः। संभिन्द्याद्दन्तैः खण्डयेत्। तथा सति कतिचिदेव पशव एनं यजमानं क्षीरदानादिभिः पालयन्तः प्राप्नुयुः। असंभेदे बहवः प्राप्नुवन्तोऽपि क्षीरादिभिर्न पालयन्ति। मानसचर्वणे तु संभेदनमसंभेदनं चेत्युभयस्य कृतत्वात्पशूनां नाल्पत्वं नापि क्षीरादिराहित्यम्।

उन्नेतृहस्तगतं हुतशेषं सर्वे भक्षयितुमुन्नेतुरनुज्ञामपेक्षेरन्निति विधत्ते—

" उन्नेतर्युपहवमिच्छन्ते य एव तत्र सोमपीथस्तमेवाव रुन्धते " [ सं० का० ६ प्र० ५ अ० ९ ] इति।

सर्वभक्षितावशेषाणां द्रोणकलशगतसोमानां निनयनं विधत्ते—

उत्तरवेद्यां नि वपति पशवो वा उत्तरवेदिः पशवो हारियोजनीः पशुष्वेव पशून्प्रति ष्ठापयन्ति " [ सं० का० ६ प्र० ५ अ० ९ ] इति।

ग्रहहोमे परिसमाप्ते सति ग्रहान्प्रशंसति—

"ग्रहान्वा अनु प्रजाः पशवः प्र जायन्ते " [ सं० का० ६ प्र० ५ अ० १० ] इति।

एतदेव विस्पष्टयति—

१ ख. विभज्य संप°।

" उपा१ँश्वन्तर्यामावजावयः शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रहं गावः " [ सं० का० ६ प्र० ५ अ० १० ] इति ।

आदित्यग्रहस्य गवां च सादृश्यप्रकटनेन ग्रहमनु गवां जन्मोपपादयति-

" आदित्यग्रहो भूयिष्ठाभिर्ऋग्भिर्गृह्यते तस्माद्गावः पशूनां भूयिष्ठाः " [सं० का० ६ प्र० ५ अ० १०] इति।

कदा चन स्तरीरसीत्यादिका ऋचो भूयिष्ठाः ।

उपांशुग्रहमनु जातानामजानां ग्रहेण सह त्रित्वसाम्यं दर्शयति-

" यत्त्रिरुपा१ँशु१ँ हस्तेन विगृह्णाति तस्माद्द्वौ त्रीनजा जनयति " [ सं० का० ६ प्र० ५ अ० १० ] इति।

द्वौ वा त्रीन्वा न तु त्रिभ्योऽधिकमपत्यं सा सह जनयति ।

यस्मादन्तर्यामग्रहे संकोचसंख्याविशेषो न श्रुतस्तस्मात्तमनु जायमानानामवीनां भूयिष्ठत्वं युगपद्युक्तमित्याह-

" अथावयो भूयसीः " [ सं० का० ६ प्र० ५ अ० १० ] इति ।

अथ कथंचिदाग्रयणसोमः क्षीयेत तदा द्रोणकलशात्तद्ग्रहणं विधत्ते-

" पिता वा एष यदाग्रयणः पुत्रः कलशो यदाग्रयण उपदस्येत्कलशाद्गृह्णीयाद्यथा पिता पुत्रं क्षित उपधावति तादृगेव तत् " [ सं० का० ६ प्र० ५ अ० १० ]इति ।

प्रथमोत्पन्नत्वादाग्रयणः पिता। पश्चाद्भावितया कलशः पुत्रः। क्षितः क्षीणवृत्तिः। उपधावति जीवनार्थमुपसर्पति ।

कलशसोमक्षये वैपरीत्यं विधत्ते-

" यत्कलश उपदस्येदाग्रयणाद्गृह्णीयाद्यथा पुत्रः पितरं क्षित उपधावति तादृगेव तत् " [ सं० का० ६ प्र० ५ अ० १० ] इति ।

कलशन्यायं ग्रहेऽपि दर्शयति-

" आत्मा वा एष यज्ञस्य यदाग्रयणो यद्ग्रहो वा कलशो वोपदस्येदाग्रयणाद्गृह्णीयादात्मन एवाधि यज्ञं निष्करोति" [सं०का०६प्र०५अ०१०]इति।

यज्ञमध्यवर्तित्वादाग्रयणो यज्ञस्याऽऽत्मा दृष्टान्तत्वेन कलशस्य पुनरुपादानम् । नष्टं यज्ञमनेन ग्रहणेनाऽऽत्मन उपरि पुनः संदधाति ।

---

१ ख. °प्रदर्शने° । २ ख. °पद्युक्तमि° । ३ ख. °यणात्सोमः ।

अथ स्थाल्या होमसाधनत्वाभावेन तां निन्दन्निव होमसाधनं दारुपात्रं प्रशंसति—

" अविज्ञातो वा एष गृह्यते यदाग्रयणः स्थाल्या गृह्णाति वायव्येन जुहोति तस्माद्गर्भेणाविज्ञातेन ब्रह्महा " [ सं० का० ६ प्र० ५ अ० १० ] इति ।

आ वायो भूषेत्यादिग्रहणमन्त्रेषु यथा देवता स्वनामविशेषेण विज्ञायते न तथा ये देवा दिव्येकादश स्थेत्यत्र, नामविशेषाश्रुतेः। तस्मादविज्ञात आग्रयणः स्थाल्या मृन्मय्या गृह्णात्येव न तु जुहोति । वायव्येन तु दारुपात्रेण जुहोति । यस्माद्ये देवा इतिमन्त्रोक्ताविज्ञातनामकांस्त्रयस्त्रिंशतो देवानुद्दिश्य स्थाल्या गृहीतः सोमो ग्रहणमात्रेण तद्देवतातृप्तावपि होमाभावात्परित्यक्त इव तस्माल्लोकेऽप्यविज्ञातेन गर्भेण ब्रह्महा भवति । प्रोषिते भर्तरि जारजन्यो गर्भो भर्तारं प्रत्यविज्ञातस्तेन गर्भेणोत्पन्नं ब्रह्म जहाति परित्यजतीति ब्रह्महा । अविज्ञातयोर्गर्भाग्रयणयोः परित्यागस्तुल्यः । तं च स्थालीगतं सोमं पुनर्दारुमयेऽन्तर्यामपात्रे सविश्रर्थं गृहीत्वा जुहोति । ततो दारुपात्रं प्रशस्तम् ।

प्रकारान्तरेण दारुपात्राणि प्रशंसति—

" अवभृथमव यन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात्स्त्रियं जातां पराऽस्यन्त्युत्पुमा॑ꣳस॑ꣳ हरन्ति " [ सं० का० ६ प्र० ५ अ० १० ] इति ।

यदाऽवभृथं गच्छन्ति तदानीमाग्रयणोक्थ्यध्रुवादित्यस्थालीश्चतस्रो वेद्यामेव परास्यन्ति परित्यजन्ति । वायव्यानि दारुपात्राण्युद्धरन्त्यवभृथदेशे नयन्ति । तस्मात्स्थालीवल्लोकेऽपि स्त्रियं दुहितरं विवाहेन वरकुले परित्यजन्ति । पुमांसं वायव्यवदुद्धरन्ति सम्यक्पोषयन्ति ।

पुरोरुचं ग्रहणं सादनं च क्रमेण प्रशंसति—

" यत्पुरोरुचमाह यथा वस्यस आहरति तादृगेव तद्यद्ग्रहं गृह्णाति यथा वस्यस आहृत्य प्राऽऽह तादृगेव तद्यत्सादयति यथा वस्यस उपनिधायापक्रामति तादृगेव तत् " [ सं० का० ६ प्र० ५ अ० १० ] इति ।

उपयामगृहीतोऽसीत्येतस्मात्पूर्वं पठ्यमानत्वादा वायो भूषेत्यादिका पुरोरुक् । वस्यसे वसुमत्तमाय राजामात्यादिकाय । यथा लोके धनिकायोपायनमाहृत्यैतदेव ममेत्युक्त्वा पुरतो निधाय गच्छन्ति तथा पुरोरुगादित्रयं द्रष्टव्यम् ।

यजुःसामनी निन्दन्निव पुरोरुचं प्रशंसति—

---

१ क. ग. घ. ङ. °नं पा° । २ ख. स्थाल्यां । ३ क. ग. घ. ङ. °णमन्त्रेण । ४ ख. °नि तु दा° । ५ ख. °सं तु वा° ।

"यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढं पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचा यज्ञस्य धृत्यै" [ सं० का० ६ प्र० ५ अ० १० ] इति ।

यज्ञसंबन्धि यदङ्गं यजुःसामभ्यां क्रियते तद्धि शिथिलमिव । वेदेषु सर्वत्र विश्वासाय तदेतदृचाऽभ्युक्तमित्यृच एवोदाहरणात् । उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्नित्यादिमन्त्रैर्गृह्यमाणाः पुरस्तादुपयामाः । आ वायो भूषेत्यादिभिस्तूपरिष्टादुपयामाः । तत्र यजुषो दार्ढ्यार्थमुपयामपूर्वत्वम् । ऋचस्तु स्वयमेव दृढत्वान्न तत्पूर्वत्वम् । तदुभयं यज्ञस्य धृत्यै भवति ।

सोमपात्राणि प्रशंसितुं द्वेधा विभजति—

"प्रान्यानि पात्राणि युज्यन्ते नान्यानि" [ सं० का० ६ प्र० ५ अ० ११ ] इति ।

कानिचित्पात्राणि प्रकर्षेण युज्यन्तेऽनुष्ठीयन्ते पुनरावर्त्यन्त इत्यर्थः । यथा— उपांश्वन्तर्यामपात्रयोः प्रातःसवने प्रयुक्तयोः पुनस्तृतीयसवनेऽपि प्रयोगः । "यदुपाꣳशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति" "अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति" इत्याम्नातत्वात् । अन्यानि तु नाऽऽवर्त्यन्ते किंतु सकृदेवानुष्ठीयन्ते । तद्यथा—द्विदेवत्यग्रहादीनि, तेषु सकृदनुष्ठितेषु स्वर्गजयः ।

आवृत्तेस्त्वेतल्लोकजय इति प्रशंसति—

"यानि पराचीनानि प्रयुज्यन्तेऽमुमेव तैर्लोकमभि जयति पराङिव ह्यसौ लोको यानि पुनः प्रयुज्यन्त इममेव तैर्लोकमभि जयति पुनः पुनरिव ह्ययं लोकः" [ सं० का० ६ प्र० ५ अ० ११ ] इति ।

पराचीनान्यानिवृत्तानि । स्वर्गः पराङिवानावृत्त इव । स्वर्गे स्थितस्यापि पुनर्जन्मान्तरेऽपि स्वर्गं प्राप्तुमुद्योगासंभवात् । मनुष्यलोके स्थितस्य पुनरेतदर्थमुद्यमोऽस्तीति तस्य पौनःपुन्यम् ।

प्रकारान्तरेण प्रशंसति—

"प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वोषधयः परा भवन्ति यानि पुनः प्रयुज्यन्ते तान्यन्वोषधयः पुनरा भवन्ति" [ सं० का० ६ प्र० ५ अ० ११ ] इति ।

फलपाके विनाशः पराभवः । संवत्सरान्ते तदुत्पत्तिः पुनराभवनम् ।

---

१ ख. तच्छिथि° । २ क. ग. घ. ङ. °त्यै । सो° । ३ ख. °त्यद्धिग्र° । ४ क. ग. घ. ङ. °नुष्ठानात्स्वर्ग° ।

( हारियोजनग्रहाभिधानम् )

प्रकारान्तरेण प्रशंसति—

" प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वारण्याः पशवोऽरण्यमप यन्ति यानि पुनः प्रयुज्यन्ते तान्यनु ग्राम्याः पशवो ग्राममुपावयन्ति " [ सं० का० ६ प्र० ५ अ० ११ ] इति।

आरण्या व्याघ्रादयोऽरण्यमेवो(वा)पयन्ति न कदाचिदपि ग्रामम्। ग्राम्यास्तु गवादयस्तृणमत्तुमरण्यं गत्वा पुनर्ग्रामं प्रत्यागच्छन्ति।

शस्त्रं प्रशंसति—

"यो वै ग्रहाणां निदानं वेद निदानवान्भवत्याज्यमित्युक्थं तद्वै ग्रहाणां निदानं यदुपा॰शु श॰सति तदुपा॰श्वन्तर्यामयोर्यदुच्चैस्तदितरेषां ग्रहाणामेतद्वै ग्रहाणां निदानं य एवं वेद निदानवान्भवति " [ सं० का० ६ प्र० ५ अ० ११ ] इति।

आज्यमित्युक्थमाज्यप्रउगादिनामकं शस्त्रं, प्रशंसाद्वारा ग्रहानुष्ठानप्रयोजकत्वाद्ग्रहाणां निदानं मूलकारणम्। तदेतद्यो वेद स निदानवांश्चिरजीविभिर्मातापितृस्वामिभिः संयुक्तो भवति। शस्त्रेष्वपि यदुपांशु शस्यते तद्द्वयोर्ग्रहयोर्निदानं, यदुच्चैस्तादितरेषां सर्वेषामित्येवं विशेषं जानतोऽपि तदेव फलम्।

स्थालीवायव्यरूपं द्वंद्वं प्रशंसति—

" यो वै ग्रहाणां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्य एतद्वै ग्रहाणां मिथुनं य एवं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते " [ सं० का० ६ प्र० ५ अ० ११ ] इति।

आग्रयणोक्थ्यादिग्रहाः स्त्रीरूपाभिर्मृन्मयस्थालीभिर्गृह्यन्ते। उपांश्वन्तर्यामादिग्रहास्तु पुरुषरूपैर्वायव्यैः। वेदने तु मनुष्यमिथुनैः पशुमिथुनैश्च प्रजायते युक्तो भवति। य एवं वेदेति पुनरभिधानमुपसंहारार्थम्।

अथ सवनीयपुरोडाशान्विधत्ते—

" इन्द्रस्त्वष्टुः सोममभीषहाऽपिबत्स विष्वङ्व्यार्च्छत्स आत्मन्नारमणं नाविन्दत्स एताननुसवनं पुरोडाशानपश्यत्तान्निरवपत्तैर्वै स आत्मन्नारमणमकुरुत तस्मादनुसवनं पुरोडाशा निरुप्यन्ते तस्मादनुसवनं पुरोडाशानां प्राश्नीयादात्मन्नेवाऽऽरमणं कुरुते नैन॰ सोमोऽति पवते" [सं० का०६ प्र०५ अ०११] इति।

---

१ ख. °पैर्दारुमयैर्वा°। २ क. घ. ङ. °यस्य पु°।

इन्द्रेण विश्वरूपाभिधे त्वष्टुः पुत्रे हते सति कुपितस्त्वष्टा विनेन्द्रं सोमयागं कर्तुं प्रवृत्तस्तदानीमिन्द्रोऽभीषहा बलादेवापिबत् । स इन्द्रः सहसा पीतस्य सोमस्योदरमध्य इतस्ततो विधावनाद्व्याच्छंद्विविधार्तिमाप्नोत् । तेनाऽऽर्तः स इन्द्रः स्वात्मनि सुखं नालभत । ततस्त्रिष्वपि सवनेषु सवनीयपुरोडाशैः सुखं प्राप्तवान्। तस्मात्पुरोडाशान्निरुप्य तच्छेषभक्षणेन सुखं भवति । सोमश्चैनं नातिपवते नेतस्ततः संचारेण बाधते ।

तेषु सवनीयपुरोडाशेषु पञ्चद्रव्यविधिमर्थवादेनोन्नयति—

" ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम् " [ सं० का० ६ प्र० ५ अ० ११ ] इति ।

पञ्चाक्षरा पङ्क्तिरित्याम्नानात्पञ्चसंख्यायोगेन पाङ्क्तत्वं वक्तव्यम् । ऋचो यजुषो वा नास्ति काचिन्नियता पञ्चसंख्या । न च मा भूत्पाङ्क्तत्वमिति वाच्यम् । पाङ्क्तो यज्ञ इति सर्वत्रोद्घोषणात्[1] । अतः किं पाङ्क्तत्वमिति प्रश्नः । धानादिद्रव्येषु नियतया पञ्चसंख्यया पाङ्क्तत्वमित्युत्तरम्। भ्र(भृ)ष्टा यवा धानाः। आज्यसंयुक्ताः सक्तवः करम्भः । व्रीहिजन्या लाजाः परिवापः । पिष्टविकारः पुरोडाशः । क्षीरविकारः पयस्या ।

अथ मीमांसा ।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" किं स्याच्चमसिनामेव हारियोजनभक्षणम् ।
सर्वेषां वाऽग्रिमस्तेषां पूर्ववाक्येन(ण) संनिधेः ॥
लिप्सन्ते सर्व एवेति हारियोजनवाक्यतः ।
ग्रावस्तुतोऽप्यस्ति भक्षश्चमसित्वमकारणम् " इति ।

हरिरसि हारियोजन इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः । होतृब्रह्मादयश्चमसिनः । यस्तु चतुर्णां होतॄणां मध्ये चतुर्थो ग्रावस्तुन्नामकोऽस्ति नासौ चमसी । तत्र चमसिनामेव हारियोजनभक्षणम् । कुतः । यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त इत्यत्र पूर्ववाक्ये चमसिनां संनिहितत्वेनोत्तरवाक्ये सर्वशब्देन तेषामेवाभिधातव्यत्वात्[2] ।

---

१ क. ॰ त्रोपपादनात् । २ क. घ. ङ. ॰तः । च॰ ।

( अतिग्राह्यषोडशिग्रहाभिधानम् )

अतो नास्ति ग्रावस्तुतस्तत्र भक्ष इति प्राप्ते ब्रूमः—अथशब्देनैवकारेण च चमसिमात्रशङ्कामपोह्य वाक्येन विहितस्य सर्वभक्षणस्य संनिधिमात्रेण संकोचायोगादस्ति ग्रावस्तुतोऽपि भक्षः। तस्माच्चमसित्वं न भक्षणे कारणम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टाविंशोऽनुवाकः ॥ २८ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठक एकोनत्रिंशोऽनुवाकः )।

अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्। उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते ( १ ) ॥

( अग्ने त्रयोविꣳशतिः )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठक एकोनत्रिंशोऽनुवाकः ॥ २९ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके त्रिंशोऽनुवाकः )।

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः। सोममिन्द्र चमू सुतम्। उपयामगृहीतोऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ( १ ) ॥

( उत्तिष्ठन्नेकविꣳशतिः )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके त्रिंशोऽनुवाकः ॥ ३० ॥

---

१ ख. °मात्रित्वश° । २ ख. °पोह्य वा° । ३ क. घ. ङ. °निहितमात्रस°।

( अथ प्रथमाष्टके चतुर्थप्रपाठक एकत्रिंशोऽनुवाकः ) ।

÷तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ( १ ) ॥

( तरणिर्विꣳशतिः ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठक एकत्रिंशोऽनुवाकः ॥ ३१ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके द्वात्रिंशोऽनुवाकः ) ।

आ प्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नः सप्रथस्तमः ( १ ) ॥

( आ नव ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके द्वात्रिंशोऽनुवाकः ॥ ३२ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके त्रयस्त्रिंशोऽनुवाकः ) ।

ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान् ( १ ) ॥

( ईयुरेकान्नविꣳशतिः ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके त्रयस्त्रिंशोऽनुवाकः ॥ ३३ ॥

---

÷ एतदाद्यनुवाकषट्कस्य व्याख्यानं तैत्तिरीयारण्यके तृतीयप्रपाठके षोडशानुवाकमारभ्य वर्तते । तत्तत एव द्रष्टव्यम् ।

( अतिग्राह्यषोडशिग्रहाभिधानम् ]

( अथ प्रथमाष्टके चतुर्थप्रपाठके चतुस्त्रिंशोऽनुवाकः ]।

ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि ( १ ) ॥

( ज्योतिष्मतीꣳ षट्त्रिꣳशत् ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके चतुस्त्रिंशोऽनुवाकः ॥ ३४ ॥

---

[ अथ प्रथमाष्टके चतुर्थप्रपाठके पञ्चत्रिंशोऽनुवाकः ] ।

प्रयासाय स्वाहाऽऽयासाय स्वाहा वियासाय स्वाहा संयासाय स्वाहोद्यासाय स्वाहाऽवयासाय स्वाहा शुचे स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( प्रयासाय चतुर्विꣳशतिः ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके पञ्चत्रिंशोऽनुवाकः ॥ ३५ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके षट्त्रिंशोऽनुवाकः ) ।

चित्तꣳ संतानेन भवं यक्ना रुद्रं तनिम्ना

(अतिग्राह्यषोडशिग्रहाभिधानम्)

पशुपतिꣳ स्थूलहृदयेनाग्निꣳ हृदयेन रुद्रं लोहितेन शर्वं मतस्नाभ्यां महादेवमन्तःपार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम् ( १ ) ॥

( चित्तमष्टादश ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके षट्त्रिंशोऽनुवाकः ॥ ३६ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाकः ) ।

आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ( १ ) ॥

( आ तिष्ठ षड्विꣳशतिः ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥(३१)।

---

(अथ प्रथमाष्टके चतुर्थप्रपाठकेऽष्टात्रिंशोऽनुवाकः)।

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसमृषीणां स्तुतीरुप यज्ञं च मानुषाणाम् । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ( १ ) ।

( इन्द्रं त्रयोविꣳशतिः ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठकेऽष्टात्रिंशोऽनुवाकः ॥ ३८ ॥ (३२) ।

---

( अतिग्राह्यषोडशिग्रहाभिधानम् )

( अथ प्रथमाष्टके चतुर्थप्रपाठक एकोनचत्वारिंशोऽनुवाकः )।

असावि सोमं इन्द्र ते शविष्ठ धृष्णवा गहि। आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्यं न रश्मिभिः। उपयामगृहीतोऽसिन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने (१)॥

असावि सप्तविꣳशतिः )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थ-प्रपाठक एकोनचत्वारिंशोऽनुवाकः॥ ३९॥ (३३)।

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके चत्वारिंशोऽनुवाकः )।

सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आऽधित। स्योनाऽस्मै सुषदा भव यच्छास्मै शर्म सप्रथाः। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने (१)॥

( सर्वस्य षड्विꣳशतिः )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थ-प्रपाठके चत्वारिंशोऽनुवाकः॥ ४०॥ (३४)।

---

( अथ प्रथमाष्टके चतुर्थप्रपाठक एकचत्वारिंशोऽनुवाकः )।

महाꣳ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु। स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने [१]॥

( महान्षड्विꣳशतिः ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठक एकचत्वारिंशोऽनुवाकः ॥ ४१ ॥ [ ३५ ] ।

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके द्विचत्वारिंशोऽनुवाकः )।

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान् । जहि शत्रूꣳरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ( १ ) ॥

( सजोषास्त्रिꣳशत् ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके द्विचत्वारिंशोऽनुवाकः ॥ ४२ ॥ ( ३६ ) ।

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठक एकोनत्रिंशत्रिंशैकत्रिंशद्द्वात्रिंशत्त्रयस्त्रिंशचतुस्त्रिंशपञ्चत्रिंशषट्त्रिंशानुवाकाः ) ।

कल्पः—" त्रीनग्निष्टोमेऽतिग्राह्यान्गृह्णात्याग्नेयमैन्द्रं सौर्यमित्यग्न आयूꣳष्युत्तिष्ठंस्तरणिरिति ग्रहणसादनाः " इति ।

प्रथममन्त्रपाठस्तु—

**अग्न इति** । हेऽग्ने त्वं भक्तानामायूंषि पवसे शोधयसि वर्धयसीत्यर्थः । अस्माकमिषमन्नमूर्जं बलमासुव प्रयच्छ । दुच्छुनां वैरिसेनामारे दूरं यथा स्यात्तथा बाधस्व । स्पष्टमन्यत् ।[1]

द्वितीयमन्त्रपाठस्तु—

**उत्तिष्ठन्निति** । हे इन्द्र सुतं सोमं पीत्वौजसा बलेन सहोत्तिष्ठंश्चमू भक्षणकरणभूते शिप्रे हनू अवेपयश्चालय । तच्चालनलिङ्गेन तुष्टमात्मानमस्माकं दर्शयेत्यर्थः । स्पष्टमन्यत् ।

---

१ ख. °तिग्रहान्गृ° ।

( अतिग्राह्यषोडशिग्रहाभिधानम् )

तृतीयमन्त्रपाठस्तु तरणिरित्यादिरारण्यके समाम्नातत्वान्नात्र व्याख्येयः।

कल्पः—"आग्रयणग्रहं गृहीत्वाऽथ षोडशिनं गृह्णाति आ तिष्ठ वृत्रहन्नित्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति परिमृज्याऽऽसादयति एष ते योनिरिन्द्राय त्वा षोडशिन इति" इति।

पाठस्तु—

**आ तिष्ठेति**। हे वृत्रहन्निन्द्र तव हरी अश्वौ ब्रह्मणा मन्त्रेण युक्ता रथयोजितौ। अतो रथमातिष्ठाऽऽरोह। अयं ग्रावा वग्नुना वचनेनाभिषवध्वनिना त्वन्मनोऽभिषुते सोमेऽर्वाचीनमभिमुखं करोतु। षोडशसंख्यापूरकं स्तोत्रं शस्त्रं च यस्येन्द्रस्यास्त्यसौ षोडशी। स्पष्टमन्यत्।

अस्मिन्नेव ग्रहे पञ्च मन्त्रा विकल्पन्ते। तत्र प्रथमः—

**इन्द्रमिदिति**। ऋषीणां मन्त्राणां स्तुतीश्च मानुषाणां यज्ञं चोपेत्याप्रतिधृष्टशवसं केनाप्यतिरस्कृतबलमिन्द्रमेव हरी रथेन वहतः।

अथ द्वितीयः—

**असावीति**। हे शविष्ठातिशयेन बलवन्निन्द्र ते त्वदर्थं सोमोऽसावि सुतः। हे धृष्णो धाष्टर्ययुक्ताऽऽगह्यागच्छ। इन्द्रियशक्तिस्त्वामापृणक्तु आपूरयतु। किमिव। रश्मिभिः स्वीकृतं रज उदकं सूर्यमिव। एतच्चान्यत्राऽऽम्नातम्—"आपः सूर्ये समाहिताः। अभ्राण्यपः प्रपद्यन्ते" इति।

अथ तृतीयः—

**सर्वस्येति**। सर्वस्य भूतजातस्य प्रतिशीवर्याभिमुख्यशायिनी भूमिस्त्वामिन्द्रोपस्थ उपरितनस्थान आधिताऽऽदधातु। हे भूमेऽस्मा इन्द्राय स्योना सुखप्रदा सुषदा शोभननिवासस्थाना च भव। अस्मै यजमानाय सप्रथा अतिविस्तृता सती शर्म सुखं प्रयच्छ।

अथ चतुर्थः—

**महाꣳ इन्द्र इति**। स्पष्टोऽर्थः।

अथ पञ्चमः—

**सजोषा इति**। हे वृत्रहञ्छूरेन्द्र सजोषाः प्रीतिसहितो मरुद्भिर्युक्ततया सगणस्त्वं यजमानभक्तिं विद्वान्सोमं पिब। अस्माकं मारणोद्यताञ्शत्रून्मारय। इतरान्मृधो वैरिणोऽपनुदस्व। अनन्तरमस्माकं सर्वतो भयराहित्यं कुरु।

---

१ क. °यणं गृ°। २ ख. °च्चाऽऽरण्यके समाम्ना°।

अथ विनियोगसंग्रहः—

"ऐन्द्रवायव आ वायो इन्द्र तस्य पुनर्ग्रहः ।
मैत्रावरुणकेयं वामाश्विने द्वौ विकल्पितौ ॥ १ ॥
शुक्रे मन्थिनि चैकैकः माग्निवाऽऽग्रयणे द्वयम् ।
एकैक उक्थ्यध्रुवयोश्चतुर्दश तु मन्त्रकाः ॥ २ ॥
ऋतुग्रहेषूपयामः सर्वेष्वादौ प्रयुज्यते ।
ऐन्द्राग्नो वैश्वदेवश्च त्रयो मारुत्वतग्रहाः ॥ ३ ॥
वैकल्पिकौ द्वौ माहेन्द्रे कदाऽऽदित्यग्रहस्तथा ।
कदा दधिग्रहस्तत्र यज्ञः सोमं पुनः क्षिपेत् ॥ ४ ॥
विव ग्राव्णाऽऽलोडयेद्या काम्यो दृध्नः प्रतिश्रयः ।
त्रयो विकल्प्याः सावित्रे वैश्वदेवे परो ह्यसौ ॥ ५ ॥
पात्नीवतग्रहस्यास्य होमोऽग्ना इतिमन्त्रतः ।
हारियोजननाम्नस्तु हरीः स्थेति हुतिर्भवेत् ॥ ६ ॥
अग्नेऽतिग्राह्य आग्नेय उत्तिष्ठन्ग्राह्य ऐन्द्रकः ।
षड्विकल्प्या षोडशिनि ग्रहकाण्डं समाप्यते" ॥ ७ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठक एकोनत्रिंशादारभ्य
षट्त्रिंशपर्यन्ता अष्टानुवाकाः ॥ २९ ॥ ३० ॥ ३१ ॥
३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके त्रिचत्वारिंशोऽनुवाकः ) ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् । चित्रं देवानामुदगाद-
नीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा
द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्त-
स्थुषश्च । अग्ने नय सुपथा राये अस्मान्वि-
श्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जु-

( दक्षिणावर्णनम् )

दुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम। दिवं गच्छ सुवः पत रूपेण ( १ ) वो रूपमभ्यैमि वयसा वयः। तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके। एतत्ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीर्ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणं वि सुवः पश्य व्यन्तरिक्षं यतस्व सदस्यैरस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतानवहायास्मान्देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतम् ( २ ) ॥

( रूपेण सदस्यैरष्टादश च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके त्रिचत्वारिंशोऽनुवाकः ॥ ४३ ॥

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाकः )।

षट्त्रिंशेऽनुवाके ग्रहाः समापिताः। सप्तत्रिंशे दक्षिणा वर्ण्यते—

कल्पः—"प्रचरण्या दाक्षिणानि जुहोति हिरण्यं प्रबध्य घृतेऽवधायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोति" इति।

तत्र प्रथमा—

उदु त्यमिति। केतवो रश्मयस्त्यं जातवेदसं तमग्निसदृशं सूर्यं देवमुद्वहन्ति ऊर्ध्वदेश एव प्रापयन्ति। किमर्थम्। विश्वाय कृत्स्नस्य जगतः सूर्यं दृशे द्रष्टुम्।

अथ द्वितीया—

चित्रमिति। चित्रं रक्तश्वेतादिविविधवर्णं देवानां रश्मिनामनीकं सैन्यसदृशं

मण्डलमुदगादुदयं गच्छति। कीदृशम्। मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्येन्द्रियाधिष्ठातृत्वाच्चक्षुस्थानीयं तन्मण्डलस्थः सूर्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्य चाऽऽत्मा सँल्लोकत्रयमाप्राः पूरितवान्।

कल्पः—"अग्ने नयेत्याग्नीध्रमेत्य जुहोति" इति।

पाठस्तु—

**अग्ने नयेति**। हेऽग्ने राये पारलौकिकधनप्राप्त्यर्थमस्मान्शोभनेन मार्गेण नय। हे देव त्वं विश्वानि वयुनानि सर्वान्मार्गान्विद्वाञ्जानासि। जुहुराणं कुटिलमेनः पापमस्मद्युयोधि वियोजय। तुभ्यं भूयिष्ठां नमस्कारोक्तिं विधेम कुर्याम।

दाक्षिणहोमं विधत्ते—

"सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि" [सं० का० ६ प्र० ६ अ० १] इति।

दक्षिणां दित्सुना होतव्यानि दाक्षिणानि।

होमाधिकरणं विधत्ते—

"द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमते" [सं० का० ६ प्र० ६ अ० १] इति।

द्वाभ्यां वक्ष्यमाणाभ्याम्।

आग्नीध्रहोमादूर्ध्वं सदःप्रवेशं विधत्ते—

"सदोऽभ्यैति सुवर्गमेवैनं लोकं गमयति" [सं० का० ६ प्र० ६ अ० १] इति।

मन्त्रान्विनियुङ्क्ते—

"सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्यमुमेवैनं लोकꣳ समारोहयति नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै" [सं० का० ६ प्र० ६ अ० १] इति।

उदु त्यं चित्रमित्येते सौर्यौ। अग्ने नय सुपथेति नयवती।

**दिवमिति**। कल्पः—"दिवं गच्छ सुवः पतेति हिरण्यं हुत्वोद्गृह्णाति" इति।

हे हिरण्य त्वमाकाशं प्रति गच्छ, ततः स्वर्गं प्राप्नुहि।

अनेन यजमानस्य स्वर्गप्राप्तिरित्याह—

( दक्षिणावर्णनम् )

" दिवं गच्छ सुवः पतेति हिरण्य१ हुत्वोद्गृह्णाति सुवर्गमेवैनं लोकं गमयति " [ सं० का० ६ प्र० ६ अ० १ ] इति ।

यद्धिरण्यं प्रबध्य घृतेऽवहितं तद्धिरण्यं घृतहोमादूर्ध्वं हस्तेनोद्धरेत् ।

कल्पः—" रूपेण वो रूपमभ्यैमीति दक्षिणा अभ्यैति " इति ।

पाठस्तु—

रूपेणेति । हे दक्षिणा अनेनोद्धृतहिरण्यरूपेण वेदेर्दक्षिणभागेऽवस्थितानां युष्माकं रूपमाभिमुख्येन प्राप्नोमि । कीदृशेन हिरण्यरूपेण । वयसा कमनीयेन । कीदृशं युष्मद्रूपम् । वयः कमनीयम् ।

रूपेणेत्ययं शब्दो हिरण्यपर इत्येतद्दर्शयति—

" रूपेण वो रूपमभ्यैमीत्याह रूपेण ह्यासा१ रूपमभ्यैति यद्धिरण्येन " [ सं० का० ६ प्र० ६ अ० १ ] इति ।

हिरण्येन यद्रूपमभ्यैति तद्रूपेण वो रूपमिति मन्त्रेणोच्यत इत्यर्थः ।

कल्पः—" तुथो वो विश्ववेदा वि भजत्विति ता यजमानश्चतुर्धा कृष्णाजिने व्युद्धृत्य चतुर्थमध्वर्युभ्यो विभजति यावदध्वर्यवे ददाति तस्यार्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे, एतेनेतरेषां दानमुक्तम् " इति ।

पाठस्तु—

तुथ इति । हे दक्षिणा वृद्धतमे स्वर्गेऽधिरूढस्तुथनामको देवः सर्वज्ञो युष्मान्यथोचितं विभजतु ।

एतमेवार्थं स्पष्टयति—

" तुथो वो विश्ववेदा वि भजत्वित्याह तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा वि भजति तेनैवैना वि भजति " [ सं०का०६प्र०६अ०१ ] इति ।

कल्पः—"एतत्ते अग्ने राध इति दक्षिणानिनयने " इति । मन्त्र इति शेषः ।

पाठस्तु—

एतदिति । हेऽग्ने दक्षिणाद्रव्याणि ते राधस्तव समृद्धिकारणं सोमच्युतं सोमयागे प्राप्तमेतद्दक्षिणाद्रव्यमैत्यागच्छति । तद्द्रव्यं मित्रस्य पथा शान्तस्य तव मार्गेण नय । हे चन्द्रदक्षिणाः सुवर्णादिद्रव्यरूपा ऋतस्य सत्यस्य पथा मार्गेण प्रेत प्रकर्षेण गच्छत सत्यफलकेन देवेन यथायथं विभक्ता गच्छतेत्यर्थः । कीदृश्यश्चन्द्रदक्षिणाः । सुविता शोभनगमनयुक्तेन यज्ञस्य पथा यज्ञपुरुषस्य मार्गेण

१ ख. °ण सह वे° ।

सदोगार्हपत्ययोर्मध्यवर्तिना नयन्तीर्दक्षिणदेशादुत्तरदेशे नीयमानाः। अत्र सूत्रम्- " हिरण्यपाणिरग्रेण गार्हपत्यं नयति जघनेन सदोऽन्तराऽऽग्नीध्रं च सदश्च ता उदीचीः " इति।

दक्षिणाद्रव्यस्य सोमच्युतत्वं प्रशस्तमित्याह-

" एतत्ते अग्ने राध ऐति सोमच्युतमित्याह सोमच्युतꣳ ह्यस्य राध ऐति " [ सं० का० ६ प्र० ६ अ० १ ] इति।

मित्रशब्दप्रयोजनमाह-

" तन्मित्रस्य पथा नयेत्याह शान्त्यै" [सं० का०६ प्र०६ अ०१] इति।

तथो रुद्रोऽग्निरिति श्रुतत्वाद्रुद्रस्य पथा चेदशान्तिः स्यादतो मित्रस्येत्युच्यते।

ऋतशब्दो नात्र यज्ञवाची किंतु सत्यवाचीत्याह-

" ऋतस्य पथा प्रेत चन्द्रदक्षिणा इत्याह सत्यं वा ऋतꣳ सत्येनैवैना ऋतेन वि भजति " [सं० का० ६ प्र० ६ अ० १] इति[1]।

मुख्यस्यार्धिनस्तृतीयिनः पादिनश्चर्त्विजां यथोचितं विभजतीत्यर्थः।

दक्षिणानां सदोगार्हपत्ययोर्मध्यवर्तिना यज्ञमार्गेण गमनं प्रसिद्धमित्याह-

" यज्ञस्य पथा सुविता नयन्तीरित्याह यज्ञस्य ह्येताः पथा यन्ति यद्दक्षिणाः" [ सं० का० ६ प्र० ६ अ० १ ] इति।

कल्पः-" ब्राह्मणमद्य राध्यासमित्यात्रेयाय प्रथमाय हिरण्यं ददाति द्वितीयाय तृतीयाय वा तदभावे य आर्षेयः संनिहितस्तस्मै दद्यात् " इति।

त्रिविधा आत्रेयाः प्रवरे पठिता अतः प्रथमायेत्यादिविशेषणम्।

पाठस्तु-

**ब्राह्मणमिति**। अद्यास्मिन्यज्ञदिने ब्राह्मणमत्रिगोत्रोत्पन्नं राध्यासं हिरण्येन साधयानि तोषयाणीत्यर्थः। कीदृशम्। ऋषिं वेदार्थज्ञम्। आर्षेयं वेदार्थविदः पुत्रम्। पितृमन्तं पित्रा सम्यगनुशिष्टम्। पैतृमत्यं पितृमत्याः सम्यगनुशिष्टायाः पतिव्रतायाः पुत्रम्। शोभनो धातुः सर्वधातुभ्य उत्तमं हिरण्यं दक्षिणा यस्यासौ सुधातुदक्षिणस्तादृशम्।

ब्राह्मणादिशब्दैर्वेदशास्त्रपारं गतो विवक्षित इति दर्शयति-

" ब्राह्मणमद्य राध्यासमृषिमार्षेयमित्याहैष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवान्तस्मादेवमाह " [ सं० का० ६ प्र० ६ अ० १ ] इति।

---

१ ख. ति। सत्येनैव विभजतीति कृत्वा मु॰। २ ख. प्रथिता।

(दक्षिणावर्णनम्)

कल्पः—" सद एत्य वि सुवः पश्येत्यनुवीक्षते " इति।

एतदेवाभिमेत्य सदोऽभ्यैतीति पूर्वं विहितम्।

पाठस्तु—

**वि सुवरिति**। हे यजमान स्वर्गं विपश्यान्तरिक्षं च विपश्य। सदस्यवस्थितैर्विप्रैः सह यतस्वानुतिष्ठ।

सुवः पश्येत्यस्याभिप्रायं दर्शयति—

"वि सुवः पश्य व्यन्तरिक्षमित्याह सुवर्गमेवैनं लोकं गमयति " [सं० का० ६ प्र० ६ अ० १] इति।

सदस्यैरित्यनया सहार्थे तृतीयया मित्रताऽभिहितेत्याह—

" यतस्व सदस्यैरित्याह मित्रत्वाय" [सं० का० ६ प्र० ६ अ० १] इति।

कल्पः—" अस्मद्दात्रा देवत्रा गच्छतेति नीता अनुमन्त्र्य " इति।

पाठस्तु—

**अस्मद्दात्रा इति**। हे दक्षिणा अस्माभिर्दत्ताः सत्यो देवेषु ऋत्विक्षु गच्छत। हे गावो मधुरक्षीरोपेताः सत्यः परलोके प्रदातारं यजमानं रूपान्तरेणाऽऽविशत। अस्माननवहायापरित्यज्य देवयानेन पथेत सुकृतां मार्गेण गच्छत। गत्वा च पुण्यकृतां स्थाने सीदत। तत्स्थानं नोऽस्मदर्थं संस्कृतं सम्यगुपभोगयोग्यतया निष्पादितम्।

प्रदातारमाविशतेत्यस्यार्थमाह—

" अस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतेत्याह वयमिह प्रदातारः स्मोऽस्मानमुत्र मधुमतीरा विशतेति वावैतदाह" [सं० का० ६ प्र० ६ अ० १] इति।

प्रथमतो दातव्यं विधत्ते—

"हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिरेव पुरस्ताद्धत्ते सुवर्गस्य लोकस्यानुख्यात्यै " [सं० का० ६ प्र० ६ अ० १] इति।

तस्य प्रतिग्रहीतृसंबन्धं विधत्ते—

" अग्नीधे ददात्यग्निमुखानेवर्तून्प्रीणाति " [सं० का० ६ प्र० ६ अ० १] इति।

अग्निमुखानग्निसहितानाधानकालवसन्ताद्यृतून् । अत्र सूत्रम्—" हिरण्यं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधे ददाति " इति ।

ऋत्विगन्तरे दानं विधत्ते—

" ब्रह्मणे ददाति प्रसूत्यै होत्रे ददात्यात्मा वा एष यज्ञस्य यद्धोताऽऽत्मानमेव यज्ञस्य दक्षिणाभिः समर्धयति " [ सं० का० ६ प्र० ६ अ० १ ] इति ।

प्रसूत्या अनुज्ञानाय । होतुर्बहुमन्त्रपाठेन यज्ञात्मत्वम् । एवमृत्विगन्तरे दानमुन्नेयम् ।

अत्र विनियोगसंग्रहः—

" उदुत्रिभिर्दक्षिणानां होमो दिवमतो घृतात् ।
हिरण्यमुद्गृह्य रूपे दक्षिणा अभिगच्छति ॥ १ ॥
तुथो वो विश्ववेदेति भिन्द्याच्चर्मणि दक्षिणाः ।
एतत्ता निनयेद्ब्रह्म हेमाऽऽत्रेयाय यच्छति ॥ २ ॥
वि सुवः सद आलोक्य ह्यस्मद्दात्राऽनुमन्त्रणम् ।
सप्तत्रिंशेऽनुवाकेऽस्मिन्दश मन्त्रा उदीरिताः ॥ ३ ॥ इति ।

अथ मीमांसा ।

दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

" ऋत्विग्दानमदृष्टार्थमानत्यै वाऽग्रिमः श्रुतेः ।
वैरूप्यान्नियमान्नैवं दृष्टत्वाद्दानेतेः श्रुतिः ॥
भृतौ च नियमादेतददृष्टं स्याद्विरूपता ।
वचनात्तेन सत्रेषु स्वामित्वान्न भृतिः क्वचित् " ॥ इति ।

ऋत्विग्भ्यो दक्षिणां ददातीति प्रकृतौ श्रूयते । तत्किमदृष्टार्थमानत्यर्थं वेति संशयः । भृत्या परिक्रीय वशीकार आनतिः । अदृष्टार्थं तत्स्यात् । अन्नहिरण्यादीनामदृष्टार्थे त्यागे दानशब्दस्य प्रसिद्धत्वात् । यद्येतद्दानं भृतिः स्यात्तदानीमल्पाधिककर्मानुरूप्येण द्रव्यं देयम् । वैरूप्यं त्वत्र दृश्यते—स्वल्पकर्मणि त्रैधातवीये सहस्रं देयम् । अधिके कर्मण्यृतपेये स्वल्पं सोमचमसमात्रं दीयते । तथा द्वादशशतादिपरिमाणनियमो मन्त्रनियमश्च भृतौ नोपपद्यते । कर्मकरानुमत्या न्यूनाधिकभावसंभवात्तक्षरजकादिभृतौ मन्त्रादर्शनाच्च । तस्माददृष्टार्थमित्यग्रिमः पक्षः प्राप्नोति । नैवम् । आनतेर्दृष्टप्रयोजनत्वात् । दानश्रुतिस्तु दृष्टार्थभृतावप्य-

१ क. °काले व° । ख. °कालीनव° । २ क. ख. घ. ङ. °नतिः श्रु° ।

( दक्षिणावर्णनम् )

स्ति। भृतिर्देयेति प्रयोगात् । परिमाणमन्त्रानियमाददृष्टमस्तु। दृष्टस्याभावात्। वैरूप्यं तु वचनबलादभ्युपगम्यते। दक्षिणाया भृतिरूपत्वं प्रत्यक्षवेदवाक्याभ्याम-वगम्यते—“दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयुः” इति। तस्मादृत्विग्दानमानत्यर्थम् । एवं च सति सत्र ऋत्विजां यजमानत्वाद्भृतिरूपा दक्षिणा न क्वापि देयेत्येतद्विचारफलं द्रष्टव्यम्।

तत्रैव तृतीयपादे चिन्तितम्—

“दक्षिणा द्वादशशतं तस्येत्येतद्गवादिषु।
सर्वेषु केषुचिद्वाऽऽद्ये प्रत्येकं मिलितेषु वा।
संख्यागुणस्य प्रत्येकं गवाद्यन्वयतोऽग्रिमः।
वाक्यभेदान्न तत्किंतु मिलितेषु समुच्चयात्॥
×प्रस्थाद्यौचित्यतो धान्ये सर्वेषां न समुच्चयः।
असर्वेष्विति पक्षेऽपि पशवो वैकमेव वा॥
संख्यौचित्येन पशवो नैतत्तस्येत्यनन्वयात्।
एकत्वेऽप्यत्र यत्किंचिन्माषा वा गाव एव वा॥
यत्किंचिन्नियमाभावान्माषाः संनिहितत्वतः।
माषा निराकृता गावः प्राथम्याच्चोपकारतः।
तस्येति वाक्याद्गोद्रव्यं न युक्तः प्रकृतः क्रतुः।
संख्यान्तरं चोद्विकृतौ स्याद्गवां बाध्यतामियम्”इति।

ज्योतिष्टोमे देयद्रव्याण्यनुक्रम्य संख्याविशिष्टा दक्षिणा विधीयते—“गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा” इति। द्वादशाधिकं शतं द्वादशशतम्। तत्र संशयः—येयं संख्या सा किं गवादिसर्वद्रव्यविषया किंवा कतिपयविषया। सर्वपक्षेऽपि प्रतिद्रव्यमियं संख्या, उत मिलितानाम्। तत्र गवादिद्रव्याणि प्रधानानि, संख्या तु तद्गतो गुणः। प्रतिप्रधानं गुणावृत्तिर्न्याय्या। तस्माद्गवादिद्रव्येषु सर्वेषु प्रत्येक-मियं संख्येति प्रथमपक्षगते प्रथमे संख्याविकल्पे प्राप्ते ब्रूमः—नैतद्युक्तं वाक्य-

---

× जैमिनीयन्यायमालाविस्तरे तु संख्यानौचित्यत इति पाठः।

---

१ क. ग. घ. ङ. चेत्प्रकृतं स्या°। २ ख. °तराश्च गर्दभाश्चा°।

भेदप्रसङ्गात् । अतो मिलितानामियं संख्येति द्वितीयः संख्याविकल्पोऽभ्युपगन्तव्यः। तथा सति समुच्चयवाचिनश्च शब्दा अनुगृह्यन्ते। एतदप्ययुक्तमनौचित्यात्। न व्रीहियवादिधान्येषु द्वादशाधिकशतान्तर्गता द्वित्रादिसंख्योचिता । परिक्रीतस्यर्त्विजो द्वित्रैर्व्रीहिबीजैः प्रयोजनाभावात्प्रस्थाधिकखार्यादिसंख्या तत्रोचिता। न चेयमत्र श्रुता । तस्मान्मिलितानां सर्वेषां समुच्चय इत्ययं पक्षो न युक्तः। कतिपयद्रव्यविषया संख्येत्यस्मिन्नपि पक्षे किं गवाद्याः षड्विधाः पशवः किंवा दशसु गवादिद्रव्येष्वेकं द्रव्यम् । तत्र पशुषु श्रूयमाणायाः संख्याया उचितत्वात्पशव इति प्राप्ते ब्रूमः—नैतद्युक्तम् । तस्य द्वादशशतं दक्षिणेत्यत्र तस्येत्यनेनैकवचनान्तेन षण्णां गवादिपशूनामन्वेतुमयोग्यत्वात् । एकत्वपक्षेऽपि यत्किंचिदेकं किंवा माषद्रव्यमुत गोद्रव्यम् । तत्र नियामकाभावाद्यत्किंचिदिति प्राप्तम्। तन्न । संनिधेर्नियामकत्वात् । माषाश्च तस्य द्वादशशतं दाक्षिणेति माषा संनिहिताः । तर्ह्यस्तु माषद्रव्यमिति चेत् न । प्रस्थादिपरिमाणसंख्यौचित्येन निराकृतत्वात् । तस्माद्गोद्रव्यमिति पक्षः परिशिष्यते । प्रथमश्रुतत्वोपकारौ तत्र नियामकौ । अस्ति हि महानुपकारः । ऋत्विजः प्रतिग्रहीतुर्गव्यैराज्यक्षीरादिभिरग्निहोत्रदर्शपूर्णमासादिसिद्धेः । ननु तस्य प्रकृतस्य क्रतोर्द्वादशशतं दक्षिणेत्यन्वयाद्गोद्रव्यं न प्रतीयत इति चेत् । न । यद्गोद्रव्यं तस्य द्वादशशतामिति[1] वाक्येन तत्प्रतीतेः । वाक्यं हि प्रकरणाद्बलीयः । तस्माद्गवां द्वादशशतामिति सिद्धान्तः । विकृतिषु यत्र गोदाक्षिणायाः संख्यान्तरं श्रुतं तत्रास्याः संख्याया बाधो विचारफलम् ।

तत्रैवान्यच्चिन्तितम्—

" गोदाने विहिते स्वेच्छा नियतिर्वाऽन्तिमेऽपि किम् ।
अविभागो विभागो वा नियमानुक्तितोऽग्रिमः ।
अविभागो बहुत्वोक्तेर्बहुत्वं न विवक्षितम् ।
विभागः स्यात्परस्वत्वासिद्धेर्लिङ्गं च दृश्यते " इति ।

पूर्वोक्त एव गवां दाने संशयः । ऋत्विग्भ्यो देयानामुक्तसंख्यानां गवां विभागाविभागयोर्यजमानेच्छैव प्रयोजिका, उतास्त्यन्यतरनियतिः । यदाऽपि नियतिस्तदाऽप्यविभागो विभागो वा । तत्र नियामकस्यानुक्तत्वादिच्छेति ताव-

१ क. ग. घ. ङ. °ति त° ।

( समिष्टयजुर्होमः )
त्प्राप्तम् । ऋत्विग्भ्यो दाक्षिणां ददातीति बहुवचनश्रवणेन समूहस्य प्रतिग्रहीतृत्वादविभाग इति पक्षान्तरम् । ग्रहैकत्ववदुद्देश्यगतत्वाद्बहुवचनं न विवक्षितमित्येकैकः प्रतिग्रहीता । तथा सति विभागोऽवश्यं भवेति । समूहाय दत्ते सत्येकैकस्य स्वामित्वाभावात्परस्वत्वापादनलक्षणो दानशब्दार्थो न सिध्यति । किंच—" तुथो वो विश्ववेदा वि भजतु " इति मन्त्रे विभागलिङ्गं दृश्यते । तस्माद्विभागनियमो राद्धान्तः ।

तत्रैवान्यच्चिन्तितम्—

"स विभागः समो नो वा विशेषाश्रवणात्समः ।
वैषम्यं स्याद्यथार्थोसमेवं तत्स्यात्समाख्यया " इति ।

पूर्वोक्तः स विभागः समः स्यात् । वैषम्यहेतोर्विशेषस्याश्रवणात् । साम्यहेतुस्तु लौकिको न्यायः । लोके हि पुत्राणां पितृधने समविभागो दृष्टः । तस्मात्सम इत्येकः पक्षः । कर्मकरेषु प्रयासानुरूपे(प्ये)ण भृतितारतम्यं दृष्टं तद्वदत्रापीति द्वितीयः पक्षः । द्वादशाहे दीक्षायामेवं समाख्यायते—" अर्धिनो दीक्षयन्ति पादिनो दीक्षयन्ति" इति । अर्धं येषामृत्विजां तेऽर्धिनः । एवं पादिनो योजनीयाः। तद्विशेषो याज्ञिकमुखादवगन्तव्यः । ततः श्रौतसमाख्यानुरूपे(प्ये)ण केषांचिदर्धं केषांचित्पाद इत्यादिर्विषमो विभाग इति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥

---

[ अथ प्रथमाष्टके चतुर्थप्रपाठके चतुश्चत्वारिंशोऽनुवाकः ]।

धाता रातिः संवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः । त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधातु । समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति सं देवा-

---

१ क. ग. घ. ङ. °वतीति । २ क. ख. ग. °यासं मैवं ।

ना॑ꣳ सुमत्या य॒ज्ञिया॑नाम् । सं वर्च॑सा पय॑सा सं त॒नूभि॒रग॑न्महि॒ मन॑सा सꣳ शि॒वेन॑ । त्वष्टा॑ नो॒ अत्र॒ वरि॑वः कृणोतु ( १ ) अनु॑ मार्ष्टु त॒नुवो॒ यद्विलि॑ष्टम् । यद॒द्य त्वा॑ प्रय॒ति य॒ज्ञे अ॒स्मिन्नग्ने॒ होता॑रमवृ॑णीमही॒ह । ऋध॑गया॒डृध॑गु॒ताश॑मिष्ठाः प्रजा॒नन्य॒ज्ञमुप॑ याहि वि॒द्वान् । स्व॒गा वो॑ दे॒वाः सद॑नमक॒र्म य आ॑ज॒ग्म सव॑ने॒दं जु॑षा॒णाः । जक्षि॒वाꣳसः॑ पपि॒वाꣳसं॑श्च॒ विश्वे॒ऽस्मे ध॑त्त वस॒वो वसू॑नि । याना॒ऽव॑ह उश॒तो दे॑व दे॒वान्तान् ( २ ) प्रेर॑य॒ स्वे अ॑ग्ने स॒धस्थे॑ । वह॑माना॒ भर॑माणा ह॒वीꣳषि॒ वसुं॑ घ॒र्मं दिव॒मा ति॑ष्ठ॒तानु॑ । यज्ञ॒ य॒ज्ञं ग॑च्छ य॒ज्ञप॑तिं गच्छ॒ स्वां योनिं॑ गच्छ॒ स्वाहै॒ष ते॑ य॒ज्ञो य॑ज्ञपते स॒हसू॑क्तवाकः सु॒वीरः॒ स्वाहा॒ देवा॑ गातुविदो गा॒तुं वि॒त्त्वा गा॒तुमि॑त॒ मन॑सस्पत इ॒मं नो॑ देव दे॒वेषु॑ य॒ज्ञꣳ स्वाहा॑ वा॒चि स्वाहा॒ वाते॑ धाः ( ३ ) ॥

( कृ॒णो॒तु॒ तान॒ष्टाच॑त्वारिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके चतुश्चत्वारिंशोऽनुवाकः ॥ ४४ ॥

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टात्रिंशोऽनुवाकः ) ।

सप्तत्रिंशेऽनुवाके दक्षिणा निरूपिता । अष्टात्रिंशे समिष्टयजुर्होमो निरूप्यते ।

कल्पः—" जुह्वां नवगृहीतं गृहीत्वा धाता रातिरित्यन्तर्वेद्यूर्ध्वस्तिष्ठन्संततं समशो नव समिष्टयजूंषि जुहोति " इति ।

( समिष्टयजुर्होमः )

तत्र षड्ऋचस्त्रीणि यजूंषि जुहोति।

षट्सु प्रथमा तावदेवं पठिता—

**धातेति** । धाता सविता प्रजापतिरग्निस्त्वष्टा विष्णुश्चेते षड्देवा नोऽस्माकमिदं हविर्जुषन्ताम् । कीदृशो धाता । रातिर्दानशीलः । कीदृशः प्रजापतिः । निधिपतिः, महाशङ्खखर्वादिनामकानां नवानां निधीनां पालयिता । सोऽयं देवगणो यजमानसंबन्धिन्या प्रजया संरराणः सम्यग्रममाणस्तथा यजमानार्थं द्रविणं दधातु पोषयतु ।

अथ द्वितीया—

**समिन्द्रेति** । हे इन्द्र त्वमनुग्रहयुक्तेन मनसा नोऽस्मान्गोभिः संनेषि संयोजय । सूरिभिर्विद्वद्भिर्होतृप्रमुखैः संयोजय । हे मघवन्स्वस्त्या क्षेमेण संयोजय । ब्रह्मणा वेदेनार्थज्ञानसहितेन देवकृतं देवार्थं कर्म यदस्ति तेन संयोजय । यज्ञसंबन्धिनां देवानां सुमत्याऽनुग्रहबुद्धया संयोजय ।

अथ तृतीया—

**सं वर्चसेति** । वयं देवतानुग्रहबलाद्वर्चसा बलेन तद्धेतुना च पयसा क्षीरादिना समगन्महि संगताः स्मः। तनूभिः शरीरैः शोभनैः संगताः। शिवेन श्रद्धालुना मनसा संगताः । त्वष्टा देवो नोऽस्माकमत्रास्मिन्कर्मणि वरिवो वरणीयं धनं कृणोतु करोतु । किंच तनुवः शरीराणि अनुमार्ष्टु शोधयतु । यद्विलिष्टं पापं तदप्यनुमार्ष्टु ।

अथ चतुर्थी—

**यदद्येति** । हेऽग्ने यद्यस्मात्कारणादद्यास्मिन्दिन इह देवयजनदेशेऽस्मिन्यज्ञे प्रयति प्रवर्तमाने सति त्वां होतारं होमनिष्पादकमवृणीमहि तस्मात्कारणादृधकसमृद्धं यथा भवति तथाऽयाडयाक्षीः । उतापि च त्वमृधक्समृद्धं प्रजानन्नशमिष्ठा अस्मद्विघ्नशान्तिमकार्षीः । उत त्वं विद्वान्सर्वं कर्म जानन्निमं यज्ञमुपयाहि प्राप्नुहि ।

अथ पञ्चमी—

**स्वगा व इति** । हे देवा ये यूयं जुषाणाः प्रीयमाणा इदं सवना इमानि त्रीणि सवनानि आजग्माऽऽगतास्तेषां वः सदनं स्थानं स्वगा स्वाधीनमकर्म वयमकार्ष्म । विश्वे ते सर्वे यूयं जक्षिवांसः सवनीयपुरोडाशान्भक्षितवन्तः पपिवांसः

१ क. °स्तया य° । १ क. घ. ङ. °स्मच्छान्ति° ।

सोमं पीतवन्तश्च । हे वसवो निवासहेतवो यूयमस्मे अस्मासु वसूनि धनानि धत्त स्थापयत ।

अथ षष्ठी-

**यानावह इति ।** हेऽग्ने देवोशतो हवींषि कामयमानान्यान्देवानावहो वर्ण-व्यत्ययादाहव आहूतवानसि, तान्देवान्स्वे स्वकीये सधस्थे सहनिवासस्थाने प्रेरय । हे देवा हवींषि वहमाना रथादिभिर्नयन्तो भरमाणाः पोषयन्तो वसुं जगन्निवासहेतुं घर्ममादित्यमातिष्ठताऽऽगच्छत । अन्वनन्तरं दिवं स्वर्गमागच्छत ।

अथ त्रयाणां यजुषां मध्ये प्रथमं यजुः-

**यज्ञेति ।** हे यज्ञ त्वं स्वप्रतिष्ठार्थं यज्ञनामकं विष्णुं गच्छ । फलप्रदानार्थं यज्ञपतिं यजमानं गच्छ । स्वनिष्पत्त्यर्थं स्वां योनिं स्वकारणभूतां वायोः क्रिया-शक्तिं गच्छ । स्वाहा हुतमस्तु ।

अथ द्वितीयम्-

**एष त इति ।** हे यज्ञपते यज्ञस्वामिन्नेषोऽनुष्ठीयमानस्ते यज्ञः सूक्तवाकैः स्तोत्रैः सहितः, शोभना वीराः कर्मकुशला ऋत्विजो यस्यासौ सुवीरः । तत इदमाज्यं त्वया[१] स्वाहा[२] हुतमस्तु ।

अथ तृतीयम्-

**देवा इति ।** हे गातुविदो मार्गज्ञा देवा गातुं वित्त्वा भवदागमनमार्गं ज्ञात्वा यज्ञे समाप्ते सति गातुमित पुनस्तमेव मार्गं गच्छत । हे मनसस्पते देव परमेश्वर नोऽस्माकमिमं यज्ञं देवेषु हविर्भुक्षु स्वाहा प्रथमं स्थापय । ततो वाचि मन्त्ररूपा-यां वाग्देवतायां स्थापय । ततो वाते क्रियाप्रवर्तके देवे धाः स्थापय ।

यथोक्तमन्त्रसाध्यं होमं विधत्ते-

" समिष्टयजूꣳषि जुहोति यज्ञस्य समिष्ट्यै यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यद-त्येति यन्नात्येति यदतिकरोति यन्नापि करोति तदेव तैः प्रीणाति " [ सं० का० ६ प्र० ६ अ० २ ] इति ।

सम्यग्यजनं समिष्टं युज्यन्ते प्रयुज्यन्त इति धाता रातिरित्यादयो मन्त्रा यजूंषि । समिष्टार्थानि यजूंष्युच्चार्याऽऽज्यं जुहुयात् । तच्च यज्ञस्य सम्यगनुष्ठित्यै संपद्यते । क्रूरादिदोषाणां होमेन समाहितत्वात् । क्रूरं पशुहिंसादि । विलिष्टं

१ ख. त्वयि । २ क. घ. ङ. स्वाहु° ।

( समिष्टयजुर्होमः )

विहितस्य दक्षिणादिद्रव्यस्याल्पीभावः। अत्ययानत्ययौ कालकृतौ। तथा हि—पाशुकानां प्रयाजानां चोदकवशेन हविरासादनादूर्ध्वमनुष्ठानं प्राप्तं तत्तु तिष्ठन्तं पशुं प्रयजन्तीति वचनेन पशुविशसनात्प्रागपकृष्टं, तदनादृत्य चोदकवशेनैवानुष्ठानमशास्त्रीयः कालात्ययः। तथा तृतीयसवनोपक्रमे सवनीयपशोरङ्गप्रचारानन्तरमेवानूयाजाश्चोदकवशेन प्राप्तास्ते त्वाग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीति वचनेन तृतीयसवनस्य समाप्तिकाल उत्कृष्टाः, तदनादृत्योपक्रम एव तदनुष्ठानमशास्त्रीयः काला[न]त्ययः। अपबर्हिषः प्रयाजान्यजतीति वचनेनावभृथे बर्हिर्नामकश्चतुर्थप्रजाजो निषिद्धः। तन्निषेधमतिक्रम्य तस्यानुष्ठानमतिकरणम्। विहितस्य कस्यचिदङ्गस्य विस्मृतिरकरणम्। अपिशब्दः क्रूरादीनां समुच्चयार्थः। तैश्च क्रूरादिकं तैरेव होमैः प्रीणाति समादधाति।

आहुतिसंख्यां विधत्ते—

" नव जुहोति नव वै पुरुषे प्राणाः पुरुषेण यज्ञः संमितो यावानेव यज्ञस्तं प्रीणाति " [ सं० का० ६ प्र० ६ अ० २ ] इति।

प्राणास्तदाधारच्छिद्राणि।

नवसु मन्त्रेषु ऋग्यजुषोरवान्तरसंख्यां विधत्ते—

" षड्ऋग्मियाणि जुहोति षड्वा ऋतव ऋतूनेव प्रीणाति त्रीणि यजूꣳषि त्रय इमे लोका इमानेव लोकान्प्रीणाति " [ सं०का०६प्र०६अ०२] इति।

यज्ञस्य यजमानप्राप्तिः स्वकारणप्राप्तिश्च मन्त्रपाठादेव संपद्यत इत्याह—

" यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेत्याह यज्ञपतिमेवैनं गमयति स्वां योनिं गच्छेत्याह स्वामेवैनं योनिं गमयति" [सं० का० ६ प्र०६ अ० २] इति।

सुवीरशब्देन वीर्यप्राप्तिः सूच्यत इत्याह—

" एष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीर इत्याह यजमान एव वीर्यं दधाति " [ सं० का० ६ प्र० ६ अ० २ ] इति।

देवा गातुविद इत्येतन्मन्त्रप्रशंसार्थमाख्यायिकामाह—

" वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽयीयजो यज्ञे यज्ञं प्रत्यतिष्ठिपा३ यज्ञपता३विति स होवाच यज्ञपताविति सत्याद्वै सृञ्जयाः परा बभूवुरिति होवाच यज्ञ वाव यज्ञः प्रतिष्ठाप्य आसीद्यजमान-

१ क. घ. ङ. °जतीति। २ ख. °थेष्टौ ब°। ३ ख. तत्क्रूरा°।

स्यापराभावायेति देवा गातुविदो गातुं वित्त्वा गातुमितेत्याह यज्ञ एव यज्ञं प्रति प्रापयति यजमानस्यापराभावाय " [ सं० का० ६ प्र० ६ अ० २] इति[१]।

वसिष्ठगोत्रोत्पन्नः सत्यहवस्य पुत्रो देवभागनामानं मुनिं पप्रच्छ, यदा सृञ्जयाख्यदेशस्थान्बहुविधसोमयागानुष्ठायिनो याजितवानसि तदा किं यज्ञं स्वाहेत्येवं यज्ञलिङ्गके देवा गातुविद इत्येतस्मिन्मन्त्रे यज्ञं सामिष्टयजुर्होमं समापितवानसि, उत यज्ञपतिं गच्छेत्येवं यज्ञपतिलिङ्गके यज्ञ यज्ञं गच्छेत्येतस्मिन्मन्त्र इति। तत्र द्वितीयपक्षे सति यस्मात्सत्याद्यज्ञात्पराभवंस्तस्मात्प्रथमपक्ष एवोपादेय इत्युत्तरम्।

अत्र विनियोगसंग्रहः—

" धातानुवाके सर्वस्मिन्सामिष्टाख्ययजूंषि हि।
ऋचः षडाद्याः शेषाणि यजूंष्येतैर्जुहोति हि " इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टात्रिंशोऽनुवाकः॥ ३८॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके पञ्चचत्वारिंशोऽनुवाकः )।

उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ। अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्। शतं ते राजन्भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु। बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत्। अभिष्ठितो वरुणस्य पाशोऽग्नेरनीकमप आ विवेश। अपां नपात्प्रतिरक्षन्नसुर्यं दमेदमे ( १ ) समिधं यक्ष्यग्ने। प्रति ते जिह्वा घृतमुच्चरण्येत्समुद्रे ते हृदयमप्स्वन्तः।

---

१ क. घ. ङ. °ति। बासि°।

( अवभृथाभिधानम् )

सं त्वा विशन्त्वोषधीरुताऽऽपो यज्ञस्य त्वा यज्ञपते हविर्भिः। सूक्तवाके नमोवाके विधेमावभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि सुमित्रा न आप ओषधयः(२) सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मो देवीराप एष वो गर्भस्तं वः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतात्प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेह्यपो अन्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आऽगमं तं मा सꣳसृज वर्चसा॥ [ ३ ]

( दमेदम ओषधय आ षट्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके पञ्चचत्वारिंशोऽनुवाकः॥ ४५॥ [ ३९ ]

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठक एकोनचत्वारिंशोऽनुवाकः )।

अष्टात्रिंशेऽनुवाके समिष्टयजुर्होमोऽभिहितः। एकोनचत्वारिंशेऽनुवाकेऽवभृथो वर्ण्यते।

कल्पः—" उरुꣳ हि राजा वरुणश्चकारेति वेद्या अभिमयान्तो वदन्ति चात्वालाद्वा " इति।

पाठस्तु—

उरुꣳ हीति। उशब्दोऽवधारणे। वरुण एव राजा सूर्याय सूर्यस्यान्वेतवे, अनुक्रमेण गन्तुमपदे निरालम्बेऽन्तरिक्ष उरुं पन्थां विस्तीर्णं मार्गं यस्माच्चकार

तस्मादस्माकमपि पादा प्रतिधातवे पादं प्रक्षेप्तुं मार्गमकः करोतु । उतापि च यः शत्रुरपवक्ता निन्दको यश्च हृदयाविधो हृदयोपलक्षितं शरीरं ताडयति, चिच्छब्दः समुच्चये, सोऽपि प्रतिबन्धमकृत्वा मार्गं करोत्वित्यर्थः ।

कल्पः—" शतं ते राजन्भिषजः सहस्रमित्यपो दृष्ट्वा जपति " इति ।

पाठस्तु—

**शतं त इति** । हे राजन्वरुण तव शतसहस्रसंख्याका भिषजोऽस्मदुपद्रवनिवारकाः सन्ति[1] । तस्मादस्मासु तव सुमतिरनुग्रहबुद्धिरस्तु । कीदृशी । उर्वी विपुला सार्वकालिकी[2]त्यर्थः । गम्भीराऽऽदरयुक्तेत्यर्थः । द्वेषो द्वेषिणो बाधस्व । निर्ऋतिं यज्ञविघातिनीं परांचैः[3] कुरु तिरस्कुर्वित्यर्थः । अस्माभिः कृतमपि पापमस्मत्तः प्रमोचय ।

**अभिष्ठित इति** । कल्पः—" अभिष्ठितो वरुणस्य पाश इत्युदकान्तमभिति[4]ष्ठेन्ते[5](ति) " इति ।

जलमध्यवर्ती[6] सूक्ष्मतन्त्वाकारो बन्धनहेतुर्जीवविशेषो वरुणस्य पाशः । सोऽयमभिष्ठितः पादाक्रमणेन तिरस्कृतः ।

कल्पः—" अग्नेरनीकमप आ विवेशेति स्रुच्यमाघारयति " इति ।

पाठस्तु—

**अग्नेरिति** । अग्नेरनीकं मुखमप्सु प्रविष्टम् । हेऽपां नपादेतन्नामकाग्ने दमेदमे तत्तद्गृहेऽसूर्यमसुरैः कृतं यज्ञविघ्नं प्रतिरक्षन्प्रतिनिवर्त्य यज्ञं पालयन्समिधं समिन्धनसाधनं घृतं यक्षि संगतं कुरु । ते तव जिह्वा घृतं प्रत्युच्चरण्येदुद्युक्ता भवतु ।

उरुं हि राजेत्यादिमन्त्रान्व्याचिख्यासुः प्राचीनमनुष्ठानं विधत्ते—

" अवभृथयजूंषि जुहोति यदेवार्वाचीनमेकहायनादेनः करोति तदेव तैरव यजते " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

अवभृथाख्यं कर्म कर्तुमुदकसमीपं जिगमिषुरायुर्दा इत्यादीनि[7] यजूंषि जुहुयात् । तथा च सूत्रम्—" आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादवभृथ निचङ्कुणेति च, नमो रुद्राय वास्तोष्पतये, आयने विद्रवणे, उद्याने यत्परायणे,

१ ख. °न्ति । अस्मा° । २ ख. °की । ग° । ३ ख. °राचैस्तिर° । ४ ख. °मधिति° । ५ क. °ष्ठन्ति" इ° । ६ ख. °वर्तिसू° । ७ ख. °त्यादिभिस्त्रिभिर्मन्त्रैर्जुहु° ।

( अवभृथाभिधानम् )

आवर्तने विवर्तने, यो गोपायति तꣳ हुवे" इति। इतः पूर्वमेकस्मिन्संवत्सरे यत्कृतं पापं तदेव तैरवयजते विनाशयति।

अवभृथमुद्दिश्योदकसमीपे गमनं विधत्ते—

"अपोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमव यजते" [ सं० का० ६ प्र० ६ अ० ३ ] इति।

अपां प्राप्त्या तदभिमानिनं वरुणं साक्षादव्यवधानेनैवावयजते पूजयति।

प्रस्तोतुः साम्ना[1]ऽनुयानं विधत्ते—

"वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति साम्ना प्रस्तोताऽन्ववैति साम वै रक्षोहा रक्षसामपहत्यै" [ सं० का० ६ प्र० ६ अ० ३ ] इति[4]।

त्रित्वसंख्यां विधत्ते—

"त्रिर्निधनमुपैति त्रय इमे लोका एभ्य एव लोकेभ्यो रक्षाꣳस्यपहन्ति" [ सं० का० ६ प्र० ६ अ० ३ ] इति[5]।

सर्वेषां निधनोच्चारणं विधत्ते—

"पुरुषःपुरुषो निधनमुपैति पुरुषःपुरुषो हि रक्षस्वी रक्षसामपहत्यै" [ सं० का० ६ प्र० ६ अ० ३ ] इति।

रक्षस्वी सर्वेषां प्रत्येकं बाधकं रक्षोऽस्तीत्यर्थः। अत्र सूत्रम्—"सर्वे सपत्नीकास्त्रिः साम्नो निधनमुपयन्त्यर्धाध्ये द्वितीयं प्राप्य तृतीयम्" इति।

मन्त्रोक्तो मार्गविस्ता(स्त)रः पादप्रतिष्ठार्थ इत्याह—

"उरुꣳ हि राजा वरुणश्चकारेत्याह प्रतिष्ठित्यै" [ सं० का० ६ प्र० ६ अ० ३ ] इति।

भिषक्शब्देन यजमानस्य पापोपद्रवपरिहारः सूच्यत इत्याह—

"शतं ते राजन्भिषजः सहस्रमित्याह भेषजमेवास्मै करोति" [ सं० का० ६ प्र० ६ अ० ३ ] इति।

मन्त्रेणैव वरुणपाशः परिह्रियत इत्याह—

"अभिष्ठितो वरुणस्य पाश इत्याह वरुणपाशमेवाभि तिष्ठति" [सं० का० ६ प्र० ६ अ० ३ ] इति।

---

१ ख. तैर्होमैर°। २ ख. °नि। गमनकाले प्र°। ३ ख. सामगानं। ४ ख. °ति। गीयमानेन साम्ना सह। गच्छेयुरिति शेषः। साम्नोऽन्तेऽवस्थितस्य निधननामकस्य भागस्य त्रिरावृत्तिं त्रि°। ५ ख. °ख्यां च वि°। ६ ख. °ति। ऋत्विग्यजमानानां स°।

अप्सु बर्हिः प्रक्षिप्य तस्योपरि जुहुयादिति विधत्ते—

" बर्हिरभि जुहोत्याहुतीनां प्रतिष्ठित्या अथो अग्निवत्येव जुहोति " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

" अग्निवान्वै दर्भस्तम्बः " इति श्रुतेरग्नियुक्तत्वम् । अत्र सूत्रम्—" तृणं प्रहृत्य स्रौवमाघारयति । यदि वा पुरा तृणं स्यात्तस्मिञ्जुहुयात् " इति ।

चोदकप्राप्तेषु पञ्चसु प्रयाजेषु बर्हिर्नामकं चतुर्थं प्रयाजं निषेधति—

"अपबर्हिषः प्रयाजान्यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्चति" [सं० का० ६ प्र० ६ अ० ३ ] इति ।

यद्यप्याज्यभागौ चोदकादेव प्राप्तौ तथाऽपि मन्त्रविशेषमभिप्रेत्य पुनर्विधत्ते—

" आज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

आज्यभागयोर्यज्ञचक्षुष्ट्वमन्यत्र श्रुतम्—" चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ " इति । प्रकृतावग्निर्वृत्राणीत्यादिके पुरोनुवाक्ये । इह तु अप्स्वग्ने सधिष्टवेत्यादिके । तथा च सूत्रम्—"अप्सुमन्त्रावाज्यभागौ यजति अप्स्वग्न इत्येषाऽप्सु मे सोमो अब्रवीत् " इति ।

प्रधानदेवतां विधत्ते—

" वरुणं यजति वरुणपाशादेवैनं मुञ्चति " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

स्विष्टकृद्देवतां विधत्ते ।

" अग्नीवरुणौ यजति साक्षादेवैनं वरुणपाशान्मुञ्चति " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

साक्षाच्छीघ्रमेवेत्यर्थः ।

चोदकप्राप्तेषु त्रिष्वनूयाजेषु बर्हिर्नामकं प्रथमानूयाजं निषेधति—

" अपबर्हिषावनूयाजौ यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्चति" [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

प्रयाजानूयाजान्प्रशंसति—

" चतुरः प्रयाजान्यजति द्वावनूयाजौ षट्सं पद्यन्ते षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

---

१ ख. वाऽपरो तृ° । २ घ. ङ. परा । ३ क. घ. तृणाग्निः ।

( अवभृथाभिधानम् )

**समुद्र इति**। बौधायनः--"अथाप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तरित्यथैनामद्भिः पूरयति सं त्वा विशन्त्वोषधीरुताऽऽप इत्यप्स्वेवापो जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः सूक्तवाके नमोवाके विधेमेति" इति।

आपस्तम्बस्त्वेकमन्त्रतामाह-" ऋजीषस्य स्रुचं पूरयित्वाऽप्सूपमारयाति समुद्रे ते हृदयमप्स्वन्तरिति ततो यो बिन्दुरुत्पप्लवते तमुपस्पृशेत् " इति।

हे जुहु ते हृदयं बिलं समुद्रसमास्वप्स्वन्तर्मध्ये प्रतितिष्ठतु। ऋजीषरूपा ओषधयस्त्वां सम्यक्प्रविशन्तु। अपि चाऽऽपो विशन्तु। अथवा वरुणं संबोध्य व्याख्येयम्। " इदं द्यावापृथिवी " इत्यादिको मन्त्रः सूक्तवाकः। " नमो वाचे या चोदिता " इत्यादिको मन्त्रो नमोवाकः। हे यज्ञपते यजमान त्वदीयैर्हविर्भिर्देवताः संतर्प्य त्वां सूक्तवाकनमोवाकद्वयोक्तफले विधेम स्थापयामः।

**अवभृथेति**। बौधायनः-अथैतमवभृथं संकिरन्ति यत्किंच सोमालिप्तं भवत्यवभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहीति " इति।

आपस्तम्बस्तु-आयुर्दा अग्ने नमो रुद्राय वास्तोष्पतय इत्येताभ्यां मन्त्राभ्यां सहैतं मन्त्रं होमे विनियुक्तवान्। तच्च पूर्वमुदाहृतम्। हेऽवभृथाभिमानिन्वरुण ×निचङ्कुण राक्षसभर्त्सनार्थं नितरां ध्वनिं कारितवानसि। निचेरुरसि अस्मद्रक्षार्थं निगूढत्वेन चरणशीलोऽसि। हे निचङ्कुणास्माभिर्देवेषु कृतमेनोऽपराधं तैर्देवैः सह त्वमवायाड्विनाशय। मर्त्येषु ऋत्विक्षु कृतं तत्तैर्मर्त्यैः सहावायाड्विनाशय। हे देवोरोरधिकाद्रिषो देवमर्त्यकृतहिंसनान्नोऽस्माना समन्तात्पाहि।

पाठक्रममनादृत्यैतन्मन्त्रमादौ व्याचष्टे--

" अवभृथ निचङ्कुणेत्याह यथोदितमेव वरुणमव यजते " [ सं० का० ६ प्र० ६ अ० ३ ] इति।

निचेरुनिचङ्कुणादिशब्दोदितं वरुणमवयजत उपचराति। धातूनामनेकार्थत्वाद्यथोचितं व्याख्येयम्।

वरुणसंबोधनपक्षमाश्रित्य व्याचष्टे-

" समुद्रे ते हृदयमप्स्वन्तरित्याह समुद्रे ह्यन्तर्वरुणः " [ सं० का० ६ प्र० ६ अ० ३ ] इति।

× विभक्तिलोपश्छान्दसो ज्ञेयः।

१ ख. °रुत्प्लव°। २ ख. संप्रकि°। ३ क. घ. ङ. °भ्यां हो°। ४ ख. °भृथकर्माभि°।

संशब्देन यजमानस्याद्भिरोषधीभिश्च समृद्धिः सूच्यत इत्याह—

" सं त्वा विशन्त्वोषधीरुताऽऽप इत्याहाद्भिरेवैनमोषधीभिः सम्यञ्चं दधाति" [ सं० का० ६ का० ६ अ० ३ ] इति।

**सुमित्रा इति।** बौधायनः—" अथाञ्जलिनाऽप उपसंगृह्य सुमित्रा न आप ओषधयः सन्त्विति तां दिशं निरुक्षति यस्यां दिश्यस्य द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति " इति।

आपस्तम्बस्यैक एव मन्त्रः—"सुमित्रा न आप ओषधय इत्यपः प्रगाह्य" इति।

स्पष्टो मन्त्रार्थः।

कल्पः—" देवीराप इत्यवभृथं यजमानोऽभिमन्त्र्य " इति।

पाठस्तु—

**देवीराप इति।** हे आपो देव्य एष वरुणो युष्माकं गर्भवदन्तरवस्थितोऽतो वो युष्माकं परितोषाय तं वरुणं हविषा सुप्रीतं सुभृतं सुष्ठु पुष्टं चाकर्म वयं कृतवन्तः। स वरुणो नोऽस्मान्सुकृतः सम्यगनुष्ठातॄन्ब्रवीतु।

स्पष्टार्थत्वात्सुमित्रा न इति मन्त्रमुपेक्ष्य देवीराप इत्यस्य स्पष्टार्थतामाह—

"देवीराप एष वो गर्भ इत्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० ६ अ० ३ ] इति।

ऋजीषस्याप्सु प्रहारेणोद्गतानां बिन्दूनां भक्षणाभक्षणयोर्दोषसद्भावात्तत्परिहारायोपस्पर्शं विधत्ते—

" पशवो वै सोमो यद्बिन्दूनां भक्षयेत्पशुमान्त्स्याद्वरुणस्त्वेनं गृह्णीयाद्यन्न भक्षयेदपशुः स्यान्नैनं वरुणो गृह्णीयादुपस्पृश्यमेव पशुमान्भवति नैनं वरुणो गृह्णाति " [ सं० का० ६ प्र० ६ अ० ३ ] इति।

सोमस्य पशुप्राप्तिसाधनत्वात्पशुत्वम्। भिद्यन्त इति भिन्दवो जलकणाः। वरुणग्रहणं नाम महोदराख्यरोगोत्पत्तिः।

**प्रतियुत इति।** कल्पः—"अथापामन्तं प्रतियौति प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश इति " इति।

बन्धनस्य हेतुर्वरुणस्य पाशः प्रतियुतः पृथक्कृतः। प्रत्यस्तो विनाशितः।

मन्त्रस्यार्थस्तथैव फलतीत्याह—

( अवभृथाभिधानम् )

" प्रतियुतो वरुणस्य पाश इत्याह वरुणपाशादेव निर्मुच्यते " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

जलान्निर्गत्य पुनस्तज्जलमदृष्ट्वैव देवयजनदेशे गन्तव्यमिति विधत्ते—

"अप्रतीक्षमा यन्ति वरुणस्यान्तर्हित्यै" [सं० का० ६ प्र० ६ अ० ३] इति।

अन्तर्हितिरदर्शनम् ।

कल्पः—"एधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते " इति ।

पाठस्तु—

**एधोऽसीति** । हे समिदेधोऽसि वृद्धिहेतुरसि । अतो वयमेधिषीमहि अभिवृद्धिं प्राप्ताः । अयमाद्यो मन्त्रः । समित्समिन्धनसाधनमसीति द्वितीयः । तेजः कान्तिसाधनमसि । कान्तिं मयि धेहि स्थापयेति तृतीयः । एतैस्तिस्रः समिध आदध्यात् । अपोऽनु जलमनुप्राप्याचारिषमवभृथकर्मानुष्ठितवानस्मि । रसेन फलेन समसृक्ष्महि संगतोऽस्मि । हेऽग्ने पयस्वान्क्षीरादिसमृद्धियुक्त आगममिहाऽऽगतोऽस्मि । तं मा वर्चसा बलेन संयोजय ।

समिदाधानेन वह्निः पूज्यत इत्याह—

" एधोऽस्येधिषीमहीत्याह समिधैवाग्निं नमस्यन्त उपायन्ति " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

नमस्यन्तः पूजयन्तः ।

मयि धेहीत्यस्याभिप्रायमाह—

" तेजोऽसि तेजो मयि धेहीत्याह तेज एवाऽऽत्मन्धत्ते " [ सं० का० ६ प्र० ६ अ० ३ ] इति ।

अवशिष्टः स्पष्टत्वादुपेक्षितः ।

अत्र विनियोगसंग्रहः—

" उरुं वदन्ति गच्छन्तः सर्वेऽप्यवभृथं प्रति ।
शतं दृष्ट्वा जले जप्यमभ्याक्रामति तज्जलम् ॥ १ ॥
अग्नेः स्रुचाऽऽवारयेत्तु समृजीषं जलं क्षिपेत् ।
अवेति गमने होमः सुमित्रा अवगाहनम् ॥ २ ॥

१ ख. °मित्वमेधोऽभिवृ° ।

देवीरित्यभिमन्त्र्याथ प्रत्युद्गच्छति तज्जलात् ।
एधः समित्तेज एतैर्होम आहवनीयके ॥
अपो अग्नेरुपस्थानमिति मन्त्रास्त्रयोदश ॥ ३ ॥ इति ।

यद्यप्येतावता सौमिकमन्त्रकाण्डं तद्व्याख्यानरूपं ब्राह्मणं च समाप्तं तथाऽपि सन्ति ब्राह्मणशेषा अष्टावनुवाकास्ते त्वत्रैव विव्रियन्ते । तेष्वनुवाकेषु क्रमेणैतेऽर्थाः प्रतिपाद्यन्ते—यूपैकादशिनी पश्वेकादशिनी पात्नीवतः पशुः सौम्यचर्वादिरतिग्राह्योऽदाभ्योंऽशुः षोडशी चेति । तत्र समनन्तरानुवाकप्रतिपाद्या यूपैकादशिन्येकयूपेन सह विकल्पिता । तथा चान्यत्र श्रूयते—" एकयूपो वैकादशिनी वा । अन्येषां यज्ञानां यूपा भवन्ति । एकविंशिन्यश्वमेधस्य[१] " इति । अग्निष्टोमे[२] यः सवनीयः पशुस्तेन सहोपरितनानुवाके वक्ष्यमाणा ऐकादशिनाः पशवो विकल्पिताः । तथा च सूत्रम्—" क्रतुपशव ऐकादशिनाश्च[३] विकल्पन्ते[४] " इति ।

तत्रैकादशिनपश्वर्था यूपैकादशिनी, तां विधत्ते—

" स्फ्येन वेदिमुद्धन्ति रथाक्षेण वि मिमीते यूपं मिनोति त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय प्र हरति स्तृत्यै " [ सं०का०६प्र०६अ०४.] इति ।

भूमेरुपरितनममेध्यमपहन्तुं वेदिस्थानमुद्धन्यात् । तस्मिन्स्थाने वेदिरेकयूपपक्षे पदैर्विमिता[५] । तथा च पूर्वमुदाहृतम्—"त्रिंशत्पदानि पश्चात्तिरश्ची" इत्यादि । एकादशिनीपक्षे त्ववकाशस्य पर्याप्तये रथाक्षेण वेदिर्मातव्या । तथा च सूत्रम्—" यत्प्राग्वेदिसंमानात्तत्कृत्वा दशरथाक्षामेकादशोपराꣳ रज्जुं मीत्वा " इति । उपरशब्देन प्रादेशपरिमिता यूपावटदेशा विवक्षिताः । द्वयोर्द्वयोरवटदेशयोर्मध्यदेशो रथाक्षेण परिमितस्तादृश्या वेदेर्दक्षिणांसमारभ्योत्तरांसपर्यन्तेषु पङ्क्तिरूपेणावस्थितेष्वेकादशस्ववटेषु यूपानुच्छ्रयेत् । यूपमिति जातावेकवचनम् । स्फ्यरथाक्षयूपास्त्रयो वज्रस्य भागाः । तथा चाऽऽम्नातम्—" इन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्यभवत्स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयम् " इति । तेषां त्रयाणामत्र मेलनाद्वज्रस्त्रिवृत्संपद्यते । स्तृत्यै हिंसायै ।

यूपावटस्यार्धं वेद्यामर्धं बहिश्चेत्येवं तद्देशं विधत्ते—

१ ख. °स्य । सुवर्गस्य लोकस्याभिजित्यै " इ° । २ ख. ग. घ. ङ. °मे स° । ३ ग. घ. ङ. °श्च समं वि° । ४ ख. °कल्प्यन्ते । ५ ख. °र्विमातव्या । त° ।

( यूपैकादशिन्यभिधानम् )

यदन्तर्वेदि मिनुयाद्देवलोकमभि जयेद्यद्बहिर्वेदि मनुष्यलोकं वेद्यन्तस्य संधौ मिनोत्युभयोर्लोकयोरभिजित्यै " [ सं० का० ६ प्र० ६ अ० ४ ] इति।

अन्तः समीपदेशः। वेदिश्चान्तश्च वेद्यन्तं तत्संधावुच्छ्रयेत्।

उच्छ्रये कांश्चित्काम्यान्विशेषान्विधत्ते—

" उपरसंमितां मिनुयात्पितृलोककामस्य रशनसंमितां मनुष्यलोककामस्य चषालसंमितामिन्द्रियकामस्य सर्वान्त्समान्प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान्पशुकामस्य " [ सं० का० ६ प्र० ६ अ० ४ ] इति।

तक्षणरहितानि यूपमूलानि उपराणि तैरेकादशिनी संमिता सदृशी। एकस्योपरस्य यावानायामस्तावानेवेतरेषां दशानामित्यर्थः। रशनादेशस्थौल्येन समाना रशनसंमिता। चषालविस्तारेण समाना चषालसंमिता। अत एव सूत्रकारेणोक्तम्—" आयामत उपराणि समानि स्युस्तिर्यक्को मध्यानि रशनाश्च प्रथिम्नश्चषालानि " इति। सर्वानुपररशनादेशचषालविस्तारान्। एकादशसु षष्ठो मध्यमस्तत्पार्श्ववर्तिनौ द्वौ तेषां त्रयाणामेवोपरादिसाम्यनियमो नेतरेषाम्। तथा च सति पशुप्राप्तिः।

तामेव पशुप्राप्तिं दर्शयति—

" एतान्वा अनु पशव उप तिष्ठन्ते पशुमानेव भवति " [ सं० का० ६ प्र० ६ अ० ४ ] इति।

एतान्समाननु यजमानं पशवः प्राप्नुवन्ति।

त्रिभ्योऽतिरिक्तेष्वष्टास्वन्योन्यस्पर्शं विधत्ते—

" व्यतिषजेदितरान्प्रजयैवैनं पशुभिर्व्यतिषजति " [ सं० का० ६ प्र० ६ अ० ४ ] इति।

यूपैकादशिन्याः कामनाभेदेन दक्षिणदेशप्रवणत्वं निन्दित्वोत्तरदेशप्रवणत्वं विधत्ते—

" यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमेषा वै गर्तमिद्यस्यैवं मिनोति ताजक्प्र मीयते दक्षिणार्ध्यं वर्षिष्ठं मिनुयात्सुवर्गकामस्याथ ह्रसीयाꣳसमाक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै " [ सं० का० ६ प्र० ६ अ० ४ ] इति।

गर्तशब्देन दक्षिणदेशनिम्नश्मशानं विवक्षितम्। गर्तवन्मीयन्ते यूपा अस्या-

मेकादशिन्यामिति गर्तमित्तादृशीमुच्छ्रयेत् । अग्निष्ठनामको[१] यो मध्यमो यूपस्त-स्मादुत्तरार्धे स्थितं यूपपञ्चकं वर्षिष्ठमत्युन्नतम् । दक्षिणार्धे स्थितं पञ्चकं ह्रसीयांसं ह्रस्वम् । ईदृश्येकादशिनी गर्तमित्तस्यामुच्छ्रितायां तदानीमेव म्रियते । स्वर्गार्थमुक्तवैपरीत्यं कुर्यात् । आक्रम्यत आरुह्यते स्वर्गोऽनेन सेतुनेत्याक्रमणः ।

लौकिकदृष्टान्तेन रशनाद्वयं विधत्ते–

" यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नै-कां[२] रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते " [ सं०का० ६ प्र० ६ अ० ४ ] इति ।

अत्र सूत्रम्–" अग्निष्ठं द्वाभ्यां रशनाभ्यां परिवीय " इति ।

रशनाद्वयस्यान्तयोर्मेलनं प्रवेष्टनं च कामनाभेदेन विधत्ते–

" यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत्स्त्र्येवास्य जायते यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्र वेष्टयेत्पुमानेवास्य जायते " [ सं० का० ६ प्र० ६ अ० ४ ] इति ।

अन्तयोः समीप उपान्ते । अन्तेन सहितमान्तं रशनाद्वयभागम् ।

एकादशभ्योऽतिरिक्तमुपशयाख्यं यूपं विधत्ते–

" असुरा वै देवान्दक्षिणत उपानयन्तान्देवा उपशयेनैवापानुदन्त तदुपश-यस्योपशयत्वं यद्दक्षिणत उपशय उपशये भ्रातृव्यापनुत्त्यै " [ सं० का० ६ प्र० ६ अ० ४ ] इति ।

पुरा कदाचिदसुरा देवान्स्ववशान्कृत्वाऽग्निष्ठाद्यूपाद्दक्षिणभागे समानयन् । तान-सुरान्देवा उपशयेनैकादशिनीसमीपे शयानेन यूपेनापानुदन्त । समीपशयनादुपश-यनाम संपन्नम् । उपशय उपशेते शयानत्वेन पातयेदित्यर्थः । अत्र सूत्रम्–"उपशयं द्वाभ्यां[३] परिवीयाग्रेण दक्षिणं यूपं[४] निदधाति " इति ।

द्वेष्यं पशुत्वेन निर्दिशेदिति विधत्ते–

" सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुस्तस्य यजमानः पशुर्यन्न निर्दिशेदार्तिमार्च्छेद्यजमानोऽसौ ते पशुरिति निर्दिशेद्यं द्विष्यात्तमेव द्वेष्टि तमस्मै पशुं निर्दिशति " [ सं० का० ६ प्र० ६ अ० ४ ] इति ।

---

१ क. ग. घ. ङ. °को म° । २ क. घ. ङ. °ष्ठाद्यागाद्द° । ३ ख. °भ्यां रशनाभ्यां प° ४ ख. °पं प्राञ्चं नि° ।

( पश्वेकादशिन्याभिधानम् )

अग्निष्ठादय एकादश यूपा वक्ष्यमाणैराग्नेयादिपशुभिरुपेताः। उपशये तु पश्वन्तराभावाद्यजमानस्याऽऽर्तिप्राप्तिर्द्वेष्यं निर्दिश्य तद्वारयेत्।

द्वेष्याभावे मूषकं निर्दिशेदिति विधत्ते—

'यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यान्" [ सं० का० ६ प्र० ६ अ० ४ ] इति।

विहितामेकादशिनीं प्रशंसति—

" प्रजापतिः प्रजा असृजत सोऽन्नाद्येन व्यार्ध्यत स एतामेकादशिनीमपश्यत्तया वै सोऽन्नाद्यमवारुन्ध यद्दश यूपा भवन्ति दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे य एकादशः स्तन एवास्यै स दुह एवैनां तेन " [ सं० का० ६ प्र० ६ अ० ४ ] इति।

दशयूपानां विराड्रूपत्वेन धेनुत्वादेकादशो यूपः स्तनो भवति।

पात्नीवताख्यं त्रयोदशं यूपं विधत्ते—

" वज्रो वा एषा सं मीयते यदेकादशिनी सेश्वरा पुरस्तात्प्रत्यञ्चं यज्ञꣳ संमर्दितोर्यत्पात्नीवतं मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय " [सं० का ६ प्र० ६ अ० ४ ] इति।

सैकादशिनी वज्ररूपा सती पुरस्तादवस्थाय प्रत्यगवस्थितं यज्ञं संमर्दितुमीश्वरा भवति। मर्दितस्य पुनः समाधानं प्रत्युत्तब्धिः। सयो बन्धः। षिञ्बन्धन इत्यस्माद्धातोरुत्पन्नत्वात्। सयत्वाय दृढत्वायेत्यर्थः।

यूपैकादशिनी निरूपिता। अथ पश्वेकादशिनीं विधत्ते—

" प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एतामेकादशिनीमपश्यत्तया वै स आयुरिन्द्रियं वीर्यमात्मन्नधत्त प्रजा इव खलु वा एष सृजते यो यजते स एतर्हि रिरिचान इव यदेषैकादशिनी भवत्यायुरेव तयेन्द्रियं वीर्यं यजमान आत्मन्धत्ते " [ सं० का० ६ प्र० ६ अ० ५ ] इति।

प्रजासृष्ट्या वीर्यादिक्षयाद्रिक्तोऽहमिति धीः। तथा यज्ञप्रयासेनापि। पश्वेकादशिन्या तत्समाधानम्। ते च पशुविशेषा देवतासहिता अश्वमेधप्रकरणे समाम्नाताः—" आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः सꣳहितोऽधोरामः सावित्रो वारुणः पेत्वः " इति। कृष्णग्रीवत्वादिभिर्विशेषिताः

सर्वेऽप्यजाः। मेषी त्वेकैवान्यजातिः। विशेषणानि च तस्मिन्नेव प्रकरणे व्याख्यास्यन्ते।

तानेतानत्र पशून्विशेषेण प्रशंसन्विशेषविधिमुन्नयति—

“प्रैवाऽऽग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेतः सौम्येन दधाति प्र जनयति पौष्णेन बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयति वैश्वदेवो भवति वैश्वदेव्यो वै प्रजाः प्रजा एवास्मै प्र जनयतीन्द्रियमेवैन्द्रेणाव रुन्धे विशं मारुतेनौजो बलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणः” [ सं० का० ६ प्र० ६ अ० ५ ] इति।

प्रवापयति बीजं स्वतः संपादयति। आग्नेयस्य पुंसः सारस्वत्या स्त्रिया सह मिथुनीकरणम्। सौम्येन योषिति रेतोधारणम्। पौष्णेन प्रजोत्पत्तिः। बार्हस्पत्येन ब्रह्मण उत्पत्तिसाधनत्वम्। वैश्वदेवेन प्रजानां तद्देवतानुग्रहः। ऐन्द्रेणेन्द्रियपाटवम्। मारुतेन जनपदप्राप्तिः। ऐन्द्राग्नेन पुष्टिर्बलं च। सावित्रेणानुष्ठाने प्रेरणम्। वारुणेनोपद्रवराहित्यम्।

अत्र षष्ठसप्तमाष्टमानां पशूनां वैश्वदेवैन्द्रमारुतानामितरपशुवत्पाठत एव क्रमो यद्यपि प्राप्तस्तथाऽपि तं क्रममनूद्य प्रशंसति—

“मध्यत ऐन्द्रमा लभते मध्यत एवेन्द्रियं यजमाने दधाति पुरस्तादैन्द्रस्य वैश्वदेवमा लभते वैश्वदेवं वा अन्नमन्नमेव पुरस्ताद्धत्ते तस्मात्पुरस्तादन्नमद्यत ऐन्द्रमालभ्य मारुतमा लभते विड्वै मरुतो विशमेवास्मा अनु बध्नाति” [ सं० का० ६ प्र० ६ अ० ५ ] इति।

वैश्वदेवमारुतयोर्मध्यमैन्द्रस्य स्थानम्। तेन मध्यम एव वयसि बलाधिक्यं यजमाने स्थापयति। विश्वे देवा अन्नाभिमानिनः। वैश्वदेवस्य पुरस्तादनुष्ठितत्वात्तत्संबद्धमन्नमत्तुं पुरस्तादेव स्थापयति। तच्चान्नं पुरस्तान्मुखेनाद्यते। मारुतस्यैन्द्रमनु वर्तमानत्वान्मरुद्रूपा ग्रामनिवासिप्रजा अस्य यजमानस्यानुकूलाः करोति।

कामनाविशेषेण क्रमव्यत्यासं विधत्ते—

“यदि कामयेत योऽवगतः सोऽप रुध्यतां योऽपरुद्धः सोऽव गच्छत्विति[1]ऐन्द्रस्य लोके वारुणमा लभेत वारुणस्य लोक ऐन्द्रं य एवावगतः सोऽप रुध्यते योऽपरुद्धः सोऽव गच्छति” [ सं० का० ६ प्र० ६ अ० ५ ] इति।

अवगतः प्राप्तैश्वर्यः। अपरुध्यतामैश्वर्यात्क्लिश्यताम्। अयमेकः कामः। एत-

1 ख. °र्यादभ्रश्य°।

( पात्नीवतपश्वभिधानम् )

द्विपर्ययोऽन्यः कामः। तस्मिन्नुभयविधेऽपि कामे सप्तमैकादशस्थानयोरैन्द्रवारुणयोः स्थानव्यत्ययं कुर्यात्।

प्रजानां व्याकुलीभावं चेत्कामयेत तदानीमेकादशानां पशूनां क्रमसांकर्यं विधत्ते—

" यदि कामयेत प्रजा मुह्येयुरिति पशून्व्यतिषजेत्प्रजा एव मोहयति" [सं० का० ६ प्र० ६ अ० ५ ] इति।

उदक्प्रवणत्वेन स्थापितायां एकादशयूपपङ्क्तेर्दक्षिणयूपे वारुणस्याऽऽलम्भं विधत्ते—

" यदभिवाहतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमा लभतेऽपवाहतोऽपां प्रजानामवरुणग्राहाय " [सं० का० ६ प्र० ६ अ० ५ ] इति।

अपामभिवाहस्तत्प्रवाहस्थानभूतो निम्नो देशः। तत्रावस्थित उत्तरयूपे वारुणालम्भेन प्रजानां वरुणग्रहरूपो रोगः स्यात्। दक्षिणयूपे पशोरुदङ्मुखत्वेनाऽऽलम्भे रोगो न भवति। दक्षिणयूपस्योन्नतदेशवर्तित्वेनापामपवाहतः प्रवाहस्थानाभावादित्यर्थः। अत्र सूत्रम्—" आग्नेयं कृष्णग्रीवमग्निष्ठ उपाकरोति उत्तरे सारस्वतीं मेषीं दक्षिणे सौम्यं बभ्रुमेवं व्यत्यासं दक्षिणापवर्गान्पशूनुपाकरोति वारुणमन्ततो दक्षिणत उदञ्चम् " इति।

पश्वेकादशिनी निरूपिता। अथ पात्नीवतपशुं विधत्ते—

" इन्द्रः पत्निया मनुमयाजयत्तां पर्यग्निकृतामुदसृजत्तया मनुरार्ध्नोद्यत्पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धिमार्ध्नोत्तामेव यजमान ऋध्नोति " [ सं० का० ६ प्र० ६ अ० ६ ] इति।

अत्र पत्नीशब्देन पात्नीवतसंज्ञके यूप उपाकृतस्त्वष्टृदेवताकः पशुरुपलक्ष्यते। शाखान्तरे तथा विधानात्। पश्वेकादशिनीगतपत्नीसंयाजानन्तरभावित्वादस्य यूपस्य पात्नीवतत्वम्। अत्र सूत्रम्—"जाघनीभिश्च पत्नीः संयाजयन्ति अनूबन्ध्यावपायां हुतायामग्रेण शालामुखीयं पात्नीवतं मिनोति[1] यथाऽधोनाभिमनवस्तीर्णे चषालं तस्मिंस्त्वाष्ट्रं साण्डं लोमशं पिङ्गलं[3] पशुमुपाकृत्य पर्यग्निकृतमुत्सृज्याऽऽज्येन शेषं[4] संस्थापयेत्, यावन्ति पशोरवदानानि स्युस्तावत्कृत्व आज्यस्यावद्ये-

१ ख. °हणारू° । २ क. °नोतीत्यधो° । ३ घ. ङ. पिशङ्गं । ४ ख. शेष॰ समाप° ।

त्पशुधर्माऽऽज्यं भवति शालामुखीये प्रचरन्तीति विज्ञायते ” इति। तस्मादिन्द्रः पात्नीवतयूपे नियुक्तेन पशुना मनुमयाजयदिति व्याख्येयम्।

पर्यग्निकृते पशावुत्सृष्टे सति कर्मशेषस्याऽऽज्येन समाप्तिं विधत्ते—

“ यज्ञस्य वा अप्रतिष्ठितायज्ञः परा भवति यज्ञं पराभवन्तं यजमानोऽनु परा भवति यदाज्येन पात्नीवत१ सं१स्थापयति यज्ञस्य प्रतिष्ठित्यै यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रति तिष्ठति ” [ सं० का० ६ प्र० ६ अ० ६ ] इति।

अप्रतिष्ठितादसंस्थापनात्।

अस्य पशोः कालं विधत्ते—

“ इष्टं वपया भवत्यानिष्टं वशयाऽथ पात्नीवतेन प्र चरति तीर्थ एव प्र चरत्यथो एतर्ह्येवास्य यामः ” [ सं० का० ६ प्र० ६ अ० ६ ] इति।

वशा वन्ध्या, सा चानूबन्ध्येत्यनेन नाम्नोच्यते। तदीयवपाहोमादूर्ध्वं हृदयाद्यङ्गहोमात्प्रागेतस्य पात्नीवतपशोः कालः। स च तीर्थमुचितं स्थानम्। किंचैतस्मिन्कालेऽनूबन्ध्याख्यस्य पशोर्याम उपरमः समाप्तिर्भवति। तस्य चान्तिमपशुत्वात्समाप्तेः प्रागेव पात्नीवतप्रचारो युक्तः।

देवतां विधत्ते—

“ त्वाष्ट्रो भवति त्वष्टा वै रेतसः सिक्तस्य रूपाणि वि करोति तमेव वृषाणं पत्नीष्वपि सृजति सोऽस्मै रूपाणि वि करोति ” [ सं० का० ६ प्र० ६ अ० ६ ] इति।

विकरोति विविधानि करोति[२]।

पात्नीवतपशुर्निरूपितः। अथ सौम्यं चरुं विधत्ते—

“ घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव तत् ” [ सं० का० ६ प्र० ६ अ० ७ ] इति।

सोमस्याभिषवो वधस्थानीयोऽतोऽनुस्तरणीस्थानीयः सौम्यश्चरुः कर्तव्यः। मृतं दीक्षितमनु स्तीर्यते हन्यत इत्यनुस्तरणी काचिद्गौः। दीक्षितशवस्यावयवेषु हृदयहस्तादिषु गोशवस्य हृदयाद्यवयवान्संस्थाप्य तं दीक्षितं दहेत्। तदर्थं काचिद्गौर्हन्यते।

---

१ ख. अत्र। २ ख. °गोतीत्यर्थः। पात्नीवतपशोस्त्वाष्ट्रत्वे सति तमेव यजमानं त्वष्टा वृषाणं रेतः सिञ्चन्यजमानस्य पत्नीष्वपि संयोजयति। स चास्मै यजमानार्थं रूपाणि विकरोति विविधानि करोतीति। इति पा°।

( सौम्यचर्वाद्यभिधानम् )

चरोर्होमस्थानं विधत्ते—

"यदुत्तरार्धे वा मध्ये वा जुहुयाद्देवताभ्यः समदं दध्याद्दक्षिणार्धे जुहोत्येषा वै पितॄणां दिक्स्वायामेव दिशि पितॄन्निरवदयते" [सं० का०६ प्र० ६ अ० ७] इति।

वह्नेरुत्तरार्धमध्यदेशयोर्देवाहुतिस्थानत्वात्तत्र पित्र्ये होमे देवताभिः सह पितॄणां समदं कलहं कुर्यात्। अतो निरवदयते देवदेशान्निष्कृष्य पितॄन्यजते।

चरुशेषस्य दानं विधत्ते—

"उद्गातृभ्यो हरन्ति सामदेवत्यो वै सौम्यो यदेव साम्नश्छम्बट्कुर्वन्ति तस्यैव स शान्तिः" [सं० का० ६ प्र० ६ अ० ७] इति।

सामैव सौम्यचरोरभिमानिदेवता। तथा सति सामवेदसंबन्धि यदङ्गमुद्गातार इत्थं छम्बट्कुर्वन्ति विनष्टं कुर्वन्ति तस्य दोषस्य स चरुः प्रतीकारः।

तस्मिन्नाज्यपूर्णे चरावुद्गातृभिः स्वदेहच्छाया द्रष्टव्येति विधत्ते—

"अवेक्षन्ते पवित्रं वै सौम्य आत्मानमेव पवयन्ते" [सं० का० ६ प्र० ६ अ० ७] इति।

सौम्यचरोः शुद्धिहेतुत्वात्तत्प्रेक्षणेनोद्गातारः स्वदेहं शोधयन्ति। अत्र सूत्रम्—"आज्येन चरुमभिपूर्योद्गातृभ्यो हरन्ति तमुद्गातारोऽवेक्षन्ते" इति।

आज्यस्यापर्याप्तौ पुनरप्यन्यत्पूरणं विधत्ते—

"य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वाऽवेक्षेत तस्मिन्ह्यात्मानं परिपश्यत्यथो आत्मानमेव पवयते" [सं०का०६प्र०६अ०७] इति।

इतासुर्गतप्राणः। अभितो दीयते प्रक्षिप्यत आज्यमस्मिंश्चरावित्यभिदर्दिः।

काम्येऽवेक्षणे मन्त्रविशेषं विधत्ते—

"यो गतमनाः स्यात्सोऽवेक्षेत यन्मे मनः परागतं यद्वा मे अपरागतम्। राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवाऽऽत्मन्दाधार न गतमना भवति" [सं० का० ६ प्र० ६ अ० ७] इति।

गतमना अव्यवस्थितचित्तः। उद्गातॄणां मध्ये गतमना यन्मे मन इत्यादिमन्त्रेणावेक्षेत। मदीयं मनो यदि मत्तो निष्क्रान्तं यदि वा निष्क्रमणोन्मुखं तदिदानीं निष्क्रान्तस्य सोमस्य राज्ञः प्रसादाद्वयं तन्मनोऽस्मास्वेव धारयामः। मन्त्रसामर्थ्याच्चित्तसमाधानं भवति।

अग्नाविष्णू महि धाम प्रियं वामित्यनयर्चा घृतयागं विधत्ते—

" अप वै तृतीयसवने यज्ञः क्रामतीजानादनीजानमभ्याग्नावैष्णव्यर्चा घृतस्य यजत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं च दाधार " [ सं० का० ६ प्र० ६ अ० ७] इति ।

ईजानादिष्टवतो यजमानादनीजानं पुरुषमभिलक्ष्य यज्ञोऽपक्रामति तत्समाधा-नायाऽऽग्नावैष्णवमन्त्रयागः ।

तत्र नीचध्वानिं विधत्ते—

" उपांशु यजति मिथुनत्वाय" [ सं० का० ६ प्र० ६ अ० ७] इति । सौम्यचरुगतेनोच्चध्वनिना सहोपांशुध्वनेर्मिथुनत्वम् ।

अनूबन्ध्यां विधत्ते—

" ब्रह्मवादिनो वदन्ति मित्रो यज्ञस्य स्विष्टं युवते वरुणो दुरिष्टं क्व तर्हि यज्ञः क्व यजमानो भवतीति यन्मैत्रावरुणीं वशामालभते मित्रेणैव यज्ञस्य स्वि-ष्टꣳ शमयति वरुणेन दुरिष्टं नाऽऽर्तिमार्च्छति यजमानः " [ सं० का० ६ प्र० ६ अ० ७ ] इति ।

यज्ञस्य यदङ्गं सम्यगिष्टं तस्याधिपतिर्मित्रः स्वयमनाराधितस्तदङ्गं दुरिष्टेन मिश्र-यति । दुरिष्टस्याङ्गस्याधिपतिर्वरुणश्चानाराधितस्तद्दुरिष्टं संपाद्य स्विष्टेन मिश्रयति । तथा सत्युभाभ्यां स्विष्टस्य विनाशितत्वाद्यज्ञः क्वावतिष्ठेत । यज्ञाभावे यजमानोऽ-पि कुत्र फलोपेतो भवेत् । वशालम्भेन तुष्टो मित्रः स्विष्टं पालयति । वरुणो दु-रिष्टं नाशयति । ततो यज्ञस्य सुस्थितत्वान्निष्फलस्वरूपामार्तिं यजमानो न प्रा-प्नोति । अत्र सूत्रम्—" मैत्रावरुणीं गां वशामनूबन्ध्यामालभेत " इति ।

तामनूबन्ध्यां प्रशंसति—

" यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमृक्सामे यज्ञं प्र भिन्तो यन्मैत्रावरुणीं वशामालभते यज्ञायैव प्रभिन्नाय मत्यमन्ववास्यति शान्त्यै " [ सं० का० ६ प्र० ६ अ० ७ ] इति ।

सर्वसस्योपेता भूमिरुर्वरा तस्यां कृष्टायां कर्षणमनु तत्र मत्यं क्षिपन्ति । शक्त्या-धानसाधनं गोमयादिद्रव्यं मत्यं, मतममिमतं फलमर्हतीति मत्यम् । तद्वदृक्सा-माभ्यां कर्षणवद्योग्यतामापादितस्य यज्ञस्य वशालम्भेन मत्यप्रक्षेपवत्फलजननश-क्तिर्भवति । तेन चाशक्तिलक्षणस्य दोषस्य शान्तिर्भवति ।

१ ख. °र्षणेन वधसाम्यता° ।

( अतिग्राह्यविधिः )

पुनरपि वशां प्रशंसति—

“यातयामानि वा एतस्य छन्दाꣳसि य ईजानश्छन्दसामेष रसो यद्वशा यन्मैत्रावरुणीं वशामालभते छन्दाꣳस्येव पुनरा प्रीणात्ययातयामत्वायाथो छन्दःस्वेव रसं दधाति” [ सं० का० ६ प्र० ६ अ० ७ ] इति।

ईजानो यज्ञं कृतवान्। एतस्य च्छन्दांसि गतसाराणि भवन्ति । वशा तु च्छन्दसां सारः। वषट्कारदेवतया गायत्रीदेवतायाः शिरसि च्छिन्ने पतितेन रसेनोत्पन्नत्वात्। एतच्च काम्यपशुकाण्डे समाम्नातम्। अतो वशालम्भेन च्छन्दसां गतसारत्वाभावात्प्रीतिर्भवति। प्रत्युत च्छन्दःसु विशेषरसः स्थाप्यते।

सौम्यचरुघृतयागानूबन्ध्या निरूपिताः। अथातिग्राह्यान्विधत्ते—

“देवा वा इन्द्रियं वीर्यं व्यभजन्त ततो यदत्यशिष्यत तदतिग्राह्या अभवन्तदतिग्राह्याणामतिग्राह्यत्वं यदतिग्राह्या गृह्यन्त इन्द्रियमेव तद्वीर्यं यजमान आत्मन्धत्ते” [ सं० का० ६ प्र० ६ अ० ८ ] इति।

इन्द्रवायुमित्रावरुणादिदेवैरिन्द्रियगतसामर्थ्यहेतौ सोमरसे विभक्ते सत्यतिरिक्ताद्रसादेते गृह्यन्ते। तद्ग्रहणेन सामर्थ्यं यजमाने स्थाप्यते।

विहितानामतिग्राह्याणामग्न्यादिदेवतासंबन्धं विधत्ते—

“तेज आग्नेयेन्द्रियमैन्द्रेण ब्रह्मवर्चसꣳ सौर्येण” [ सं० का० ६ प्र० ६ अ० ८ ] इति।

यजमान आत्मन्धत्त इत्यनुवर्तते। तेज कान्तिः। इन्द्रियं बलम्। ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः। प्रातःसवन आग्रयणसादनादूर्ध्वमेते त्रयो ग्रहीतव्याः। अत्र सूत्रम्—“एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयित्वा त्रीनग्निष्टोमेऽतिग्राह्यान्गृह्णात्याग्नेयमैन्द्रꣳ सौर्यमित्यग्न आयूꣳष्युत्तिष्ठꣳस्तरणिरिति ग्रहणसादनाः” इति।

व्यतिरेकमुखेन( ण ) पृष्ठ्यषडहे तानतिग्राह्यान्विधत्ते—

“उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानि यत्पृष्ठ्ये न गृह्णीयात्प्राञ्चं यज्ञं पृष्ठानि सꣳ शृणीयुः” [सं० का० ६ प्र० ६ अ० ८] इति।

यज्ञरूपस्य रथस्यातिग्राह्या उत्तम्भनकाष्ठस्थानीयाः। षट्सु दिनेषु क्रमेण रथंतरबृहद्वैरूपवैराजशाक्वररैवतसामनामकैः साध्यानि पृष्ठ्य(ष्ठ)स्तोत्राणि चक्रस्थानीयानि। ततः पृष्ठ्यषडहेऽतिग्राह्यरूपोत्तम्भनाभावे तानि पृष्ठानि तं यज्ञरथं पुनः पातयित्वा संशृणीयुर्विनाशयेयुः। तस्मात्तान्गृह्णीयादित्यर्थः।

उक्थ्ये चोदकमाप्तानतिग्राह्यान्प्रतिषेधति-

" यदुक्थ्ये गृह्णीयात्प्रत्यञ्चं यज्ञमतिग्राह्याः सꣳ शृणीयुः " [ सं० का० ६ प्र० ६ अ० ८ ] इति ।

उत्तम्भनमन्तरेणैव पुरत उन्नतसदृश उक्थ्यस्तस्मिन्गृहीता अतिग्राह्याः पुरस्तादस्यौन्नत्यमापाद्य यज्ञरथं प्रत्यञ्चं पातयित्वा विनाशयेयुः । तस्मात्तान्न गृह्णीयादित्यर्थः ।

पृष्ठ्यषडहेऽप्युक्थ्यसद्भावादेतं प्रतिषेधं वारयितुं पूर्ववाक्येनै(णै)ते विहितास्तद्वद्विश्वजिद्यागस्याप्युक्थ्यसंस्थस्य शाखान्तरे सद्भावात्तत्रापि निषेधं वारयितुं विधत्ते-

" विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वाय " [ सं० का० ६ प्र० ६ अ० ८ ] इति ।

रथंतरादीनि षडपि पृष्ठय(ष्ठ)स्तोत्राणि यस्मिन्सन्ति स सर्वपृष्ठः ।

अग्निष्टोमे तान्विधत्ते-

" प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स प्रियास्तनूरप न्यधत्त तदतिग्राह्या अभवन्वितनुस्तस्य यज्ञ इत्याहुर्यस्यातिग्राह्या न गृह्यन्त इत्यप्यग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वाय " [ सं० का० ६ प्र० ६ अ० ८ ] इति ।

व्यादिशद्विभज्य दत्तवान् । तदा स प्रजापतिर्यज्ञसंबन्धिनीः प्रियास्तनूरपन्यधत्तापनीय क्वचिद्गोपितवान् । तास्तनवोऽतिग्राह्याः । तस्मादग्निष्टोमस्य सतनुत्वाय तान्गृह्णीयात् । अत्रातिग्राह्याणां पृष्ठ्यषडहादिविकृतिसंबन्धप्रतीतेः प्रकृतावग्निष्टोमेऽपि विधीयन्ते ।

व्यावृत्तिकामस्य तान्विधत्ते-

" देवता वै सर्वाः सदृशीरासन्ता न व्यावृतमगच्छन्ते देवा एत एतान्ग्रहानपश्यन्तानगृह्णताऽऽग्नेयमग्निरैन्द्रमिन्द्रः सौर्यꣳ सूर्यस्ततो वै तेऽन्याभिर्देवताभिर्व्यावृतमगच्छन्यस्यैवं विदुष एते ग्रहा गृह्यन्ते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति" [ सं० का० ६ प्र० ६ अ०८] इति ।

सदृशीस्तुल्यैश्वर्याः । व्यावृतमैश्वर्याधिक्यलक्षणम् । इतरेभ्यो व्यावृतं भ्रातृव्यादैश्वर्याधिक्यमेतैरतिग्राह्यैः प्राप्नोति ।

तानतिग्राह्यान्प्रशंसति-

( अदाभ्यग्रहविधिः )

" इमे लोका ज्योतिष्मन्तः समावद्वीर्याः कार्या इत्याहुराग्नेयेनास्मिँल्लोके ज्योतिर्धत्त ऐन्द्रेणान्तरिक्ष इन्द्रवायू हि सयुजौ सौर्येणामुष्मिँल्लोके ज्योतिर्धत्ते ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति समावद्वीर्यानेनान्कुरुते " [ सं० का० ६ प्र० ६ अ० ८ ] इति ।

इमे पृथिव्यन्तरिक्षद्युलोकास्ते चाग्न्यादिदेवतानुग्रहेण ज्योतिष्मन्तस्तुल्यसामर्थ्याः । अन्तरिक्षस्य वायुर्देवता न त्विन्द्र इति चेन्न, इन्द्रवाय्वोः सहावस्थानादैन्द्रवायवग्रहे तद्दर्शनात् ।

प्रकारान्तरेण तान्प्रशंसति—

" एतान्वै ग्रहान्बम्बाविश्ववयसाववित्तां ताभ्यामिमे लोकाः पराञ्चश्चार्वाञ्चश्च प्राभुर्यस्यैवं विदुष एते ग्रहा गृह्यन्ते प्रास्मा इमे लोकाः पराञ्चश्चार्वाञ्चश्च भान्ति " [ सं० का० ६ प्र० ६ अ० ८ ] इति ।

बम्बाश्च विश्ववयाश्च तयोरतिग्राह्यमहिमाभिज्ञत्वात्तदर्थमुत्तमा अधमाश्चेमे लोकाः प्राभुः प्रभावन्तः[1] ।

अतिग्राह्या निरूपिताः । अथादाभ्यग्रहं विधत्ते—

" देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दाꣳसि सवनानि समस्थापयन्ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषोऽदाभ्यो गृह्यते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति " [सं० का० ६ प्र० ६ अ० ९ ] इति ।

असुरा मात्सर्येण देवैरनुष्ठितं यज्ञाङ्गं स्वयमप्यनुष्ठितवन्तः । तत्राऽसुरवञ्चनेन देवा गायत्रीत्रिष्टुब्जगतीभिर्निष्पाद्यानि त्रीणि सवनान्यदाभ्यग्रहे समापितवन्तः । तत्र हि—" वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसा " इत्यादिभिस्त्रिभिर्मन्त्रैस्त्रयः सोमांशवः पृथक्कर्तव्याः । अत्र सूत्रम्—" उपनद्धस्य राजस्त्रीनꣳशून्प्रवृहन्ति वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रं तैरेनं चतुराधूनोति " इति । तदिदं छन्दसां सवनानां च समापनम् । तेन देवानां विभूतिरसुराणां पराभवश्चाभूत् । तद्वदन्यस्याप्यदाभ्यग्रहणेन भवति ।

निर्वचनेन प्रशंसति—

" यद्वै देवा असुरानदाभ्येनादभ्नुवन्तददाभ्यस्यादाभ्यत्वम् " [ सं० का० ६ प्र० ६ अ० ९ ] इति ।

---

१ ख. घ. ङ. प्रभावसंपन्नाः ।

अदभ्नुवन्हिंसितवन्तः। असुरदम्भनहेतुरयं ग्रहः स्वयमन्येन केनचिदपि दम्भितुमशक्यत्वाददाभ्यः।

एतद्वेदनं प्रशंसति—

“य एवं वेद दभ्नोत्येव भ्रातृव्यं नैनं भ्रातृव्यो दभ्नोति” [ सं० का० ६ प्र० ६ अ० ९ ] इति।

अथादाभ्यस्य कालं विधत्ते—

“एषा वै प्रजापतेरतिमोक्षिणी नाम तनूर्यददाभ्य उपनद्धस्य गृह्णात्यतिमुक्त्यै” [ सं० का० ६ प्र० ६ अ० ९ ] इति।

अतिशयेन पापान्मोक्षोऽतिमोक्षः। सोऽस्या अस्तीत्यतिमोक्षिणी। प्रजापतेस्तादृग्रूपोऽयमदाभ्यः। तस्मादुपनद्धस्य वस्त्रेण बद्धस्य सोमस्य बन्धनादतिमुक्त्यर्थं गृह्णीयात्। शकटादवरोपितो वस्त्रबद्धसोमोऽधिषवणफलकयोरुपर्यवतिष्ठते। तस्य च सोमस्य बन्धमुपांशुग्रहकाले विस्रस्येन्द्राय त्वा वृत्रघ्न इत्यादिभिर्मन्त्रैः सोमं मिमीते। तस्माद्विस्रंसनात्प्रागेवादाभ्यो ग्रहीतव्य इत्यर्थः।

एतद्वेदनं प्रशंसति—

“अति पाप्मानं भ्रातृव्यं मुच्यते य एवं वेद” [ सं० का० ६ प्र० ६ अ० ९ ] इति।

पापरूपं वैरिणमुत्क्रम्य तत्कृतोपद्रवान्मुच्यते।

अदाभ्यस्य सोमव्यतिरिक्तं द्रव्यं विधत्ते—

“घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति सोमे हन्यमाने यज्ञो हन्यते यज्ञे यजमानो ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येन जीवन्त्सुवर्गं लोकमेतीति जीवग्रहो वा एष यददाभ्योऽनभिषुतस्य गृह्णाति जीवन्तमेवैनꣳ सुवर्गं लोकं गमयति” [ सं० का० ६ प्र० ६ अ० ९ ] इति।

अभिषवेण सोमस्य हतत्वाद्यज्ञे हते यजमानो हतप्रायो भवति। तादृग्वधमन्तरेण स्वर्गप्राप्तावुपायान्ब्रह्मवादिनो विचार्यादाभ्यं निश्चितवन्तः। स च जीवनोपेतो ग्रहः। तस्मादनभिषुतस्याभिषवरूपवधरहितस्य द्रव्यस्य रसं तत्र गृह्णीयात्। अत्र सूत्रम्—“अꣳशुमदाभ्यं वा प्रथमं गृह्णाति शुक्रं ते शुक्रेण गृह्णामीति दध्नः पयसो निग्राभ्याणां वा” इति।

अदाभ्यग्रहस्याऽऽधवनहेतूनां सोमांशूनां त्रयाणां सवनत्रयगतेषु त्रिषु महाभिषवेषु मेलनं विधत्ते—

( अंशुग्रहविधिः )

" वि वा एतद्यज्ञं छिन्दन्ति यद्दाभ्ये सं स्थापयन्त्यꣳशूनपि सृजति यज्ञस्य संतत्यै " [ सं० का० ६ प्र० ६ अ० ९ ] इति।

" असुरवञ्चनाय वसवस्त्वेत्यादिमन्त्रैरंशुत्रयं(य)पृथक्करणरूपसवनत्रय[ स ]-मापनं देवैः कृतं तद्वदन्येनापि कृते सत्युपांश्वतर्यामादीनाम[ न ? ]नुष्ठानाद्यज्ञो विच्छिद्यते, तत्परिहाराय पृथक्कृतानंशूनाभिषवेषु मेलयेत्। अत्र सूत्रम्—"आधवनानꣳशून्मज्ञातान्निधायोशिक्त्वं देव सोम गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रमनुसवनमेकैकं महाभिषवेष्वपिसृजति " इति।

अदाभ्यो निरूपितः। अथांशुग्रहं विधत्ते—

" देवा वै प्रवाहुग्ग्रहानगृह्णत स एतं प्रजापतिरꣳशुमपश्यत्तमगृह्णीत तेन वै स आर्ध्नोद्यस्यैवं विदुषोऽꣳशुर्गृह्यत ऋध्नोत्येव " [ सं० का० ६ प्र० ६ अ० १० ] इति।

प्रवाहुक्तुल्यस्वभावान्। प्रजापतिस्तु समृद्ध्यर्थं विलक्षणमंशुग्रहं गृहीत्वा समृद्धोऽभवत्।

इतरग्रहवैलक्षण्यं क्रमेण दर्शयन्नभिषवस्याऽऽवृत्त्यभावं विधत्ते—

" सकृदभिषुतस्य गृह्णाति सकृद्धि स तेनाऽऽर्ध्नोत् " [ सं० का० ६ प्र० ६ अ० १० ] इति।

अष्टौ कृत्वोऽग्रेऽभिषुणोतीत्यादिना ग्रहान्तरेऽभिषवावृत्तिः श्रुता न त्वत्र तथा कुर्यात्किंतु सकृदेव। यस्मात्स प्रजापतिः सकृदेवाभिषुत्य तेन ग्रहेण सम्यक्समृद्धिं गतः।

ग्रहणमन्त्रस्योच्चारणं निवारयितुं मानसमनुसंधानं विधत्ते—

" मनसा गृह्णाति मन इव हि प्रजापतिः प्रजापतेराप्त्यै " [ सं० का० ६ प्र० ६ अ० १० ] इति।

संकल्पमात्रेण जगत्सर्जनात्प्रजापतेर्मनःसादृश्यम्।

ग्रहणपात्रं विधत्ते—

" औदुम्बरेण गृह्णात्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे " [ सं० का० ६ प्र० ६ अ० १० ] इति।

पात्रस्याऽऽकारं विधत्ते—

१ ख. °रूपं स°। २ ख. ङ. °पन्नं दे°।

( अंशुग्रहविधिः )

" चतुःस्रक्ति भवति दिक्ष्वेव प्रति तिष्ठति " [ सं० का० ६ प्र० ६ अ० १० ] इति ।

चतुष्कोणमित्यर्थः ।

वामदेवेन दृष्टस्य कया नश्चित्र आ भुवदित्यस्यामृच्युत्पन्नस्य साम्नो ग्रहणमन्त्रतामाह—

" यो वा अꣳशोरायतनं वेदाऽऽयतनवान्भवति वामदेव्यमिति साम तद्वा अस्याऽऽयतनं मनसा गायमानो गृह्णात्यायतनवानेव भवति " [ सं० का० ६ प्र० ६ अ० १० ] इति ।

गृहवानित्यर्थः ।

अनुच्छ्वासं ग्रहणकाले विधत्ते—

" यदध्वर्युरꣳशुं गृह्णन्नार्धयेदुभाभ्यां नर्ध्येताध्वर्यवे च यजमानाय च यदर्धयेदुभाभ्यामृध्येतानवानं गृह्णाति सैवास्यर्द्धिः " [ सं० का० ६ प्र० ६ अ० १० ] इति ।

अंशुं नार्धयत्समृद्धं न कुर्यात् । तदानीमध्वर्युयजमानयोः समृद्धिर्न स्यात् । अनुच्छ्वासगृहीतिरेवांशोः समृद्धिः । अत्र सूत्रम्—" अंशुं गृह्णन्नेकग्रहायाऽऽग्रं राजानमुपरे न्युप्य सकृदभिषुत्य वामदेव्यं मनसा गायमानोऽनवानं गृह्णाति " इति ।

कथंचिदुच्छ्वासश्चेत्तद्दोषनिवारणाय विधत्ते—

" हिरण्यमभि व्यनित्यमृतं वै हिरण्यमायुः प्राण आयुषैवामृतमभि विनोति" [ सं० का० ६ प्र० ६ अ० १० ] इति ।

हिरण्यस्याऽऽभिमुख्येन श्वासं कुर्यात् । तथा सत्यायुःस्वरूपेणैव प्राणवायुना हिरण्यरूपममृतमभिप्रीणयति ।

हिरण्यस्येयत्तां विधत्ते—

" शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति " [ सं० का० ६ प्र० ६ अ० १० ] इति ।

शतनिष्कपरिमितं शतमानपरिमितं वा हिरण्यं भवति । दशानां ज्ञानकर्मेन्द्रियाणामेकैकस्य दशनाडीषु संचाराच्छतेन्द्रियत्वम् । अत्र सूत्रम्—"यदि व्यवान(न्या)दा नः प्राण एतु परावत इति शतमानꣳ हिरण्यमभि व्यनीया(न्या)ताम-

( अंशुग्रहविधिः )

ध्वर्युर्यजमानश्च " इति । अंशुग्रहादाभ्यग्रहयोः पौर्वापर्यं विकल्पितम् । अत एव सूत्रकारेणोक्तम्—" अंशुमदाभ्यं वा प्रथमं गृह्णाति " इति ।

अंशुग्रहो निरूपितः । अथ षोडशिग्रहं विधत्ते—

" प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स रिरिचानोऽमन्यत । स यज्ञानाꣳ षोडशधेन्द्रियं वीर्यमात्मानमभि समक्खिदत्तत्षोडश्यभवन्न वै षोडशी नाम यज्ञोऽस्ति यद्वाव षोडशꣳ स्तोत्रꣳ षोडशꣳ शस्त्रं तेन षोडशी तत्षोडशिनः षोडशित्वं यत्षोडशी गृह्यत इन्द्रियमेव तद्वीर्यं यजमान आत्मन्धत्ते " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

" देवेभ्यो यज्ञान्विभज्य दत्त्वा स्वार्थस्य कस्याप्यभावाद्रिक्तोऽहमिति मन्यमानः स्वात्मानमभिलक्ष्य सर्वयज्ञसंबन्धिनमिन्द्रियसामर्थ्यप्रदमंशं षोडशभेदभिन्नं समक्खिदत्समुपादाय श्रान्तोऽभवत् । तच्च सामर्थ्यं षोडशिनामकः क्रतुरभवत् । स च सोमयागव्यतिरिक्तो यज्ञः कश्चिन्नूतनो न ।

प्रकारान्तरेण प्रशंसति—

" देवेभ्यो वै सुवर्गो लोको न प्राभवत्त एतꣳ षोडशिनमपश्यन्तमगृह्णत ततो वै तेभ्यः सुवर्गो लोकः प्राभवद्यत्षोडशी गृह्यते सुवर्गस्य लोकस्याभिजित्यै " [सं० का० ६ प्र० ६ अ० ११ ] इति ।

न प्राभवन्न स्वाधीनः ।

पुनः प्रकारान्तरेण प्रशंसति—

" इन्द्रो वै देवानामानुजावर आसीत्स प्रजापतिमुपाधावत्तस्मा एतꣳ षोडशिनं प्रायच्छत्तमगृह्णीत ततो वै सोऽग्रं देवतानां पर्यैद्यस्यैवं विदुषः षोडशी गृह्यतेऽग्रमेव समानानां पर्येति " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

अनुजेभ्यो निकृष्टेभ्योऽवरोऽत्यन्तनिकृष्टः । आनुजेति दीर्घश्छान्दसः । अग्रं श्रेष्ठयम् ।

कालं विधत्ते—

" प्रातःसवने गृह्णाति वज्रो वै षोडशी वज्रः प्रातःसवनꣳ स्वादेवैनं योनेर्निर्गृह्णाति " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

वज्रवदनिष्टनिवारकत्वादुभयोर्वज्रत्वम् । तस्मादेव साम्यात्प्रातःसवनं वज्रस्य स्वयोनिः ।

पक्षान्तरमाह-

" सवनेसवनेऽभि गृह्णाति सवनात्सवनादेवैनं प्र जनयति " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

अत्र सूत्रम्-" षोडशिनो ग्रहणं प्रातःसवन उत्तमो धाराग्रहाणां सवने सवने वा " इति ।

नित्यत्वेन विहितस्यैव काम्यत्वमपि विधत्ते-

तृतीयसवने पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी पशवस्तृतीयसवनं वज्रेणै-वास्मै तृतीयसवनात्पशूनव रुन्धे " [ सं० का० ६ प्र० ६ अ० ११] इति ।

यथा खादिरो यूपो भवति खादिरं वीर्यकामस्य यूपं कुर्वीतेति वचनद्वयादे-कस्यैव नित्यत्वं काम्यत्वं च तद्वत् ।

उक्थ्यक्रतावपि शाखान्तरानुसारेण प्रसक्तं प्रतिषेधति-

" नोक्थ्ये गृह्णीयात्प्रजा वै पशव उक्थानि यदुक्थ्ये गृह्णीयात्प्रजां पशू-नस्य निर्दहेत् " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

उक्थ्यक्रतुगतानां शस्त्राणां प्रजापशुरूपत्वाद्वज्ररूपेण षोडशिना दाहः स्यात् । शाखान्तरे विधानादिह निषेधाच्च विकल्पः सूत्रे दर्शितः-नोक्थ्ये गृह्णीया( द )गृह्णीयाद्वा " इति ॥

*षोडशिक्रताविवातिरात्रक्रतावपि काम्यग्रहं विधत्ते-

" अतिरात्रे पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी वज्रेणैवास्मै पशूनवरु-ध्य रात्रियोपरिष्टाच्छमयति " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

वज्रषोडशिना पशूनामवरोधेऽपि नास्ति बाधः । षोडशिशस्त्रस्योपरिष्टादनु-ष्ठेयेन रात्रिशब्दोपलक्षितेन शस्त्रसमूहेन तद्बाधोपशमनात् । पशुकामस्येति विशे-षणादन्यस्यातिरात्रे षोडशिग्रहो नास्ति ।

अधिकारिविशेषेण ग्रहं विधत्ते-

" अप्यग्निष्टोमे राजन्यस्य गृह्णीयाद्व्यावृत्कामो हि राजन्यो यजते " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

द्वादशभिः स्तोत्रैः शस्त्रैश्चोपेतोऽग्निष्टोमो वर्णत्रयसाधारणः । राजन्यस्तु विप्र-वैश्याभ्यां व्यावृत्तिमुत्कर्षं कामयते तदर्थं गृह्णीयात् ।

---

* ङ. पुस्तके "षोडशिनामितरक्रतौ " इति शोधितः पाठः ।

( षोडशिग्रहविधिः )

अस्मिन्षोडशिग्रहस्तोत्रस्यैकविंशनामकं स्तोमं विधत्ते—

" साह्न एवास्मै वज्रं गृह्णाति स एनं वज्रो भूत्या इन्धे निर्वा दहत्येकविꣳशꣳ स्तोत्रं भवति प्रतिष्ठित्यै " [ सं० का० ६ प्र०६ अ० ११ ] इति।

अह्ना सह वर्तत इति एकदिवसनिष्पाद्यः सोमयागः साह्नः। तस्मिन्नेव यजमानार्थमध्वर्युः षोडशिरूपं वज्रं गृह्णाति। स च वज्रो वैरिविनाशाय प्रयुक्त एनं यजमानमैश्वर्यार्थं प्रकाशयति । अथवा प्रयोगकौशलाभावादस्मिन्नेव यजमाने परीतो निःशेषेणैनमेव दहति। अतः पाक्षिकदाहानिवृत्त्या यजमानस्य प्रतिष्ठार्थमेकविंशस्तोत्रं संपादयेत्। प्रगीतमन्त्रसाध्यस्तुतिः स्तोत्रम्। तच्च गानं तृचे कर्तव्यम्। एकं साम तृचे क्रियते स्तोत्रीयामिति विधानात्। षोडशिस्तोत्रस्यासावि सोम इन्द्र त इत्यृक्प्रथमा। इन्द्रमिद्धरी वहत इति द्वितीया। आ तिष्ठ वृत्रहन्निति तृतीया। सोऽयं तृचास्त्रिभिः पर्यायैरावृत्तिविशेषो( षेण ) गीयमान एकविंशत्यृगात्मकं( को) भवति। प्रथमे पर्याये प्रथमद्वितीययोर्ऋचोस्त्रिस्त्रिर्गानम्। तृतीयस्याः सकृद्गानम्। द्वितीयपर्याये प्रथमायाः सकृद्गानम् । तृतीयपर्याये मध्यमायाः सकृद्गानम्। तथा च च्छन्दोगब्राह्मण आम्नायते—" सप्तभ्यो हिं करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिं करोति स तिसृभिः स एकया स तिसृभिः सप्तसप्तिमेकविंशस्य विष्टुतिः " इति। सप्तभ्यः सप्तभिर्ऋग्भिर्हिं करोति गायेत्। यथोक्तावृत्तिविशिष्टेयमेकविंशनामकस्य स्तोमस्य संबन्धिनी विशिष्टा स्तुतिः। तस्याश्च सप्तसप्तिमिति नामधेयमित्यर्थः।

षोडशिशस्त्रं विधत्ते—

" हरिवच्छस्यत इन्द्रस्य प्रियं धामोपाऽऽप्नोति " [ सं० का० ६ प्र० ६ अ० ११ ] इति।

हरिशब्दोऽस्मिन्नस्तीति हरिवच्छस्त्रम्। इन्द्रमिद्धरी वहत इत्यादिष्वृक्षु हरिशब्दो बहुलमुपलभ्यते। तेन शस्त्रेणेन्द्रस्य परितोषात्तदीयो लोकः प्राप्यते। तच्च शस्त्रं द्विविधं विहृतमविहृतं च। नानाविधच्छन्दसामृचां संमेलनेन निष्पादितं विहृतम्। त(य)थावस्थितमविहृतम्।

तत्र विहरणप्रकारं विधत्ते—

---

१ क. घ. ङ. अथ।

" कनीयाꣳसि वै देवेषु छन्दाꣳस्यासञ्ज्यायाꣳस्यसुरेषु ते देवाः कनीयसा छन्दसा ज्यायश्छन्दोऽभि व्यशꣳसन्ततो वै तेऽसुराणां लोकमवृञ्जत यत्कनीयसा छन्दसा ज्यायश्छन्दोऽभि विशꣳसति भ्रातृव्यस्यैव तल्लोकं वृङ्क्ते " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

सन्त्यस्मिञ्शस्त्रे बहूनि च्छन्दांसि । तान्याश्वलायनेनोदाहृतानि—" आ त्वा वहन्तु हरय इति तिस्रो गायत्र्यः । उपो षु शृणुही गिरः सुसंदृशं त्वा वयं मघवान्नित्येका द्वे च पङ्क्ती । यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ " इत्यादिना । तत्र चतुर्विंशत्यक्षरा गायत्री । अष्टाविंशत्यक्षरोऽष्णिक् । अनयोरल्पाक्षरत्वेन कनीयस्त्वाद्देवच्छन्दस्त्वम् । अष्टाक्षरपादैः पञ्चभिश्चत्वारिंशदक्षरा पङ्क्तिः । षट्त्रिंशदक्षरा बृहती । अनयोरधिकाक्षरत्वेन भूयस्त्वादसुरच्छन्दस्त्वम् । एवं छन्दोन्तरेष्वप्युन्नेयम् । तत्र देवा गायत्रीछन्दसा पङ्क्तिच्छन्दोऽभितो विहृत्य शस्त्रमपठन् । विहार आश्वलायनेन दर्शितः—" तदेव शंस्यं विहरेत्पादान्व्यवधायार्धर्चशः शंसेत्पूर्वासां पूर्वाणि पदानि गायत्र्यः पङ्क्तिभिः पङ्क्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां प्रहिणुयादुष्णिहो बृहतीभिः " इत्यादिना । अस्यायमर्थः—अविहृतं यच्छस्त्रं तदेव विहृतं कुर्यात् । तद्यथा—गायत्र्याः प्रथमं पादं पङ्क्तेः प्रथमपादेन संयोज्यैकमर्धर्चं संपादयेत् । एवं द्वितीयतृतीयपादसंयोगेन पुनरर्धर्चद्वयं संपाद्यम् । पङ्क्तेरवशिष्टं पादद्वयमेकोऽर्धर्चस्तस्यान्ते प्रणवं कुर्यात् । तैरतैश्चतुर्भिरर्धर्चैर्द्वाव(द्वे अ)नुष्टुभौ संपद्येते । एवं गायत्र्यः पङ्क्तिभिः संयोज्याः । अनया विशंसति विहरेदिति । तेन विहृतेन शस्त्रेण भ्रातृव्यस्थानं विनाशयति[1] ।

संख्यान्तरमभिप्रेत्य विहरणं दर्शयति—

" षडक्षराण्यति रेचयन्ति षड्वा ऋतव ऋतूनेव प्रीणाति चत्वारि पूर्वाण्यव कल्पयन्ति चतुष्पद एव पशूनव रुन्धे द्वे उत्तरे द्विपद एवाव रुन्धे " [ सं० का० ६ प्र० ६ अ० ११ ] इति ।

काचिदृगष्टाविंशद(त्य)क्षराऽन्या त्वष्टात्रिंशदक्षराऽन्या त्रिंशदक्षरा । तत्र मध्यमायाः षडक्षराण्यनुष्टुभोऽतिरिच्यन्ते । तस्या ऋच आदौ चत्वारि पूर्वस्यामृचि संयोज्यानि । अन्तिमं द्वयमुत्तरस्यामृचि संयोज्यम् ।

---

१ ख. °ति । शास्त्रान्त° ।

( षोडशिग्रहविधिः )

विहरणे कालितं दर्शयति।

"अनुष्टुभमभि सं पादयन्ति वाग्वा अनुष्टुप्तस्मात्प्राणानां वागुत्तमा" [सं० का० ६ प्र० ६ अ० ११] इति।

आश्वलायनः—"अनुष्टुप्प्रकारं शंसेदूर्ध्वं स्तोत्रियानुरूपाभ्यामतो विहृत इति।

स्तोत्रोपाकरणस्य कालं विधत्ते—

"समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोत्येतस्मिन्वै लोक इन्द्रो वृत्रमहन्त्साक्षादेव वज्रं भ्रातृव्याय प्र हरति" [सं० का० ६ प्र० ६ अ० ११] इति। समयाविषितोऽर्धास्तमितस्तस्मिन्नेवार्धास्तमयकाले पूर्वमिन्द्रो भूलोके वृत्रं जघान।

षोडशिनो योग्यां दक्षिणां विधत्ते—

"अरुणपिशङ्गोऽश्वो दक्षिणैतद्वै वज्रस्य रूपꣳ समृद्ध्यै" [सं० का० ६ प्र० ६ अ० ११] इति।

अरुणमिश्रपिशङ्गवर्णः। तदेवं ब्राह्मणशेषाणामनुवाकानामर्था निरूपिताः।

अथ मीमांसा।

चतुर्थाध्यायस्य द्वितीयपादे चिन्तितम्—

"पात्रस्यावभृथे सोमलिप्तस्य गमनं तु किम्।
साधनं प्रतिपत्तिर्वा यन्ति तेनेत्यतः श्रुतेः॥
प्राप्ता साधनता मैवं पुरोडाशहविष्ट्वतः।
पात्रस्य तदसंबन्धात्प्रक्षेपः प्रतिपत्तये" इति।

ज्योतिष्टोमे श्रूयते—"+वरुणगृहीतं वा एतद्यज्ञस्य यदृजीषं यद्ग्रावाणो *यदौदुम्बर्यधिषवणफलके तस्माद्यत्किंचित्सोमलिप्तं द्रव्यं तेनावभृथं यन्ति" इति। निष्पीडितस्य सोमस्य नीरसो भाग ऋजीषम्। तदेतदृजीषग्रावादिकं सोमाभिषवादौ सोमेन लिप्यते। तस्य लिप्तस्य सर्वस्य द्रव्यस्यावभृथसाधनत्वमभ्युपेयम्। कुतः। तेनावभृथं यन्तीति तृतीयाश्रुत्याऽवभृथसाधनत्वावगमात्। तस्मात्सोमलिप्तं द्रव्यमवभृथे हविष्ट्वेन नीयत इति चेन्मैवम्। वारुणेनैव कपालेनावभृथमवयन्तीत्यनेनोत्पत्तिवाक्यशिष्टपुरोडाशहविषाऽवरुद्धेऽवभृथे सोमलिप्तस्य पात्रस्य हविष्ट्वेन संबन्धासंभवात्। तथा सत्यवभृथशब्देन तदीयं देशं

+चतुर्गृहीतमिति जैमिनीयन्यायमालाविस्तरे पाठः।
* 'दुम्बरी, यदधि' इति जै० न्या° विस्तरे पाठः।

१ क. ख. ङ. °सेदृतो। २ ख. घ. ङ. विवृताः। ३ ख. °णहतं।

लक्षयित्वा तस्मिन्देशे सोमलिप्तस्य पात्रस्य नयनमत्र विधीयते । तच्च नयनं प्रतिपत्तये भवति । पात्रस्य पूर्वमुपयुक्तत्वात् । तस्मादेतत्प्रतिपत्तिकर्म ।

दशमाध्यायस्य सप्तमपादे चिन्तितम्-

" किं स्यादवभृथे बर्हिर्वर्ज्यं सर्वमुताऽऽचरेत् ।
यावदुक्तं प्रयाजानुयाजबर्हिर्निषेधवः ॥
आद्योऽप्सुमन्तावित्याज्यभागोक्त्या परिसंख्यया ।
अन्येनात्र गुणप्राप्तेरपूर्वत्वेन वाऽन्तिमः " इति "

ज्योतिष्टोमावभृथे चतुर्थप्रयाजप्रथमानुयाजरूपौ बर्हिर्यागौ वर्जयित्वा शिष्टं चोदकप्राप्तं सर्वमनुष्ठेयम् । कुतः । अपबर्हिषः प्रयाजान्यजत्यपबर्हिषावनूयाजौ यजतीति बर्हिर्यागद्वयमात्रवर्जनावगमादिति प्राप्ते ब्रूमः-अप्सुमन्तावाज्यभागौ यजतीति परिसंख्यानादुक्तमेवानुष्ठेयम् । अथोच्येत चोदकप्राप्तावाज्यभागावनूद्याप्सुमच्छब्दोपेतमन्त्रद्वयरूपस्य गुणस्यात्र विधानान्न परिसंख्येति । मैवम् । लिङ्गक्रमाभ्यामेव मन्त्रयोः प्राप्तत्वात् । अतः परिसंख्यया गृहमेधीयवदुपसद्वापूर्वकर्मत्वेन वा यावदुक्तमनुष्ठेयम् ।

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्-

" किमप्स्ववभृथे मुख्यमात्रं साङ्गमुताग्रिमः ।
मुख्यत्वेनान्वयान्मैवं प्रयोगेण तदन्वयात् " इति ।

इदं श्रूयते-अप्स्ववभृथेन चरन्तीति । तत्र वारुण एककपालोऽवभृथशब्दवाच्यत्वान्मुख्यं कर्म तेन मुख्येनापामन्वयः श्रूयते । अतोऽत्र द्रव्यदेवतावदपां मुख्यमात्राङ्गत्वात्प्रधानस्यैवाप्स्वनुष्ठानम् । आघाराज्यभागादीन्याहवनीयेऽनुष्ठेयानीति प्राप्ते ब्रूमः-स्यादेतदेवम् । यद्यप्स्ववभृथ इत्येतावदेव श्रूयेत । इह त्वप्सु चरन्तीति श्रवणादवभृथप्रयोगेणापामन्वयात्साङ्गं प्रधानमप्सु कर्तव्यम् । एतद्विचारत्रयमवभृथयजूंषि जुहोतीत्यस्मिन्ननुवाके द्रष्टव्यम् ।

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्-

" यूपाञ्जनादिरेकैकः संघो वाऽनुसमीयते ।
एकैकः पूर्ववन्मैवं वचनात्काण्डसंगतेः " इति ॥

---

१ क. घ. ङ. अन्त्यो नाङ्गगुणे प्रा° । ख. अन्त्येना° । २ क. घ. ङ. मुख्येनानन्व° । ३ ख. °न्मुख्यकर्मत्वेन । ४ ख. °रद्वय° । ५ ख. °ण्डतेरिता" इ° ।

( षोडशिग्रहविधिः )

ज्योतिष्टोमेऽग्नीषोमीयपशौ यूपस्य घृतेनाञ्जनमुच्छ्रयणमवटस्य पर्यूहणं यूपमूलस्य दृंहणं मध्ये रशनया परिव्ययणमित्येते पदार्था आम्नाताः। ते चैकयूपपक्षे तथैव कर्तव्याः। एकयूपस्य च विकल्पः श्रूयते—" एकयूपो वैकादशिनी वा। अन्येषां यज्ञानां यूपा भवन्ति। एकविꣳशिन्यश्वमेधस्य " इति। तत्र बहुयूपेष्वञ्जनादिरेकैकः पदार्थः प्राजापत्यपशूपाकरणादिवदनुसमेतव्य इति प्राप्ते ब्रूमः—अञ्जनादिपरिव्ययणान्तं यजमानो यूपं नावसृजेदिति वचनेन यजमानस्य यूपत्यागनिषेधोऽञ्जनादिकाण्डस्यानुसमये सत्युपपद्यते। तस्मान्नात्र पदार्थानुसमयः।

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

" संस्कारः स्यादुपशये न वा यूपोक्तितोऽग्रिमः।
न स्यान्नियोजनाभावात्तूष्णींछेदेन यूपता " इति।

यूपैकादशिन्यां श्रूयते—" उपशयो यूपो भवति " इति। एकादशानां यूपानां समूह एकादशिनी। तत्र दक्षिणतोऽवस्थापितो द्वादशो यूप उपशयः। तथा च श्रूयते—" यद्दक्षिणत उपशयः " इति। तस्मिन्नुपशये परिव्ययणादिको यूपसंस्कारोऽस्ति, संस्कारनिमित्तस्यैकस्य यूपशब्दस्य तत्र प्रयुक्तत्वादिति चेन्मैवम्। संस्कारप्रयोजनस्यात्राभावात्। पशुं नियोक्तुं यूपः संस्क्रियते। तच्च नियोजनमितरेष्वेकादशसु यूपेष्वस्ति न तु द्वादश उपशये। तथा च तैत्तिरीयकब्राह्मणम्—" सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुः " इति। परिव्ययणादिसंस्काराभावेऽप्यमन्त्रच्छेदनादयः केचिद्धर्मास्तत्र वाचनिका विद्यन्ते। तावताऽल्पेन सादृश्येन गौणी तत्र यूपोक्तिः। तस्मान्न यूपशब्दो धर्मानतिदिशतीति। एतद्विचारद्वयं स्फ्येन वेदिमुद्धन्तीत्येतस्मिन्ननुवाके द्रष्टव्यम्।

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

" स्यादैकादशिने दैक्षात्सौत्याद्वाऽऽद्योऽस्तु पूर्ववत्।
रशनाद्वयसौत्यत्वविशेषाल्लिङ्गतोऽन्तिमः " इति॥

ऐकादशिनाः पशव एवमाम्नायन्ते—"आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः सꣳहितोऽधोरामः सावित्रो वारुणः पेत्वः " इति। यद्य-

---

१ ख. °स्य परिहं° । २ ख. स्यात्प्रयो° । ३ क. घ. ङ. तत्र नि° । ४ क. घ. ङ. गौणेन । ५ ख. दैक्ष्यात्सौ° ।

प्यश्वमेधप्रकरण एते पठितास्तथाऽपि ज्योतिष्टोमप्रकरणेऽप्येते विधीयन्ते—"प्रैवाऽऽग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेन" इत्यादिना। तेष्वैकादशिनेषु दैक्षादग्नीषोमीयाद्विध्यन्तातिदेशः स्यात्। कुतः। अग्नीषोमीयस्य पशुप्रकृतित्वेन पूर्वाधिकरणे निर्णीतत्वादिति चेन्मैवम्। सौत्यगतविशेषलिङ्गदर्शनात्। सुत्याकाले भवः सौत्यः सवनीयः पशुः। तत्र चोदकप्राप्ता रशनैका वाचनिकी द्वितीया। एतच्च तृतीये निर्णीतम्। तदेतद्रश-नाद्वयमग्नीषोमीयपशावसंभवात्सवनीयस्य विशेषलिङ्गमेकं सुत्याकालीनत्वं द्वितीयम्। ते च द्वे लिङ्गे ऐकादशिनेषु दृश्येते। तत्रेदमाम्नायते—"द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययति" इति। सुत्याकालीनत्वं च तेष्वस्ति। ततः सौत्यध(त्याद्ध)र्मातिदेशः।

नवमाध्यायस्य तृतीयपादे चिन्तितम्—

"कृष्णग्रीवादिके नोह ऊहो वाऽस्ति न पूर्ववत्।
देवत्वं न गणस्यात ऊहो बह्वभिधित्सया" इति।

यूपैकादशिन्यामग्न्यादिदेवताकाः पशव आम्नाताः—"प्रैवाऽऽग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेन" इत्यादिना। ते च स्वनामभिरन्यत्राऽऽम्नाताः—"आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः" इत्यादिना। तत्राप्येकवचनान्तस्य मेधपतिश-ब्दस्याऽऽदित्येष्विव नोह इति चेन्मैवम्। वैषम्यात्। आदित्यगणस्य तत्र देवत्वम्। इह त्वेकैकस्य पृथग्देवत्वम्। अतो बहून्देवानभिधातुं बहुवचनान्तत्वेनो-हनीयम्।

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"ऐकादशिनके( गे ) तन्त्रं वसाहोमेऽथ भिन्नता।
तन्त्रं शवयं(क्य)त्वतो भेदः प्रधानार्धर्चभेदतः" इति।

एकादशिनेष्वाग्नेयसारस्वतसौम्यादिपशुषु वसाहोमस्य सह कर्तुं शक्यत्वा-त्तन्त्रमिति प्राप्ते ब्रूमः—देवताभेदेन प्रधानभेदात्तत्तद्याज्यार्धर्चान्तकालानां भिन्न-त्वेनानुष्ठानयौगपद्यासंभवाद्भेदः।

१ ख. दैक्ष्याद°। २ ख. वाऽस्य न। ३ ख. °त्रास्यैक°। ४ ख. °न्तत्वमह°। ५ ख. °नकं त°। ६ ख. °दः। अत्रै°।

(षोडशिग्रहविधिः)

तत्रैवान्यच्चिन्तितम्—

"यूपैकादशिनयूपाहुतेर्भेदोऽथ तन्त्रता।
सामीप्यभेदादाद्योऽन्त्यः सामीप्यं दृष्टिगं यतः" इति॥

यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः प्रतियूपं भिद्यते। कुतः। यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति तद्विधानात्सामीप्यानां च भेदादिति प्राप्ते ब्रूमः—न तावदत्यन्तसामीप्यं संभवति यूपदाहप्रसङ्गात्। अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावतो देशस्य समीपत्वमभ्युपेतव्यम्। तथा सति देशैक्यादाहुतेस्तन्त्रता।

तत्रैव[1] चतुर्थपादे चिन्तितम्—

"किमेकादशिनेष्वस्य कुम्भ्यादेर्भिन्नता न वा।
असंदेहाय भेदो न लिङ्गादेवास्य सिद्धितः" इति।

भिन्नदेवताकेष्वेकादशिनेषु पशुष्वेककुम्भीपाके सति किमङ्गं कां देवतां प्रत्युपाकृतस्य पशोः संबन्धीति संदेहे सति प्रदानं संकीर्येत। तस्मात्कुम्भ्यादेरावार्प(भेद) इति चेन्मैवम्। चिह्नकरणमात्रेण संदेहापगमसिद्धौ लाघवात्। तस्मादत्र तन्त्रता।

तत्रैवान्यच्चिन्तितम्—

"तत्तन्त्रं हेयमुत नो चिह्नं नास्ति वसास्वतः।
हेयं नो प्रतिपत्तित्वात्सांकर्येणाप्यदोषतः" इति॥

ऐकादशिनेषु कुम्भ्यादेर्यत्तन्त्रं निर्णीतं तत्परित्याज्यमङ्गानामिव वसानां चिह्नकरणासंभवेन सांकर्यप्रसङ्गादिति चेन्मैवम्। वसाहोमस्य प्रतिपत्तिकर्मत्वेन द्रव्यं प्रत्यपि प्रयोजकत्वाभावेन तद्द्रव्यश्रपणार्थं कुम्भीभेदप्रयोजकत्व[4]स्य दूरापेतत्वात्। न चात्र द्रव्यसांकर्यं दोषाय भवति, व्यवस्थापकप्रमाणाभावात्। ननु तत्तद्देवताविषययाज्यार्धर्चान्तेषु भिन्ना होमाः पूर्वं निर्णीताः। बाढं। तथैवै[5]कादशकृत्वो हूयतां किमायातं द्रव्यसांकर्ये। तस्मात्कुम्भ्यादेस्तन्त्रं न त्याज्यम्। इदं षट्कं प्रजापतिः प्रजा असृजतेत्यस्मिन्ननुवाके द्रष्टव्यम्।

---

१ ख. तावता। २ ख. घ. ङ. °क्यासंभवाद्वा°। ३ क. घ. ङ. तथैव। ४ क. °त्वस्यान्तरित°। ५ ख. °थैवार्धर्चान्ते तद्भूय°।

( षोडशिग्रहविधिः )

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

"पर्यग्निकृतः पात्नीवत उत्सृज्यत इत्यसौ ।
यागो गुणो वा यागः स्यादन्वयाव्यवधानतः ॥
प्रत्यभिज्ञान(त)मालभ्यमनूद्योत्सर्गशब्दतः ।
गुणं पर्यग्निकृत्याख्यं वक्त्युत्तरनिवृत्तये ॥
न दुष्टा परिसंख्याऽत्र चोदकात्प्राग्विधौ सति ।
पर्यग्निकरणान्ताङ्गरीतिः क्लृप्तोपकारतः" इति ॥

"त्वाष्ट्रं पात्नीवतमालभेत" इति प्रकृत्यैवमाम्नातम्—"पर्यग्निकृतं पात्नीवतमुत्सृजति" इति । तत्र पर्यग्निकृतशब्देन संस्कृतपशुद्रव्यस्य पात्नीवतशब्देन पत्नीवन्नामकदेवतासंबन्धस्य च प्रतीयमानत्वादयं यागविधिः । एवं सति पर्यग्निकृतपात्नीवतशब्दयोरव्यवहितान्वयो लभ्यते । सिद्धान्ते तु पर्यग्निकृत[म]ुत्सृजतीत्यन्वयं वाञ्छन्ति। तदा व्यवहितान्वयो दुर्वारः। तस्माद्वायव्यपशुवद्यागविधिरिति प्राप्ते ब्रूमः—अनारभ्याधीतत्वान्नास्ति वायव्ये प्रकृतप्रत्यभिज्ञा । इह त्वालभ्यत्वेन प्रकृतः पशुः पात्नीवतशब्देन प्रत्यभिज्ञायते । तमनूद्य पर्यग्निकृतशब्दान्वितेनोत्सृजतीत्याख्यातेन पर्यग्निकरणाख्यो गुणो विधीयते । न च प्रकृतिगतस्य पर्यग्निकरणस्य विकृतौ चोदकेन प्राप्तत्वादनर्थकोऽयं विधिरिति वाच्यम् । उपरितनाङ्गनिवृत्तेर्विधिप्रयोजनत्वात् । नन्वेवं सति परिसंख्या स्यात् । सा च दोषत्रयदुष्टा । स्वार्थत्यागोऽन्यार्थस्वीकारः प्राप्तबाधश्चेति त्रयो दोषाः । पर्यग्निकरणवाक्ये स्वार्थो विधिस्त्यज्येत । अन्यार्थो निषेधः स्वी क्रियेत । चोदकप्राप्तान्युपरितनान्यङ्गानि बाध्येरन् । मैवम् । पर्यग्निकरणोत्तरभावीन्यङ्गानि नानुष्ठेयानीत्येतस्याः परिसंख्याया अनङ्गीकारात् । कथं तर्हि तन्निवृत्तिः । आर्थिकीति ब्रूमः । चोदकप्रवृत्तेः प्रागेवायं विधिः प्रवर्तते । प्रत्यक्षोपदेशस्य शीघ्रबुद्धिजनकतया कल्प्यातिदेशात्प्रबलत्वात् । तथा सत्युपदिष्टैरेवाङ्गैर्निराकाङ्क्षायां विकृतौ चोदकस्याप्रवृत्त्यैवोपरितनान्यङ्गानि न प्राप्यन्ते । न चानेन न्यायेन पर्यग्निकरणात्प्राचीनानामप्यप्राप्तिरिति वाच्यम् । विधीयमानस्य पर्यग्निकरणस्य नूतनत्वे सत्युपकारकल्पनापत्त्या प्रकृतौ यत्क्लृप्तोपकारं पर्यग्निकरणं तदवस्थापन्नस्यैवात्र विधेयत्वात् । प्रकृतौ च प्राचीनाङ्गानन्तरभाविन एवोपकारः

१ ख. °नाङ्गाननुव° । २ ख. °वित्वेनैवो° ।

( षोडशिग्रहविधिः )

कॢप्त इत्यत्रापि तादृशस्यैव विधानात्पर्यग्निकरणान्ताङ्गरीतिः सिध्यति । एवं च सत्युत्सृजतीत्याख्यातेन यथोक्तपर्यग्निकरणविधावर्थसिद्ध उपरितनाङ्गोत्सर्गो धातुनाऽनूद्यते । तदेवमत्र गुणविधिः ।

नवमाध्यायस्य चतुर्थपादे चिन्तितम्—

" आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत् ।
कर्मान्यद्वाऽग्रिमस्त्यागशेषसंस्थापनोक्तिभिः ॥
अङ्गरीत्या समाप्तत्वाद्देवतोक्त्यनुवर्तनात् ।
साम्याच्छेषः संस्थितिस्तु याग आलम्भनादिवत् " इति ।

" त्वाष्ट्रं पात्नीवतमालभेत " इति प्रकृत्य "पर्यग्निकृतं पात्नीवतमुत्सृजति" इति श्रुतम् । तत्र पुनः श्रूयते—"आज्येन शेषं संस्थापयेत् " इति । तदिदमाज्यं पशुद्रव्यस्य प्रतिनिधिर्भवेत् । कुतः । उत्सर्गशेषसंस्थापनशब्दैस्तदवगमात् । पर्यग्निकरणादूर्ध्वं पशुद्रव्यस्य त्यागमभिधायाऽऽज्येनेति द्रव्यान्तरं पशुस्थानीयं साधनभूतमुपदिश्य चोदकप्राप्तमुत्तरकालीनमङ्गजातं तेन द्रव्येण समापनीयमिति विधीयत इति प्राप्ते ब्रूमः—पूर्वाधिकरणन्यायेनाङ्गरीत्या पात्नीवतः पशुः समाप्तः। यदि पात्नीवतमालभेतेति विहितस्य कर्मणः समाप्तिर्न स्यात्, केवलं पशुद्रव्यत्यागः क्रियेत तदा विहितो द्रव्यदेवतासंबन्धरूपो यागो नानुष्ठितः स्यात् । ततो देवतामुद्दिश्य त्यागोऽवश्यं कर्तव्यः। तथा सति पशुसाधनके यागे मुख्येन पशुनैव साधिते कुतः प्रतिनिधिः। देवतोद्देशत्यागस्य चोत्पत्तिवाक्येनैव सिद्धत्वात् । पर्यग्निकरणोत्सर्गवाक्येना( णा )ङ्गरीतिविधाने संस्थापनीयः शेषो न कोऽप्यस्ति । तस्मादाज्यवाक्येन कर्मान्तरं विधीयते । देवता तु पात्नीवतशब्दस्यानुवृत्त्या लभ्यते । कर्मान्तरस्यापि शेषत्वमुपचर्यते। पश्वाज्यद्रव्यकयोः पूर्वोत्तरकर्मणोः पत्नीवदाख्याया देवताया एकत्वेनाव्यवहितानुष्ठानेन चोपक्रमोपसंहारसदृशत्वात् । संस्थितिक्रियया चाऽऽलम्भननिर्वापादिवद्यागो लक्ष्यते । लिङ्प्रत्ययश्चापूर्वभावनामभिधत्ते । तस्मादाज्यद्रव्यकं पत्नीवद्देवताकं शेषवत्पशुयागसमनन्तरोत्तरभाविकर्मान्तरमत्र विधीयते । एतदुभयमिन्द्रः पत्नियेत्यनुवाके द्रष्टव्यम् ।

---

१ क. घ. ङ. °त्र श्रू° । २ घ. ङ. °पयति । इ° । ३ क. घ. ङ. °मुद्दिश्य । ४ क. घ. ङ. °रणेना° ।५ ख. °तिर्निर्वाप° ६ क. घ. ङ. °दाज्येन । ७ क. घ. ङ. °रत्वस्या° ।

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" अस्त्याहुतिश्चरौ सौम्ये नास्ति वा पशुपाकतः ।
निवृत्तत्वादारिज मैवमनिवृत्तेः पुरोत्थितेः " इति ।

तृतीयसवनीये ये सौम्यचर्वादयस्तेषु हविष्कृदाह्वानं पुनः कर्तव्यम् । पश्वर्थमाहूतायास्तस्याः पशुपाके निष्पन्ने सति निवृत्तत्वादिति चेन्नैवम् । प्रकृतौ पत्नीसंयाजेभ्य ऊर्ध्वं हविष्कृतः पत्न्या उत्थानं वाक्येन विहितम् । पशावपि ततः पूर्वं निवृत्त्यभावात् । तस्मात्तत्कालीनेषु सौम्यचर्वादिषु नास्ति पुनराह्वानम् । एतच्च घ्नन्ति वा एतत्सोममित्यनुवाके द्रष्टव्यम् ।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" उक्थ्योत्कर्षे षोडशी नोत्कृष्येतोत्कृष्यतेऽथवा ।
स्तोत्रकालाय नोत्कर्षः पूर्ववत्षोडशि[१]ग्रहे ।
ग्रहं पराञ्चमुक्थ्येभ्य इत्यङ्गाङ्गित्वभासनात् ।
स स्तोत्रे ग्रह उत्कृष्टे स्तोत्रकालः प्रबाध्यताम् " इति ।

ज्योतिष्टोमे षोडशिग्रहं प्रकृत्य श्रूयते—" तं पराञ्चमुक्थ्येभ्यो नि[३]र्गृह्णाति " इति । तृतीयसवने सूर्यास्तमयात्प्रागेवोक्थ्यग्रहास्त्रयो गृह्यन्ते । तेभ्यः परस्तादयं षोडशी विहितः । यदि कदाचिद्दैवादुक्थ्यग्रहा अस्तमयादूर्ध्वमुत्कृष्येरंस्तदा तत ऊर्ध्वं विहितस्यापि षोडशिग्रहस्य नास्त्युत्कर्षः । कुतः । पूर्वन्यायेन कालस्यानुसरणीयत्वात् । कालोऽप्येवमाम्नातः—" समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति " इति । समयोऽस्तमयस्तं प्राप्ते सूर्ये स्तोत्रप्रारम्भकालः । सोऽयमुत्कर्षे सति बाध्यते । तच्चायुक्तं, पूर्वमग्निहोत्रस्य स्वकालमबाधितुमेवेष्टिमध्येऽनुष्ठानाङ्गीकारादिति प्राप्ते ब्रूमः—पराञ्चमिति शब्देनोक्थ्येभ्य उत्तरकालः षोडशिग्रहाङ्गत्वेन विधीयते । ततो मुख्यग्रहस्य कालमबाधितुमुपसर्जनस्य स्तोत्रस्य कालं बाधित्वा सस्तोत्रग्रह उत्कृष्टव्यः ।

दशमाध्यायस्य पञ्चमपादे चिन्तितम्—

" विकृतौ प्रकृतौ वा स्यात्षोडश्युत्कर्षतोऽग्रिमः ।
अविरुद्धेन वाक्येनानुत्कर्षात्प्रकृतावसौ " इति ।

ज्योतिष्टोमप्रकरणे श्रूयते—" य एवं विद्वान्षोडशिनं गृह्णाति " इति ।

१ क. घ. ङ. °त्थानकालत्वेन प° । २ क घ. ङ. °स्मात्तत्° । ३ च. निर्गृह्णा° ।
४ क. घ. ङ. °गृह्णन्ति " इ° ।

( षोडशिग्रहविधिः )

सोऽयं षोडशिग्रहो विकृतौ निविशते। कुतः। प्रबलेन वाक्येन तस्य ग्रहस्य प्रकरणादुत्कृष्यमाणत्वात्। "उत्तरेऽहन्द्विरात्रस्य गृह्यते मध्यमेऽहंस्त्रिरात्रस्य" इति हि वाक्यम्। द्विरात्रादीनां च विकृतित्वं प्रसिद्धम्। अतः प्रकरणं बाधित्वा विकृतौ निवेश इति प्राप्ते ब्रूमः—"अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्" इत्यन्यद्वाक्यमस्ति। तेन प्रकृतिभूतेऽग्निष्टोमे निविशते। न चात्र प्रकरणबाधः। अग्निष्टोमस्य ज्योतिष्टोमावान्तरसंस्थारूपत्वेन ततोऽनन्यत्वात्। न चैवं सति चोदकेनैव द्विरात्रादिषु प्राप्तत्वात्पुनर्विधिवाक्यं व्यर्थमिति शङ्कनीयम्। अहर्विशेषसंबन्धाय राजन्यादिनिमित्तनैरपेक्ष्याय च तदुपपत्तेः। तस्मात्प्रकृतौ निवेशः।

तत्रैवान्यच्चिन्तितम्—

"उक्थ्याग्रयणतः स स्यात्केवलाग्रयणादुत।
आद्य उक्तिद्वयादन्त्य उक्थ्योर्ध्वत्वविधित्वतः" इति।

स पूर्वोक्तः षोडशी वचनद्वयबलेनोक्थ्यपात्रादाग्रयणपात्राच्च ग्रहीतव्यः। "उक्थ्यान्निर्गृह्णाति षोडशिनम्" इत्येकं वाक्यम्। "आग्रयणाद्गृह्णाति षोडशिनम्". इति द्वितीयं वाक्यम्। अत्रोच्यते—आग्रयणपात्रादेव ग्रहीतव्यः। कुतः। उक्थ्यवाक्यस्योत्तरकालविधिपरत्वात्। "तं पराञ्चमुक्थ्यान्निगृह्णाति" इत्यूर्ध्वकालवाचिनः पराक्शब्दस्य प्रयोगात्। ततो नोभयस्माद्ग्रहणम्।

तत्रैवान्यच्चिन्तितम्—

"सवनेषु तृतीये वा स त्रयोक्त्या भवेत्त्रिषु।
द्वे निन्दित्वा तृतीयस्य विधेस्तत्रैव गृह्यताम्" इति॥

स पूर्वोक्तः षोडशिग्रहस्त्रिषु सवनेषु भवेत्। कुतः। सवनत्रयस्योक्तत्वात्। षोडशिनं प्रकृत्याऽऽम्नायते—"प्रातःसवने ग्राह्यो माध्यंदिनसवने ग्राह्यस्तृतीयसवने ग्राह्यः" इति। नैतद्युक्तम्। सवनद्वयस्यार्थवादत्वेन तृतीयसवनस्योक्तत्वात्। अत एव वाक्यशेषे सवनद्वयं निन्दित्वा तृतीयसवनं विधीयते। यत्प्रातःसवन इत्यादिना सवनद्वये वज्रपातदोषोऽभिहितः। तृतीयसवने ग्राह्यो न सर्वेषु सवनेषु गृह्णातीति प्रशंसापूर्वकं विहितम्। तस्मात्तृतीयसवन एव षोडशिग्रहः।

---

१ ख. च. °हनि द्विरा°। २ ख. च. °मेऽहनि त्रिरा°। ३ ख. च. °न्निर्गृह्णा°। ४ क. घ. ङ. °नस्तावकत्वा°। ५ क. घ. ङ. °त्रपात°।

पुनरप्यन्यत्तत्रैव चिन्तितम्-

" अग्निष्टोमोक्थ्यसंबन्धी षोडश्यस्तुतशस्त्रकः ।
तद्युक्तो वाऽग्रिमः प्राप्तस्तत्र संस्थामबाधितुम् ॥
स्तोत्रं भवत्येकविंशं हरिवच्छस्यते ततः ।
इष्यते ह्यन्यसंस्थात्वं स्तुतशस्त्रयुतस्ततः" इति ॥

षोडशिनं प्रकृत्याऽऽम्नायते-" अप्यग्निष्टोमे राजन्यस्य गृह्णीयाद्प्युक्थ्ये ग्राह्यः" इति । सोऽयमग्निष्टोमोक्थ्यसंस्थयोर्विहितः षोडशिग्रहः स्तुतशस्त्रवार्जितो भवितुमर्हति । अन्यथा तदीयाभ्यां स्तुतशस्त्राभ्यां क्रतुसमाप्तौ षोडशिसंस्थात्वं प्रसज्येत, अग्निष्टोमसंस्थात्वमुक्थ्यसंस्थात्वं च बाध्येते, तत्संबन्धिसमाप्त्यभावादिति प्राप्ते ब्रूमः-" एकविꣳशꣳ स्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यते" इति षोडशिनि प्रत्यक्षविधिना स्तुतशस्त्रे विहिते । किंच " ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति " इति ग्रहग्रहणचमसोन्नयनयोः स्तोत्रनिमित्तत्वं श्रुतम् । न हि सति निमित्ते नैमित्तिकं त्यक्तुं शक्यम् । तस्मात्पूर्वसंस्थात्वहानिमन्यसंस्थात्वं चाभ्युपेत्य स्तुतशस्त्रयुतत्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठक एकोनचत्वारिंशोऽनुवाकः ॥ ३९ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके षट्चत्वारिंशोऽनुवाकः) ।

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् । यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् । अश्विनꣳ स पुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति । त्वे सु पुत्र शवसोऽवृत्रन्काम-

---

१ क. घ. ङ. °त, ततस्तत्सं° । २ क. घ. ङ. °ति प्रतिम° ।

( काम्ययाज्यापुरोनुवाक्याः )

कातयः। न त्वामिन्द्राति रिच्यते। उक्थ-उक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानम् (१) सुतासः। यदीं सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते। अग्ने रसेन तेजसा जातवेदो वि रोचसे। रक्षोहाऽमीव-चातनः। अपो अन्वचारिषं रसेन समसृक्ष्महि। पयस्वां अग्न आऽगमं तं मा सं सृज वर्चसा। वसुर्वसुपतिर्हिकमस्यग्ने विभावसुः। स्याम ते सुमतावपि। त्वामग्ने वसुपतिं वसूनामभि प्र मन्दे (२) अध्वरेषु राजन्। त्वया वाजं वाजयन्तो जयेमाभि-ष्याम पृत्सुतीर्मर्त्यानाम्। त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम्। स नो रास्व सुवीर्यम्। अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दम्। अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ। अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड्जुह्वास्यः। त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता। सखा सख्या समिध्यसे। उदग्ने शुचयस्तव वि ज्योतिषा ॥ (३)

( मघवान मन्दे ह्यग्ने चतुर्दश च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके षट्चत्वारिंशोऽनुवाकः ॥ ४६ ॥ [ ४० ]

( काम्ययाज्यापुरोनुवाक्याः )

( आ दंदे वाचस्पतंय उपयामगृहीतोऽस्या वांयो अयं वां या वां प्रात-र्युजांवयं वेनस्तं प्रत्नथा ये देवास्त्रिꣳशदुंपयामगृहीतोऽसि मूर्धानं मधुश्चेद्राग्नी ओमांसो मरुत्वन्तमिन्द्रं मरुत्वो मरुत्वांन्महान्महान्नृवत्कदा वाममदं्धेभिर्हिर-ण्यपाणिꣳ सुशर्मा बृहस्पतिर्हरिरस्यंग्न उत्तिष्ठन्तरणिरा प्यांयस्वेयुष्टे ये ज्योति-ष्मतीं प्रयासायं चित्तमा तिष्ठेन्द्रमसांवि सर्वस्य महान्त्सजोषा उदु त्यं धातो-रुꣳ हि यस्त्वा षट्चंत्वारिꣳशत् ॥ ४६ ॥ )

( आ दंदे ये देवा महानुत्तिष्ठन्त्सर्वस्य सन्तु दुर्मित्राश्चतुःप(तुष्प)ञ्चा-शत् ॥ ५४ ॥ )

( हरिः ॐ ) ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥**

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठके चत्वारिंशोऽनुवाकः ) ।

एकोनचत्वारिंशेऽनुवाके सोमयागः समापितः । अथास्य प्रपाठकस्यान्तिमेऽ-नुवाके काम्ययाज्यापुरोनुवाक्या उच्यन्ते ।

इष्टिकाण्डे द्विर्हविष्का काचिदिष्टिरेवमाम्नायते-

“ अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमे-कादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्र यच्छति ” [ सं० का० २ प्र० २ अ० ४ ] इति ।

वृद्धां[१] पुत्रपौत्रेणाभिवृद्धाम् ।

तत्राऽऽग्नेयस्य पुरोनुवाक्यामाह-

**यस्त्वेति** । हे जातवेदो योऽहं मर्त्यः सन्कीरिणा गुणकीर्तनशीलेन हृदा मनसा त्वाममर्त्यं मरणरहितं मन्यमान आह्वयामि, तादृशेऽस्मासु पुत्रपौत्रादि-रूपप्रजाभिर्निष्पादितं यशः कीर्तिं निधेहि । हेऽग्ने त्वत्प्रसादादमृतत्वं देवत्वमश्यां प्राप्नुयाम् ।

अथ याज्यामाह-

---

१ ख. °पौत्ररूपेणाभिवृद्धियुक्ताम् ।

(काम्ययाज्यापुरोनुवाक्याः)

**यस्मै त्वमिति**। शोभनं कर्म करोतीति सुकृत्। जातं जगद्वेत्तीति जातवेदाः। हे जातवेदोऽग्ने त्वं सुकृते यस्मै यजमानाय स्योनं सुखकरमुत्कृष्टं स्थानं कृणवः करोषि स यजमानो रयिं धनं स्वस्ति नशते सम्यक्प्राप्नोति। कीदृशं धनम्। अश्वैः पुत्रैः शूरभटैर्गोभिश्च संयुतम्।

ऐन्द्रस्य पुरोनुवाक्यामाह–

**त्वे सु पुत्रेति**। त्वे त्वयि। शवसो बलस्य। स्ववृत्रन्सुष्ठु वर्तन्ते। कामा भोगाः काम्यन्ते याभिः स्तुतिभिस्ताः कामकातयः। इन्द्रस्यातिप्रबलत्वाच्छवसः पुत्रेत्युपचर्यते। हे शवसः पुत्रेन्द्रास्मदीयस्तुतयस्त्वयि सुष्ठु वर्तन्ते, काचिदपि स्तुतिस्त्वां नातिरिच्यते। सर्वस्य स्तुतिवाक्यस्य त्वयि विद्यमानत्वात्।

अथ याज्यामाह–

**उक्थ इति**। उक्थउक्थे सोमयागवर्तिनि तत्तच्छस्त्रे स सोम इन्द्रं ममाद हर्षयामास। नीयत आहूयत इन्द्रोऽत्रेति नीथो यागप्रदेशः। समानदक्षास्तुल्येषु यजमानेषु कुशलाः सुतासः पुत्रस्थानीया यजमानाः पितृस्थानीयं मघवानं नीथेनीथे तत्तद्यागप्रदेशेऽवसे रक्षार्थं हवन्त आह्वयन्ति। यदीं सबाधो यस्मादीदृश. आहूतो मघवा विरोधिष्वसुरेषु बाधकारी तस्मादाह्वयन्ते। पुत्राः पितरं न पितरमिव। यथा बाला अन्यैस्ताड्यमाना रक्षार्थं पितरमाह्वयन्ति तद्वत्।

इष्ट्यन्तरं विधत्ते–

“अग्नये रसवतेऽजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्त्स्यामित्यग्निमेव रसवन्तꣳ स्वेन भागधेयेनोप धावति स एवैनꣳ रसवन्तं करोति रसवानेव भवत्यजक्षीरे भवत्याग्नेयी वा एषा यदजा साक्षादेव रसमव रुन्धे” [सं॰ का॰ २ प्र॰ २ अ॰ ४] इति।

रसवान्क्षीरदध्यादिरसोपेतः। अजाया अग्निवत्प्रजापतिमुखादुत्पन्नत्वादाग्नेयत्वम्। साक्षादव्यवधानेन शीघ्रमित्यर्थः।

तत्र पुरोनुवाक्यामाह–

**अग्ने रसेनेति**। हे जातवेदोऽग्ने रसेनास्मान्योजय। तेजसा विशेषेण प्रकाशसे। कीदृशस्त्वम्। यागदेशे रक्षसां हन्ता। शरीरेऽभिविश्याऽऽन्तररोगस्य चातनो विनाशकः।

याज्यां लिखिता । उरुꣳ हि राजा वरुणश्चकारेत्यस्मिन्ननुवाके व्याख्यातो मन्त्रः ।

इष्ट्यन्तरं विधत्ते—

" अग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत वसुमान्त्स्यामित्यग्निमेव वसुमन्तꣳ स्वेन भागधेयेनोप धावति स एवैनं वसुमन्तं करोति वसुमानेव भवति " [ सं० का० २ प्र० २ अ० ४ ] इति ।

तत्र पुरोनुवाक्यामाह—

**वसुरिति** । हेऽग्ने हिकं यस्मात्कारणात्त्वं वसुर्लोकानां वासि(सयि)ता धनपतिः प्रजायुक्(तिस्तेजोधन)श्चासि तस्माद्वयमपि तवानुग्रहबुद्धाववस्थिता भवेम ।

याज्यामाह—

**त्वामग्न इति** । हे राजन्दीप्तिमन्नग्नेऽध्वरेषु यज्ञेषु त्वामभिप्रमन्दे सर्वतः प्रकर्षेण तोषयामि । कीदृशं त्वाम् । वसूनां वसुपतिं धनानां मध्ये यानि श्रेष्ठानि धनानि तेषामधिपतिमित्यर्थः । वाजयन्तोऽन्नमिच्छन्तो वयं त्वत्प्रसादेन वाजमन्नं जयेम । विरोधिनां मनुष्याणां पृत्सुतीः सेनाः अभिष्यामाभिभवितुं शक्ता भवेम ।

इष्ट्यन्तरं विधत्ते—

" अग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत्संग्रामे संयत्ते वाजं वा एष सिसीर्षति यः संग्रामं जिगीषत्यग्निः खलु वै देवानां वाजसृदग्निमेव वाजसृतꣳ स्वेन भागधेयेनोप धावति धावति वाजꣳ हन्ति वृत्रं जयति तꣳ संग्राममथो अग्निरिव न प्रतिधृषे भवति " [ सं० का० २ अ० २ अ० ४ ] इति ।

वाजमन्नं सरति प्राप्नोतीति वाजसृत् । लोके युद्धं जेतुमिच्छुर्जयादूर्ध्वं वैरिसंबद्धमन्नं कृत्स्नं प्राप्तुमिच्छति । अतो वाजसृदिति विशेषणं युक्तम् । वाजं धावति प्राप्नोति तदर्थं वृत्रं शत्रुं हन्ति युद्धं च जयति । किंचाग्निरिवायमन्येन प्रतिधृषे तिरस्कर्तुं शक्तो न भवति ।

तत्र पुरोनुवाक्यामाह—

**त्वामग्न इति** । हेऽग्ने त्वां विप्रा यजमाना अभिवृद्धिं प्रापयन्ति । कीदृशं त्वाम् । वाजसातममतिशयेनान्नप्रदं सुष्टुतं स्तोत्रैर्हि सुष्ठु स्तुतम् । स तादृशस्त्वं नोऽस्माकं सुष्ठु सामर्थ्यं रास्व देहि ।

---

१ ख. °ज्यामाह—'अपो अन्व०वर्चसा इति । सोमावभृथ उ° । २ क. घ. ङ. च. प्राप्नुवन्ति ।

( काम्ययाज्यापुरोनुवाक्याः )

याज्यामाह—

**अयं नो इति**। अयमग्निरस्माकं वरिवः परिचारकं भृत्यवर्गं संपादयतु। मृधो वैरिणो विदारयन्नोऽस्माकं पुरतो गच्छतु। जर्हृषाणः प्रहरञ्शत्रूञ्जयतु। वाजसातावन्नदाननिमित्तं परकीयमन्नं जयतु।

इष्ट्यन्तरं विधत्ते—

"अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुर्निर्दिष्टभागो वा एतयोरन्योऽनिर्दिष्टभागोऽन्यस्तौ संभवन्तौ यजमानमभि सं भवतः स ईश्वर आर्तिमार्तोर्यदग्नयेऽग्निवते निर्वपति भागधेयेनैवैनौ शमयति नाऽऽर्तिमार्च्छति यजमानः" [ सं० का० २ प्र० २ अ० ४ ] इति।

गार्हपत्यादाहवनीयेऽग्निं प्रक्षिप्य तत्राग्निहोत्रं हूयते। तथा सति यस्य यजमानस्य संबन्धिनः पुरुषा विस्मृत्योद्धृत आहवनीयाग्नौ पुनरन्यमग्निमुद्धरेयुः स यजमानोऽग्नियुक्तायाग्नये निर्वपेत्। तत्र विशेष्यरूपोऽग्निर्निर्दिष्टभागो विशेषणरूपस्त्वनिर्दिष्टभागस्तावुभौ परस्परं संसृज्यमानौ यजमानं भक्षयितुमभिलक्ष्य संभवतः। ततः स यजमान आर्तिमार्तोरीश्वरो विनाशं प्राप्तुं संप्रभवति। तावग्नी अनयेष्ट्या शाम्यतः।

तत्र पुरोनुवाक्यामाह—

**अग्निनेति**। पश्चात्प्रक्षिप्तेनाग्निना पूर्वस्थितोऽग्निः सम्यग्दीप्यते। सोऽग्निर्विशेषणैः कविरित्यादिभिर्विशिष्टः।

याज्यामाह—

**त्वꣳ ह्यग्न इति**। हे पूर्वस्थिताग्ने पश्चात्प्रक्षिप्तेनाग्निना त्वं समिध्यसे। तादृशस्त्वं ब्राह्मणजात्यभिमानी सन्मार्गवर्ती प्रियश्च। इतरोऽपि तादृश एव।

इष्ट्यन्तरं विधत्ते—

"अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्" [ सं० का० २ प्र० २ अ० ४ ] इति।

यस्य यजमानस्याग्निहोत्रार्थमुद्धृतोऽग्निर्होमात्पूर्वमेवोपशाम्यति स एतामिष्टिं निर्वपेत्।

अत्र शाखान्तरानुसारिणां मतं पूर्वपक्षत्वेनोपन्यस्यति—

---

१ क. घ. ङ. च. °तः। स। २ क. घ. ङ. च. प्राप्तो भ°।

" अपर आदीप्यानूद्धृत्य इत्याहुः " [ सं० का०२ प्र०२ अ० ४]इति ।

अपरोऽग्निर्गार्हपत्ये प्रदीप्य पर्वोद्धरणमनु पुनरुद्धरणीय इति तन्मतम् ।

तदिदं दूषयति–

" तत्तथा न कार्यं यद्भागधेयमभि पूर्व उद्ध्रियते किमपरोऽभ्युद्ध्रियेतेति " [ सं० का० २ प्र० २ अ० ४ ] इति ।

अग्निहोत्रहविर्लक्षणो(णं) यद्भागधेयमभिलक्ष्य पूर्वो वह्निरुद्धृतस्तमेव भागमभिलक्ष्यापरो वह्निः किमुद्ध्रियेत तदनुचितम् । इतिशब्दो हेतौ । तस्मान्न कार्यम् ।

सिद्धान्तं विधत्ते–

" तान्येवावक्षाणानि संनिधाय मन्थेत् " [सं० का० २ प्र० २ अ० ४] इति ।

यान्युल्मुकानि शान्तानि तान्येवाधस्तादवस्थाप्यारणिभ्यामग्निमन्थनं कुर्यात् ।

मन्थने मन्त्रमुत्पादयति–

" इतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति" [सं० का०२ प्र०२ अ०४] इति ।

अग्निः पूर्वमितो दग्धकाष्ठादुत्पन्न इदानीमपि स जातवेदा गायत्र्यादिभिश्छन्दोभिरनुगृहीतः स्वाद्योनेर्दग्धकाष्ठादधिजायताम् । जातश्च तं तं देवं प्रजानन्देवेभ्यो हव्यं वहतु ।

मन्त्रस्य तात्पर्यं व्याचष्टे–

" छन्दोभिरेवैनꣳ स्वाद्योनेः प्र जनयति " [ सं० का० २ प्र० २ अ० ४ ] इति ।

नन्वस्मिन्सिद्धान्तेऽपि पूर्वपक्षादपरोऽग्निः प्रसज्येतेत्याशङ्क्याऽऽह–

" एष वाव सोऽग्निरित्याहुः " [ सं० का० २ प्र० २ अ० ४ ] इति ।

स्वकारणादुत्पन्नत्वादेष एव पूर्वोऽग्निर्न तु भेदोऽस्तीति सिद्धान्तिन आहुः ।

किमर्था तर्हीयमिष्टिरित्याशङ्क्याऽऽह–

" ज्योतिस्त्वा अस्य परापातितमिति यदग्नये ज्योतिष्मते निर्वपति यदेवास्य ज्योतिः परापतितं तदेवाव रुन्धे " [ सं० का० २ प्र० २अ० ४ ] इति ।

---

१ च. °पत्यः प्र° । २ ख. °स्मात्तत्तथा न का° । ३ ख. °स्थाप्य पूर्वार° । ४ ख. च. °पक्षवद° ।

( काम्ययाज्यापुरोनुवाक्याः )

अस्य पूर्वाग्निर्ज्योतिरेव विनष्टं न त्वाग्निर्विनष्टः । तच्च ज्वालारूपं ज्योतिरिष्ट्या संपाद्यते ।

तत्र याज्यापुरोनुवाक्ययोर्ऋचोः प्रतीकं(के) दर्शयति—

**उदग्न इति** । उदग्ने शुचयस्तव शुक्रा भ्राजन्त इत्ययं मन्त्रस्त्वमग्ने रुद्र इत्यस्मिन्ननुवाके व्याख्यातः । वि ज्योतिषा बृहतेत्ययं मन्त्रः कृणुष्व पाज इत्यस्मिन्ननुवाके व्याख्यातः ।

अत्र विनियोगसंग्रहः—

" यस्त्वा याज्या पुत्रवत्यामिष्टौ त्वे पुत्रयागके ।
अग्ने रसवद्यागे तु वसुर्वसुमतीष्यते ॥ १ ॥
त्वामग्ने वाजसृद्यागे ह्यग्निनाऽग्निवतीष्यते ।
उदग्निर्ज्योतिषे ज्योतिष्मत्ये तत्र चतुर्दश ॥ २ ॥ इति ।

अथ मीमांसा ।

नवमाध्यायस्य चतुर्थपादे चिन्तितम्—

" ज्योतिष्मती भवेन्नो वा दर्शाद्युद्धृतलोपने ।
निमित्तसत्त्वात्स्यान्नाग्निहोत्रार्थोद्धृतिवर्जनात् " इति ॥

अग्निहोत्रप्रक्रियायामिदमाम्नायते—" अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत् " इति । प्रतिदिनमग्निहोत्रं होतुं गार्हपत्यादुद्धृत्याऽऽहवनीयेऽग्निः प्रक्षिप्यते । सोऽयमुद्धृतोऽग्निः कदाचिद्हुतेऽग्निहोत्रे यदि शाम्येत्तदानीमियमिष्टिः प्रायश्चित्तमित्यर्थः । तत्र दर्शपूर्णमासार्थमुद्धृतस्याप्यग्नेः शान्तौ सेयं ज्योतिष्मतीष्टिर्भवेत् । कुतः । अग्न्युद्वानस्य निमित्तस्य सद्भावादिति चेन्मैवम् । अग्निहोत्रार्थोद्धृतस्यैवाग्नेरुद्वानं निमित्तमिति प्रकरणादवगम्यते । अनया चेष्ट्याऽग्निहोत्रार्थैवाग्निः पुनरुत्पाद्यते । तथा सत्यग्निहोत्रस्येयमिष्टिः सामवायिकमङ्गं भवति । अतोऽग्निहोत्रार्थोद्धृतोद्वानस्य निमित्तस्याभावान्नैमित्तिकीष्टिर्न प्रवर्तते ।

तत्रैवान्यच्चिन्तितम्—

" धार्योद्वाने साऽस्ति नो वा सर्वार्थत्वेन विद्यते ।
गतश्रीत्वनिमित्तं +तत्सर्वार्थत्वं न विद्यते " इति ॥

+ परार्थत्वादिति न्यायमालाविस्तरे ।

१ क. घ. ङ. च. °स्याद्वाहुत्या° ।

इदमाम्नायते—" धार्यो गतश्रिय आहवनीयः " इति । गतश्रीशब्दार्थस्त्वेवं श्रूयते—" त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यः " इति । औवों गौतमो भारद्वाज इति कल्पसूत्रकारः । गतश्रीभिर्धार्यमाणस्याऽऽहवनीयस्य सर्वकर्मार्थत्वे सत्यग्निहोत्रार्थत्वमप्यस्तीति तदुद्वाने सा ज्योतिष्मतीष्टिर्विधेयत इति चेन्मैवम् । न ह्यस्य धारणेऽग्निहोत्रं निमित्तं किंतु गतश्रीत्वम् । सर्वकर्मसमुदायस्य चोदनया कदाचिदप्यचोदितत्वात्सर्वार्थत्वं शङ्कितुमप्यशक्यम् । गतश्रीत्वं निमित्तीकृत्य धृतोऽग्निः प्रसङ्गात्सर्वकर्मसूपकुर्वन्नग्निहोत्रेऽप्युपकरोतीति चेत् । उपकरोतु नाम, नैतावता प्रायश्चित्तस्य निमित्तत्वं लभ्यते । अग्निहोत्रार्थमुद्धृतस्योद्वानं तन्निमित्तं, न चात्र तदस्ति । किंत्वन्यस्य यस्य कस्यचित्कर्मणोऽर्थे समुद्धृतस्य गतश्रीत्वनिमित्तं धारणं क्रियते । तस्मान्निमित्ताभावान्नास्ति सेष्टिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चत्वारिंशोऽनुवाकः ॥ ४० ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्ण. यजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ प्रथमाष्टके पञ्चमः प्रपाठकः ) ।

( तत्र प्रथमोऽनुवाकः ) ।

हरिः ॐ ।

देवासुराः संयत्ता आसन्ते देवा विजयमुपयन्तोऽग्नौ वामं वसु सं न्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति तदग्निर्न्यकामयत

तेनापाक्रामन्तद्देवा विजित्यावरुरुत्समाना अन्वायन्तदस्य सहसाऽदित्सन्त सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्र्वशीयत तत् (१) रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयꣳ सोऽग्निरब्रवीद्भाग्यसान्यथं व इदमिति पुनराधेयं ते केवलमित्यब्रुवन्नृध्नवत्खलु स इत्यब्रवीद्यो मद्देवत्यमग्निमादधाता इति तं पूषाऽधत्त तेन (२) पूषाऽऽर्ध्नोत्तस्मात्पौष्णाः पशव उच्यन्ते तं त्वष्टाऽधत्त तेन त्वष्टाऽऽर्ध्नोत्तस्मात्त्वाष्ट्राः पशव उच्यन्ते तं मनुराऽधत्त तेन मनुरार्ध्नोत्तस्मान्मानव्यः प्रजा उच्यन्ते तं धाताऽधत्त तेन धाताऽऽर्ध्नोत्संवत्सरो वै धाता तस्मात्संवत्सरं प्रजाः पशवोऽनु प्र जायन्ते य एवं पुनराधेयस्यर्द्धिं वेद (३) ऋध्नोत्येव योऽस्यैवं बन्धुतां वेद बन्धुमान्भवति भागधेयं वा अग्निराहित इच्छमानः प्रजां पशून्यजमानस्योप दोद्रावोद्वास्य पुनरा दधीत भागधेयेनैवैनꣳ समर्धयत्यथो शान्तिरेवास्यैषा पुनर्वस्वोरा दधीतैतद्वै पुनराधेयस्य नक्षत्रं यत्पुनर्वसू स्वायामेवैनं देवतायामाधाय ब्रह्मवर्चसी भवति दर्भैरा

दधात्ययातयामत्वाय दर्भैर्दधात्यद्भ्य एवैन-
मोषधीभ्योऽवरुध्याऽऽधत्ते पञ्चकपालः पुरो-
डाशो भवति पञ्च वा ऋतव ऋतुभ्य एवैन-
मवरुध्याऽऽधत्ते ( ४ ) ॥

( अशीयत तत्तेन वेद दर्भैः पञ्चविंशतिश्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ) ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
अध्वर्योः प्रकृतौ मन्त्राः प्रपाठकचतुष्टये ।
वर्णिताः पुनराधेयं पञ्चमाद्ये प्रवक्ष्यते ॥ २ ॥
आधानादूर्ध्वमेवैषा वक्तव्या पुनराहितिः ।
तथाऽप्यध्ययनस्यायं क्रमो वरवृतत्वतः ॥ ३ ॥
सरस्वती स्वपुत्राय तद्बुद्धिस्थे क्रमे वरम् ।
ददौ तेन क्रमेणैव पठन्त्यन्येऽपि पाठकाः ॥ ४ ॥
एकादशानुवाकाः स्युः पञ्चमेऽस्मिन्प्रपाठके ।
तत्राऽऽदौ पुनराधेयमनुवाकचतुष्टये ॥ ५ ॥
ततः षट्केऽग्न्युपस्थानं काम्ययाज्यास्तथाऽन्तिमे ।
विधीयतेऽनुवाकेऽस्मिन्नादिमे पुनराहितिः ॥ ६ ॥

उद्वास्य पुनरादधीतेति विधास्यति । तत्र पुनराधेयस्याग्निदेवतां विधातुमाग्नि-विषयमुपाख्यानमुदाहरन्प्रसङ्गाद्रजतस्य यज्ञे दक्षिणात्वं निषेधति—

**देवासुरा इति** । देवाश्चासुराश्च संयत्ता युद्धयुक्ताः । विजयं प्राप्नुवन्तो देवास्तदा तेभ्योऽसुरेभ्योऽपहृतं मणिमुक्तादिकं श्रेष्ठं वसु रक्षणायाग्नौ निक्षिप्तवन्तः। कथंचिदसुराणां विजये सत्येतद्धनमस्माकमापद्युपयुज्येतेति देवानामाशयः । तद्ध-

( पुनराधानम् )

नमग्निर्न्यकामयतेच्छां कृतवान्। तेन धनेन सहापाक्रामत्पलायनमकुरुत। देवाः पुण्यवशेनासुरान्विजित्य तद्धनमवरुरुत्समाना अवरोद्धुमिच्छावन्तोऽनु अग्नेः पश्चादायंस्तद्धनं बलात्कारेणाऽऽदातुमिच्छावन्तः। सोऽग्निररोदीद्रोदनं कृतवान्। प्रसङ्गाद्रुद्रशब्दस्य प्रवृत्तिनिमित्तं विधत्ते—यतो रोदनं कृतवांस्ततो रुद्रस्य रुद्रत्वम्। यदश्रु नेत्रात्सकाशाद्बिन्दुरशीयत भूमावपतत्तद्रजतं हिरण्यमभवद्रजतरूपं धनमभवत्। अत्र हिरण्यशब्दस्य धनसामान्यवाचित्वाद्रजतं हिरण्यमित्यविरुद्धम्। तस्याश्रुजत्वेन दक्षिणां प्रत्ययोग्यत्वात्तद्दाने संवत्सरादर्वागेतेद्गृहे किंचिद्रोदननिमित्तं भवति। तस्माद्बार्हिषि यज्ञे तन्न दद्यात्।

अग्निदेवतां पुनराधेये विदधाति—

**सोऽग्निरिति**। आदावसाधारणेन भागेन युक्तो भवानि, पश्चादिदं वसु युष्मभ्यं दास्यामीत्यग्निनोक्ता देवास्तवैतत्पुनराधेयमिति भागं ददुः। तेन तुष्टोऽग्निरिदमब्रवीद्यो मद्देवत्यं हविः कृत्वाऽग्निं पुनरादध्यात्स खलु समृद्धिमाप्निति। तस्मात्समृद्ध्यर्थं पुनराधेयं हविरग्निदैवतं कुर्यादित्यर्थः।

तामेव समृद्धिमुदाहरणेन स्पष्टयति—

**तं पूषेति**। पूषत्वष्टमनुसंवत्सराभिमानिधातृभिः पश्चादिसमृद्धिर्लब्धा।

समृद्धिवेदनं प्रशंसति—

**य एवमिति**। पूषादिरूपस्याग्निबन्धुसमूहस्य वेदनं प्रशंसति—

**योऽस्येति**। पुनराधेयं विधत्ते—

**भागधेयमिति**। प्रथमाधानेनाऽऽहितोऽग्निरसाधारणभागवाञ्छयाऽधिकोपद्रवं चकार, तच्छान्तिरनेन भवति। तस्मादुद्वासनेष्ट्या पूर्वाग्निमुद्वास्य पुनरप्यग्निमादध्यात्। इष्टिमुद्वासनं च सूत्रकारो दर्शयति—"आग्नेयमष्टापालं निर्वपेद्वैश्वानरं द्वादशकपालं वारुणं दशकपालमग्नयेऽप्सुमतेऽष्टाकपालं मैत्रं चरुमग्निमुद्वासयिष्यन्" इति। "पौर्णमासीमिष्ट्वा ज्वलतोऽग्निनुत्सृजाति" इति च।

कालं विधत्ते—

**पुनर्वस्वोरिति**। पुनरावर्तते वामं वस्वनयोरिति पुनर्वसू। ततो नक्षत्रात्मिका देवता स्वकीया।

पुनराधेयस्य प्रथमाधानविकृतित्वात्काष्ठैराधानप्राप्तावपोद्य दर्भान्विधत्ते—

१ ख. °गेव गृहे। २ ख. °वैव पुन°। ३ ख. अतो। ४ ख. °त्वादिध्मकाष्ठै°।

( पुनराधानसंबन्ध्यङ्गजातनिरूपणम् )

**दर्भैरिति** । अत्रापि काष्ठैराधाने गतसारत्वं स्यात् । अत एव सूत्रकार आह—

" आयतनेषु पुराणान्दर्भान्सꣳस्तीर्य भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति " इति ।

दर्भविधिमनूद्य प्रशंसति—

**दर्भैरिति** । इन्द्रो वृत्रमहन्नित्यादौ दार्शिकब्राह्मणे च दर्भाणामप्कार्यत्वाभिधानादब्रूपत्वमोषधिरूपत्वं च विस्पष्टम् ।

अस्मिन्पुनराहितेऽग्नौ कर्तव्याया इष्टेरग्निर्देवता पूर्वं विहिता । अथ द्रव्यं विधत्ते—

**पञ्चकपाल इति** । बहूवृचब्राह्मणे द्वादश मासाः पञ्चवर्तवो हेमन्तशिशिरयोः समासेनेत्याम्नानादृतूनां पञ्चसंख्या ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ) ।

**परा वा एष यज्ञं पशून्वपति योऽग्निमुद्वासयते पञ्चकपालः पुरोडाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्पङ्क्त्यो याज्यानुवाक्या भवन्ति पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो देवानेव वीरं निरवदायाग्निं पुनरा ( १ ) धत्ते शताक्षरा भवन्ति शतायुः**

---

१ ख. °त्रापीध्मका° ।

पुरुषः श्रुतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति यद्वा अग्निराहितो नर्ध्यते ज्यायो भागधेयं निकामयमानो यदाग्नेयꣳ सर्वं भवति सैवास्यर्द्धिः सं वा एतस्य गृहे वाक्सृज्यते योऽग्निमुद्वासयते स वाचꣳ सꣳसृष्टां यजमान ईश्वरोऽनु पराभवितोर्विभक्तयो भवन्ति वाचो विधृत्यै यजमानस्यापराभावाय ( २ ) विभक्तिं करोति ब्रह्मैव तदकरुपाꣳशु यजति यथा वामं वसु विविदानो गूहति तादृगेवं तदाग्निं प्रति स्विष्टकृतं निराह यथा वामं वसु विविदानः प्रकाशं जिगमिषति तादृगेव तद्विभक्तिमुक्त्वा प्रयाजेन वषट्करोत्यायतनादेव नैति यजमानो वै पुरोडाशः पशव एते आहुती यदभितः पुरोडाशमेते आहुती ( ३ ) जुहोति यजमानमेवोभयतः पशुभिः परि गृह्णाति कृतयजुः संभृतसंभार इत्याहुर्न संभृत्याः संभारा न यजुः कर्तव्यमित्यथो खलु संभृत्या एव संभाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वान्पुनराधेयस्य समृद्ध्यै सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति यत्रयत्रैवास्य न्यक्तं ततः ( ४ ) एवैनमव रुन्धे वीरहा वा

( पुनराधानसंबन्ध्यङ्गजातनिरूपणम् )

एष देवानां योऽग्निर्मुद्वासयते तस्य वरुण एवर्ण-
यादाग्निवारुणमेकादशकपालमनु निर्वपेद्यं चैवं
हन्ति यश्चास्यर्णयात्तौ भागधेयेन प्रीणाति
नाऽऽर्तिमार्च्छति यजमानः ( ५ ) ॥

( आऽपराभावाय पुरोडाशमेते आहुती ततः षट्त्रिंशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ) ।

द्वितीयानुवाके याज्याद्यङ्गजातं विधित्सुः पूर्वोक्तं द्रव्यविधमनूद्य प्रशंसति-

**परा वा इति** । परावपति विनाशयति । धानादिभिर्हविर्भिर्यज्ञः पाङ्क्तः । पङ्क्तिच्छन्दसः पशुहेतुत्वात्पशवोऽपि पाङ्क्ताः ।

याज्यानुवाक्ये विधत्ते-

**वीरहेति** । देवानां मध्ये वीरोऽग्निः । तद्वधकारिणो यजमानस्यान्नमृतायवः सत्यमिच्छन्तो ब्राह्मणाः पुरा नैवाक्षन्नैव भुक्तवन्तः । "अश भोजने" इत्यस्य रूपम् । अग्ने तमद्याश्वं न इत्यादयश्चतस्र ऋचः पङ्क्तयः । तासु प्रधानहविषो द्वे स्विष्टकृतो द्वे । ताश्चाग्निकाण्डे-अग्निर्मूर्धेत्यनुवाक इष्टकोपधानार्थत्वेनाऽऽम्नाताः। इह तु वाचनिकस्तद्विधिः । शाखान्तरे तु याज्याप्रस्तावे समाम्नाताः । पुरुषस्य हस्तद्वयपादद्वयशिरोभिः पञ्चभिः पाङ्क्तत्वम् । देवानेव देवानामेव मध्ये वीरमग्निं निरवदायोत्सर्जनलक्षणवधभयान्निष्कृष्य ।

चतसृष्वृक्षु विद्यमानाक्षरसंख्यां प्रशंसति-

**शताक्षरा इति** । अग्ने तमद्येत्येषा प्रथमा चतुर्विंशत्यक्षरा । अधा ह्यग्ने क्रतोः, आभिष्टे अद्येत्युभयोरेकैका पञ्चविंशत्यक्षरा । एभिर्नो अर्कैरित्यन्त्या षड्विंशत्यक्षरेति संभूय शतमक्षराणि । अण्डाभिमानिनो ब्रह्मणः स्वप्रमाणेन शतसंवत्सरायुष्ट्वात्तत्संततिपतितस्यापि सामान्येन शतायुष्ट्वं, धर्माधर्माभ्यां तूत्कर्षापकर्षौ भवतः । शतनाडीषु संचाराद्दशेन्द्रियेषु शतसंख्या ।

१ क. ख. घ. ङ. °तस्रोऽक्षरप° । २ ख. °योद्वासन° ।

( पुनराधानसंबन्ध्यङ्गजातनिरूपणम् )

प्रधानकर्मण इव प्रयाजाज्यभागाद्यङ्गानामप्याग्नेयत्वं विधत्ते—

**यद्वा इति** । यजमानस्य समृद्ध्यभावादग्नेः समृद्ध्यभावोऽनुमेयः ।

समिधो अग्न आज्यस्य वियन्त्वित्यादिषु चतुर्षु प्रयाजमन्त्रेषु संबुद्ध्यन्तादग्निशब्दात्पूर्वं संबुद्धिसप्तमीतृतीयाद्वितीयाविभक्त्यन्तानामग्निशब्दानां क्रमेण प्रयोगं विधत्ते—

**सं वा इति** । अग्निमुद्वासयितुरेतस्य वाग्गृहेऽवस्थितानां स्त्रीशूद्रादीनां वाग्भिः संसृज्यते तत्समा भवति । तां वाचमनु यजमानोऽपीतरवैलक्षण्यरूपस्योत्कर्षस्याभावात्पराभूतो भवति । एताभिस्तु विभक्तिभिः पुनराधेयस्याग्न्याधेयाद्वैलक्षण्ये सति यजमानस्य विलक्षणत्वेन वाग्विधृतौ सत्यां पराभवः शाम्यति । विभक्तयः सूत्रे दर्शिताः—" अग्नेऽग्नेऽग्नावग्नेऽग्निनाऽग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति " इति । तथा चैवं मन्त्रपाठः संपद्यते—" समिधोऽग्नेऽग्न आज्यस्य वियन्तु । तनूनपादग्नावग्न आज्यस्य वेतु । इडो अग्निनाऽग्न आज्यस्य वियन्तु । बर्हिरग्निमग्न आज्यस्य वेतु " इति ।

यथोक्तविभक्तिविधिमनूद्य प्रशंसति—

**विभक्तिमिति** । तत्पुनराधेयं ब्रह्मैवाग्न्याधेयात्परिवृढमेव करोति ।

अत्र मन्त्राणां नीचध्वनिं विधत्ते—

**उपाꣳश्विति** । यथा लोके श्रेष्ठं वसु लब्धवान्पुरुषो गोपायति तद्वत् ।

स्विष्टकृत्युच्चध्वनिं विधत्ते—

**अग्निं प्रतीति** । निराह निःशेषध्वनिं कुर्यात् । यथा लोके श्रेष्ठं वसु लब्धवान्द्रव्यपतिः प्रसिद्धिं गन्तुमिच्छति तद्वत् ।

पूर्वं विहितानां विभक्तीनां प्रयाजमन्त्रसंबन्धं विधत्ते—

**विभक्तिमिति** । विभक्तिवचनप्रकारो दर्शितः । तदुक्तिसहितेन प्रयाजमन्त्रेण वषट्कारपूर्वं यजेत । तथा सति पूर्वोक्तवाक्संसर्गकृतपराभवरहित आयतनात्स्वगृहान्नैति न निर्गच्छति, किंतु स्वगृहे प्रतितिष्ठति ।

पुनरूर्जा निवर्तस्व, सह रय्या निवर्तस्वेत्याभ्यां मन्त्राभ्यामाग्नेयपुरोडाशस्याधस्तादुपरिष्टाच्चाऽऽहुतिद्वयं विधत्ते—

---

१ क. घ. ङ. च. °णश्च प्र° । २ क. घ. ङ. च. अग्नाग्ने° । ३ क. घ. ङ. च. °धोऽआग्न ।

यजमानो वा इति। अत्र चोदकप्राप्तान्संभारानाधानमन्त्रांश्च वाजसनेयादिशाखान्तरमनुसृत्य पूर्वपक्षरूपेण निराचष्टे—

कृतयजुरिति। यजुःशब्देन सर्पराज्ञीप्रभृतय आधानमन्त्रा विवक्षिताः। संभारशब्देन सिकतोषादिसप्तमृद्विशेषाः सप्त विवक्षिताः। प्रथमाधाने यजुषामुच्चारितत्वात्संभाराणां च संपादितत्वादस्यापि कर्मविशेषस्याऽऽधानादत्यन्तभेदाभावेन यजुःसंभारयोः सिद्धत्वात्तदुभयं पुनर्न कर्तव्यमिति पूर्वः पक्षः। प्रथमाधाने वाजसनेयिमतं सूत्रकार उदाजहार—"सप्त पार्थिवान्संभारानाहरत्येवं वानस्पत्यान्पञ्च पञ्च वा भूयसो वा पार्थिवान्संभारान्संभरेदिति वाजसनेयकम्" इति।

सिद्धान्तमाह—

अथो खल्विति। अथोशब्दः पूर्वपक्षव्यावृत्त्यर्थः। अत्र सूत्रकारः पक्षद्वयमुदाजहार—"कृताकृताः संभारा यजूंषि च भवन्त्यपि वा पञ्च पार्थिवान्संभारानाहरत्येवं वानस्पत्यान्" इति।

दक्षिणां विधत्ते—

पुनर्निष्कृत इति। भग्नः संन्दृढीकृतः पुनर्निष्कृतः। छिन्नं सत्सूचीतन्तुभ्यां स्यूतं पुनरुत्स्यूतम्। दौर्बल्येन भारं वोढुमशक्ततया परित्यक्तः संन्कथंचित्पोषणेन शक्तीकृतः पुनरुत्सृष्टः।

तूष्णीमेव होतव्यमिति प्रथमाधानस्यामन्त्रत्वेन यदग्निहोत्रं विहितं तदत्र चोदकप्राप्तं तदपोद्य समन्त्रकं विधत्ते—

सप्त ते इति। मन्त्रस्तूपरिष्टाद्व्याख्यास्यते। अत्र(स्य) पुनराधेयदेवस्याग्नेर्यद्यदङ्गं यस्मिन्यस्मिन्प्रदेशे न्यक्तं निमग्नं विस्मृतं तत एव प्रदेशात्साङ्गमेनमग्निं संपादयति।

अनुनिर्वाप्यं हविर्विधत्ते—

वीरहेति। ऋणिनमिव यांतयति पीडयतीत्यृणयात्। तौ वध्याभिपीडयितृवरुणौ तोषयति।

---

१ ख. °शेषाश्च वि°। २ ख. सन्पुनर्दृढी°। ३ ख. °तः। एतादृशो रथो दक्षिणेति सर्वत्र योजनीयम्। छि°। ४ ख. सन्केनचि°। ५ ख. °न पुनः श°। ६ क. घ. ङ. च. याती°।

( पुनराधानमन्त्राः )

अथ मीमांसा ।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

" एकादिना समुच्चेयं पुनर्निष्कृत इत्यदः ।
बाधकं वा समुच्चेयमुभयीरित्युदीरणात् ॥
आधानदक्षिणोपेतमुभयीरित्यनूद्यते ।
ददातीत्यविधायित्वात्कार्यैक्याद्बाधकं भवेत् " इति ॥

आधाने विकल्पिता गोद्रव्यदक्षिणा द्रव्यान्तरदक्षिणाश्च बह्वयः श्रूयन्ते—"एका देया षड्देया द्वादश देयाः" इत्यादिना । पुनराधेये तु पुनर्निष्कृतो रथ इत्यादि श्रुतम् । भग्नः सन्पुनः समाहितः पुनर्निष्कृतः । सेयं पुनर्निष्कृतादिदक्षिणा किमतिदिष्टयैकादिदक्षिणया समुच्चीयत उत तां बाधत इति संशयः । उभयीर्दक्षिणा ददात्याग्न्याधेयिकीः पौनराधेयिकीश्चेत्युक्तत्वात्समुच्चय इति पूर्वः पक्षः । ददातीति वर्तमाननिर्देशस्य विधित्वाभावादाधानकाले पूर्वं दत्तं पुनराधानकाले दीयमानं च मिलित्वोभयीरित्यनूद्यते । दक्षिणात्वरूपस्य कार्यस्यैकत्वादुपदिष्टमतिदिष्टस्य बाधकम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः)।

भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽदधे । आऽयं गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः । त्रिꣳशद्धाम वि राजति वाक्पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः । अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषः सुवः । यस्त्वा (१)

( पुनराधनमन्त्राः )

क्रुद्धः परोवर्प मन्युना यदवर्त्या । सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि । यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे । आदित्या विश्वे तद्देवा वसवश्च समाभरन् । मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् । सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त (२) ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन । पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा । पुनर्नः पाहि विश्वतः । सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि । लेकः सलेकः सुलेकस्ते न आदित्या आज्यं जुषाणा वियन्तु केतः सकेतः सुकेतस्ते न आदित्या आज्यं जुषाणा वियन्तु विवस्वाꣳ अदितिर्देवजूतिस्ते न आदित्या आज्यं जुषाणा वियन्तु (३) ॥

( त्वा जिह्वाः सप्त सुकेतस्ते नत्रयोदश च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ) ।

प्रथमद्वितीययोः पुनराधेयस्य प्रधानविधिस्तदङ्गानि च निरूपितानि । तृतीये त्वाधानमन्त्रा आम्नायन्ते ।

( पुनराधानमन्त्राः )

कल्पः—“ भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति यत्त्वा क्रुद्धः परोवपेति दक्षिणाग्निं यत्ते मन्युपरोप्तस्येतीतरान् ” इति ।

आहवनीयसभ्यावसथ्यानित्यर्थः । त एते षण्मन्त्राः ।

तत्र प्रथम एवं पठ्यते—

**भूमिर्भूम्नेति** । हे गार्हपत्यप्रदेश त्वं लोकत्रयात्मकोऽसि । तत्र भूम्ना बाहुल्येन भूमिरसि । वरिणा वरिम्णा श्रेष्ठत्वेन द्यौरसि । महित्वा महत्त्वेनान्तरिक्षमसि । हेऽदिते भूमे तत्प्रदेशरूपे देवि तवोत्सङ्गेऽन्नभोक्तारं गार्हपत्याग्निं यजमानस्यादनयोग्यान्नसिद्ध्यर्थमादधे ।

अथ द्वितीयः—

**आऽयं गौरिति** । अयं गार्हपत्य आदित्यरूपेण गौर्गमनशीलः पृश्निः श्वेतवर्णो जगदाक्रमीत् । आक्रमणप्रकार एव स्पष्टी क्रियते—पुनर्मातरं पृथिवीमसनदासीदत्प्राप्नोदित्यर्थः । सुवः स्वर्गरूपं पितरं च प्रयन्प्रकर्षेण गच्छन्नवस्थितः। द्यौः पिता पृथिवी मातेति श्रुत्यन्तरात्तयोर्मातापितृत्वम् ।

अथ तृतीयः—

**त्रिꣳशद्धामेति** । आदित्यरूपस्य गार्हपत्यस्य संबन्धि त्रिंशत्संख्याकं धाम मुहूर्तरूपं तेजो विशेषेण राजते । अह्नः पञ्चदश मुहूर्ता रात्रेः पञ्चदश । किंच वैदिकस्तुतिरूपा वाक्पतङ्गाय पक्षिवदाकाशसंचारिणमादित्यं शिश्रिय आश्रितवतीत्यर्थः । अत एवान्यत्राऽऽम्नायते—“ ऋग्भिः पूर्वाह्णे दिवि देव ईयते ” इत्यादि । हे तादृग्गार्हपत्य त्वां प्रति यदस्माभिरुद्वासनरूपं प्रतिकूलमाचरितं तत्सर्वमस्य प्रतिक्षिप मनसि मा कृथाः। द्युभिर्ज्वालारूपाभिर्वहास्मदीयं हविर्देवेषु प्रापय।

अथ चतुर्थः—

**अस्य प्राणादिति**। अस्याऽऽदित्यस्य रोचना दीप्तिः प्राणादुच्छ्वाससदृशादुदयादपानती निःश्वासतुल्यमस्तमयं गच्छन्ती द्यावापृथिव्योरन्तश्चरति । महति मण्डले सीदतीति महिष आदित्यः सुवः स्वर्गं व्यख्यद्यजमानेभ्यः प्रकाशितवान्। आदित्यरूपेण स्तूयमान हे गार्हपत्य त्वामादधामीत्यभिप्रायः ।

अथ पञ्चमः—

**यत्त्वा क्रुद्ध इति** । हे दक्षिणाग्ने क्रुद्धः कोपपराधीनोऽहं तेन मन्युना त्वां

---

१ क. घ. ङ. च. °ते—पुनः पु° ।

परोवप। उवपेति लिङ्वुत्तमपुरुषः। परोप्तवानुद्वासितवानस्मीति यद्यच्चावर्त्यां समृद्ध्य-भावलक्षणेन दारिद्र्येणोद्वासितवानस्मीति हेऽग्ने तव प्रसादात्तत्सुकल्पं सुष्ठु कृत-मस्तु। पुनरपि त्वां वयमुद्दीपयामः।

अथ षष्ठः—

**यत्त इति**। हे आहवनीय मदीयकोपेनोद्वासितस्य तव यत्तेजः पृथिवीमनु-प्रविश्य ध्वस्तं तत्तेज आदित्यादयः समाहरन्तु।

कल्पः—"मनो ज्योतिर्जुषतामिति बृहस्पतिवत्यर्चोपतिष्ठते" इति।

पाठस्तु—

**मनो ज्योतिरिति**। उद्वासनापराधपरिहाराय मनो माननीयमग्नेर्ज्योतिर्हव्य-माज्यं सेवताम्। विच्छिन्नमिमं यज्ञं संदधातु। बृहस्पतिरस्माकमिमं यज्ञं विस्तीर्णं करोतु। सर्वेऽपि देवा इह कर्मणि मादयन्तां तृप्तियुक्ता भवन्तु।

कल्पः—"सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति" इति।

पाठस्तु—

**सप्त ते अग्न इति**। हेऽग्ने तव समिधः सप्तसंख्याका अश्वत्थोदुम्बरपला-शशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः। अत एव सूत्रकारो, यथोक्तान्संभा-रान्समन्त्रकाननुक्रम्य, इति वानस्पत्या इत्युपसंजहार। ज्वालारूपा जिह्वाश्च सप्त। तथा चाऽऽथर्वणिका आमनन्ति—

"काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः"॥

[ मुण्ड० १-२-४ ] इति।

ऋषयो मन्त्राः। ते च यथोक्तसमित्संपादनार्थाः सप्तसंख्याका अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठ इत्यादयः समाम्नाताः। प्रियाणि धाम स्थानान्याहवनी-यगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजहिताग्नीध्रियाख्यानि( णि ) सोमयागे वह्निधारकाणि सप्तसंख्याकानि। होत्रा होतृप्रमुखा वषट्कर्तारो होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्चेति सप्तसंख्याकाः। त्वां यजमानाः सप्तधा यजन्ति। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपे-यश्चेति सप्त प्रकाराः। तादृशस्त्वं सप्त योनीराहवनीयादिस्थानानि घृतेन सर्वतः पूरय।

( पुनराधानमन्त्राः )

कल्पः—“ पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति पुनरूर्जेति वा पुरस्तात्प्रयाजानां सह रय्येत्युपरिष्टादनूयाजानाम् ” इति ।

प्रथममन्त्रपाठस्तु—

**पुनरूर्जेति** । हेऽग्ने त्वं मयोद्वासितोऽप्यूर्जा क्षीरादिरसेन सह पुनर्निवर्तस्वात्राऽऽगच्छ । इषाऽन्नेनाऽऽयुषा च सह पुनरागच्छ । अस्मान्पुनः पुनः कृताद्विश्वतः सर्वस्मादंहसः पाहि ।

द्वितीयमन्त्रपाठस्तु—

**सह रय्येति** । हेऽग्ने रय्या धनेन सह निवर्तस्व । प्सा भक्षण इति धातुः । विश्वेन प्सायते भक्ष्यते पीयत इति विश्वप्स्नी । तादृश्या वृष्टिधारया विश्वतस्परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च ।

कल्पः—“ यस्तृतीयमादधीत स एतान्होमाञ्जुहुयाल्लेकः सलेक इति ” इति ।

मन्त्रत्रयपाठस्तु—

**लेकः सलेक इति** । नवसंख्याका लेकादिनामका य आदित्यास्ते सर्वे जुषाणाः प्रीयमाणा अस्माकमाज्यं वियन्तु पिबन्तु ।

अत्र विनियोगसंग्रहः—

“ चतुर्भिर्भूमिरित्याद्यैरादध्यात्पश्चिमानलम् ।
दक्षिणाग्निं तु यस्त्वेति यदित्याहवनीयकम् ॥ १ ॥
मनस्तूपस्थितिः सप्त जुहुयादग्निहोत्रकम् ।
पुनर्द्वाभ्यां पुरोडाशमभितो जुहुयादथ ॥ २ ॥
तृतीयमादधानस्य लेकाद्या होममन्त्रकाः ॥ ३ ॥ ” इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ) ।

**भूमिर्भूम्ना द्यौर्व॒रि॒णेत्या॑हा॒ऽऽशिषै॒वैन॒मा ध॑त्ते स॒र्पा वै जी॒र्यन्तो॑ऽमन्यन्त॒ स ए॒तं क॑स-**

र्णाङ्गिरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णा-
स्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमा
दधाति पुनर्नवमेवैनमजरं कृत्वाऽऽ धत्तेऽथो
पूतमेव पृथिवीमन्नाद्यं नोपानमत्सैतम् ( १ )
मन्त्रमपश्यत्ततो वै तामन्नाद्यमुपानमद्यत्सर्परा-
ज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरु-
द्ध्या अथो अस्यामेवैनं प्रतिष्ठितमा धत्ते य-
त्त्वा क्रुद्धः परोवपेत्याहापह्नुत एवास्मै तत्पुन-
स्त्वोद्दीपयामसीत्याह समिन्ध एवैनं यत्ते मन्यु-
परोप्तस्येत्याह देवताभिरेव ( २ ) एनꣳ सं
भरति वि वा एतस्य यज्ञश्छिद्यते योऽग्निमु-
द्वासयते बृहस्पतिर्वत्सचोप तिष्ठते ब्रह्म वै
देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति
विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह संतत्यै
विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं
देवेभ्योऽनु दिशति सप्त ते अग्ने समिधः सप्त
जिह्वाः (३) इत्याह सप्तसप्त वै सप्तधाऽग्नेः
प्रियास्तनुवस्ता एवाव रुन्धे पुनरूर्जा सह
रय्येत्यभितः पुरोडाशमाहुती जुहोति यजमा-
नमेवोर्जा च रय्या चोभयतः परि गृह्णात्या-
दित्या वा अस्माल्लोकादमुं लोकमायन्तेऽमु-
ष्मिँल्लोके व्यतृष्यन्त इमं लोकं पुनरभ्यवेत्या-
ग्निमाधायैतान्होमानजुहवुस्त आर्ध्नुवन्ते सुवर्गं

( पूर्वानुवाकोक्तमन्त्रव्याख्यानम् )

लोकमायन्यः पराचीनं पुनराधेयादग्निमाद-
धीत स एतान्होमाञ्जुहुयाद्यामेवाऽऽदित्या
ऋद्धिमाध्नुवन्तामेवर्ध्नोति ( ४ ) ॥

( सैतं देवताभिरेव जिह्वा एतान्पञ्चविꣳशतिश्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्र-
पाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ) ।

चतुर्थानुवाके पूर्वोक्ता मन्त्रा व्याख्यायन्ते । तत्रान्नाद्यायेत्येतस्य मन्त्रपद-
स्याभिप्रायमाह—

**भूमिर्भूम्नेति** । आशिषाऽन्नं प्राप्तुमिच्छया ।

चतसृभिर्ऋग्भिराधानं विधत्ते—

**सर्पा वा इति** । जीर्यन्तो जरां प्राप्नुवन्तोऽमन्यन्त कोऽस्या जरायाः प्रती-
कार इति विचारितवन्तः । तदा कसर्णीरनामकः कद्रूपुत्रो भूमिरित्यादिकं मन्त्र-
संघमपश्यत् । तन्मन्त्रसामर्थ्यात्ते सर्पा जीर्णाः शरीरत्वचोऽपहत्य कोमलास्त्वचः
प्राप्नुवन् । सर्पाणां राज्ञी भूमिः । इयं वै सर्पतो राज्ञीत्यन्यत्राऽऽम्नानात् । तस्या
ऋचो भूमिर्भूम्नेत्यादयस्ताभिराहितो वह्निर्जरां परित्यज्य नूतनः पूतश्च भवति ।

तमेव विधिमनूद्य प्रशंसति—

**पृथिवीमिति** । अन्नाद्यायेत्युक्तत्वात्तत्प्राप्तिः । उपस्थे ते देवीत्युक्तत्वा-
द्भूमौ प्रतिष्ठितत्वम् ।

यदाह( दहं )परोवप तत्सुकल्पमित्युक्तिर्बालस्येवाग्नेः सान्त्वनायापलाप
इत्याह—**यत्त्वा क्रुद्ध इति** ।

उद्दीपयामसीत्यस्याभिप्रायमाह—**पुनस्त्वेति** ।

आदित्या विश्वे तदित्यादेरभिप्रायमाह—**यत्त इति** ।

उपस्थानं विधत्ते—

---

१ ख. °त्युक्तेर्बा° ।

(पूर्वानुवाकोक्तमन्त्रव्याख्यानम्)

वि वा इति। बृहस्पतिशब्दोऽस्यामस्तीति बृहस्पतिमती।

तं शब्दं प्रशस्य संदधात्विति शब्दस्याभिप्रायमाह—त्रिष्टुभामिति।

देवसंबोधनस्योपयोगमाह—

विश्वे देवा इति। यज्ञं संततं कृत्वा देवेभ्यस्तत्कथनाय संबोधनम्।

समिदादिषु सप्तसंख्याया उपयोगमाह—

सप्त ते इति। समिदादयः सर्वे पदार्थाः प्रत्येकं सप्त सप्त विनिर्दिश्यन्ते। यस्मात्सप्तधाऽवस्थिताः पदार्था अग्नेः प्रियास्तनुवस्तस्मात्तदवरोधाय सप्तसंख्या।

द्वितीयानुवाके विहितयोराहुत्योर्मन्त्रौ विनियुङ्क्ते—पुनरूर्जेति।

तृतीयाधाने होमान्विधत्ते—

आदित्या वा इति। आदित्या आधानपुनराधाने अनुष्ठाय सुवर्गं गत्वा तत्र व्यतृष्यन्विशेषेण तृषां प्राप्ताः। समृद्धिर्न पर्याप्तेति मत्वा भूमावागत्य लेकादिमन्त्रैर्हुत्वाऽतिशयेन समृद्धिं गताः। ततः पुनराधेयादूर्ध्वमग्निमाधाय लेकादिभिर्जुहुयात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

(अथ प्रथमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः)।

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आरे अस्मे च शृण्वते। अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः। पयः सहस्रसामृषिम्। अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति। अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे। उभा वामिन्द्राग्नी आहुवध्यै (१)

( अग्न्युपस्थानम् )

उभा राधसः सह मादयध्यै। उभा दातारा-
विषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम्।
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः।
तं जानन्नग्न आ रोहाथा नो वर्धया रयिम् ।
अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः।
आरे बाधस्व दुच्छुनाम्। अग्ने पवस्व स्वपा
अस्मे वर्चः सुवीर्यम्। दधत्पोषꣳ रयिम् (२)
मयि। अग्ने पावक रोचिषा मन्द्रया देव
जिह्वया। आ देवान्वक्षि यक्षि च । स नः
पावक दीदिवोऽग्ने देवाꣳ इहाऽऽ वह । उप
यज्ञꣳ हविश्च नः।अग्निः शुचिव्रततमः शुचि-
र्विप्रः शुचिः कविः। शुची रोचत आहुतः ।
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते। तव
ज्योतीꣳष्यर्चयः। आयुर्दा अग्नेऽस्यायुर्मे (३)
देहि वर्चोदा अग्नेऽसि वर्चो मे देहि तनूपा
अग्नेऽसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनं
तन्म आ पृण चित्रावसो स्वस्ति ते पारम-
शीयेन्धानास्त्वा शतꣳ हिमा द्युमन्तः समि-
धीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यश-
स्कृतꣳ सुवीरासो अदाभ्यम्। अग्ने सपत्नद-
म्भनं वर्षिष्ठे अधि नाके। सं त्वमग्ने सूर्यस्य
वर्चसाऽगथाः समृषीणाꣳ स्तुतेन सं प्रियेण

( गार्हपत्याहवनीययोरुपस्थानम् )

धाम्ना । त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज (४) ॥

( आहुवध्यै पोषꣳ रयिं मे वर्चसा सप्तदश च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ) ।

चतुर्भिरनुवाकैः पुनराधानं समापितम् । अथ पञ्चममारभ्य दशमस्य पूर्वार्धपर्यन्तैरनुवाकैरग्न्युपस्थानमुच्यते ।

कल्पः—"अग्न्युपस्थानं व्याख्यास्याम उपतिष्ठत इति चोद्यमान आहवनीयमेवोपतिष्ठेत वचनादन्यमुत्तरामाहुतिमुपोत्थाय कवातिर्यङ्ङिवोपतिष्ठेतोपप्रयन्तो अध्वरमिति षड्भिः" इति ।

तत्र प्रथमा—

**उपप्रयन्त इति** । अध्वरं यज्ञमुपप्रयन्तः प्राप्नुवन्तो वयमग्नयेऽग्निसंतोषार्थमुपस्थानमन्त्रं वोचेम वक्तारो भूयास्म । कीदृशायाग्नये । दूरादप्यनुग्रहेणास्मदीयं वचः शृण्वते ।

अथ द्वितीया—

**अस्य प्रत्नामिति** । अस्याग्नेः प्रत्नां पुरातनीमनुद्युतमनुकूलदीप्तिं गोस्थानीयामहयो लज्जामकुर्वन्त ऋत्विजः पयः क्षीरस्थानीयं शुक्रं ज्योतिर्दुदुह्रे दुहन्ति । कीदृशं शुक्रम् । सहस्रसां बहुधनप्रदमृषिं कर्मप्रवर्तकम् ।

अथ तृतीया—

**अग्निर्मूर्धेति** । अयमग्निरादित्यरूपेण दिवो द्युलोकस्य ककुदुच्छ्रितो मूर्धा शिरस्थानीयः । पृथिव्याः पतिर्दाहपाकादिकारित्वेन पालकोऽप्ययम् । किंच—अपां रेतांसि उदककार्याणि स्थावरजङ्गमशरीराणि जठराग्निरूपेण जिन्वति प्रीणयति ।

अथ चतुर्थी—

---

१ ख. °ष्ठेतेति व° । २ ख. °दन्यामा° ।

( अग्न्युपस्थानम् )

**अयमिहेति** । अयमग्निरिह कर्मणि प्रथमः प्रधानभूतो धातृभिर्धारणाय प्रयतमानैरस्माभिर्धायि धार्यते । कीदृशोऽग्निः । होता देवानामाह्वाता यजिष्ठो मनुष्येभ्योऽतिशयेन यष्टाऽध्वरेषु यागेषु ईड्यः स्तुत्यः । किंच—अप्नवानसंज्ञको[1] भृगुसंज्ञकाश्च मुनयो वनेषु स्वाश्रमेषु विशेविशे तत्तत्प्रजाभ्युदयार्थं यमग्निं चित्रं बहुयागाधारत्वेन विचित्रं विभुवं व्याप्तं विरुरुचुर्विशेषेण दीपितवन्तः ।

अथ पञ्चमी—

**उभा वामिति** । इयं च प्रथमप्रपाठके व्याख्याता । हे इन्द्राग्नी युवामुभावप्याभिमुख्येन होतुमिच्छामि । पुनरपि युवामुभौ सह राधसोऽन्नेन मादयितुमिच्छामि । यस्माद्युवामुभावन्नानां धनानां च दातारौ तस्मादन्नस्य लाभाय युवामुभावाह्वयामि ।

अथ षष्ठी—

**अयं त इति** । हेऽग्नेऽयमाहवनीयप्रदेशस्ते योनिस्तव स्थानम् । स च योनिर्ऋत्विय ऋतुसंबन्धात्सर्वस्मिन्नप्यृतावनेन[2] होमनिष्पत्तेः । यत आहवनीयप्रदेशाज्जात उद्भूतस्त्वमरोचथा दीप्यसे तं प्रदेशं जानन्मम स्थानमित्यवगच्छन्नारोह । अनन्तरमस्माकं धनं वर्धय ।

कल्पः—“ अग्न आयूꣳषि पवस इति षड्भिः संवत्सरे संवत्सरे सदा वा ” इति ।

उपतिष्ठत इति शेषः । एतास्त्वमग्ने रुद्र इत्यत्र व्याख्याताः ।

तत्र प्रथमा—

**अग्न आयूꣳषीति** । हेऽग्ने त्वमस्मदायूंषि पवसे शोधयसि निर्दोषाणि करोषि । अस्माकं रसमन्नं चाऽऽनय, वैरिसेनां दुरे बाधस्व ।

अथ द्वितीया—

**अग्ने पवस्वेति** । हेऽग्ने स्वपाः शोभनकर्मा त्वमस्मासु ब्रह्मवर्चसं समीचीनसामर्थ्यं च पवस्व शोधय । किं कुर्वन् । पुष्टिं धनं च मयि धारयन् ।

अथ तृतीया—

हे पावकाग्ने देव रोचमानया मादयित्र्या जिह्वया देवानावक्षि[4] यक्षि च ।

अथ चतुर्थी—

---

१ ख. च. ज्ञका भृ° । २ ख. °बन्धः, सर्व° । ३ क. घ. ङ. च. °ति सं । ४ ख. °वह य° ।

**स न इति** । हे पावकाग्ने दीदिवो दीप्यमानः स त्वं देवानिहाऽऽनय । अस्मदीयं यज्ञं हविश्चोपगच्छ ।

अथ पञ्चमी–

**अग्निः शुचीति** । अयमग्निरतिशुद्धव्रतयुक्तः, विप्राभिमानित्वादपि शुचिः, विद्वदभिमानित्वादपि शुचिः, अस्माभिः सर्वत्राऽऽहुतः शुद्धो दीप्यते ।

अथ षष्ठी–

**उदग्न इति** । हेऽग्ने तव शुचयः शुद्धाः शुक्रा रश्मयो भ्राजन्तो दीप्यमाना उद्गच्छन्ति । अर्चयितारस्तव ज्योतींषि प्राप्नुवन्तीति शेषः ।

कल्पः–"आयुर्दा अग्न इति सिद्ध्मा चित्रावसो[2] स्वस्तीति चित्रावसुना सायमुपतिष्ठते " इति ।

पाठस्तु–

**आयुर्दा इति** । आपूरयेत्यर्थः । चतुर्ष्वेतेषु यजुःषु स्पष्टमन्यत् ।

अथ यजुरन्तरम्–

**चित्रावसो इति** । हे चित्रावसो रात्रे तव पारं समाशिं स्वस्ति क्षेमेण प्राप्नवानि ।

कल्पः[3]–" त्रिरर्वाग्वसुना प्रातरर्वाग्वसो स्वस्ति ते पारमशीयेन्धानास्त्वा शतꣳ हिमा इत्युपस्थाय " इति ।

अर्वागित्यादिः शाखान्तरमन्त्रः ।

अत्रत्यमन्त्रपाठस्तु–

**इन्धानास्त्वेति** । हेऽग्ने त्वां समिद्भिरिन्धाना वयं शतसंख्याकान्हेमन्तोपलक्षितसंवत्सरान्द्युमन्तो दीप्तिमन्तः समिधीमहि लोके सम्यक्प्रख्याता भूयास्म । कीदृशं त्वां, वयस्कृतमन्नस्य कर्तारम् । यशस्कृतं कीर्तिप्रदम् । अदाभ्यं केनाप्यतिरस्कार्यम् । वर्षिष्ठेऽधिनाकेऽतिप्रौढस्वर्गविषये सपत्नदम्भनं विरोधिविनाशनम् । कीदृशा वयं, वयस्वन्तोऽन्नवन्तः । यशस्वन्तः कीर्तिमन्तः । सुवीरासः शोभनपुत्रादियुक्ताः ।

कल्पः–" चतस्रः समिध एकैकस्मिन्नाधाय सं त्वमग्ने सूर्यस्य वर्चसाऽगथा इत्यनुवाकशेषेणोपस्थाय " इति ।

पाठस्तु–

१ ख. हे शोधका° । २ क. °सोस्त्रिश्चित्रा° । ३ ख. °ल्पः—अर्वा° ।

( अग्न्युपस्थानम् )

**सं त्वमग्न इति।** हेऽग्ने त्वं सूर्यस्य वर्चसा तेजसा समगथाः संगतोऽसि। ऋषीणां स्तोत्रेण संगतोऽसि। प्रियेण स्थानेनाऽऽहवनीयदेशलक्षणेन संगतोऽसि। हेऽग्ने त्वं सूर्यसमानतेजा असि। मामायुरादिभिः संयोजय।

अत्र विनियोगसंग्रहः—

" पूर्वस्याग्नेरुपस्थानमुपप्रेत्यनुवाकतः॥ १॥ " इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

———

( अथ प्रथमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः )।

**सं पश्यामि प्रजा अहमिडप्रजसो मानवीः। सर्वा भवन्तु नो गृहे। अम्भः स्थाम्भो वो भक्षीय महः स्थ महो वो भक्षीय सहः स्थ सहो वो भक्षीयोर्जः स्थोर्जं वो भक्षीय रेवती रमध्वमस्मिँल्लोकेऽस्मिन्गोष्ठेऽस्मिन्क्षयेऽस्मिन्योनाविहैव स्तेतो माऽप गात बह्वीर्मे भूयास्त(१) सꣳहिताऽसि विश्वरूपीरा मोर्जा विशाऽऽ गौपत्येनाऽऽ रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्ताम्। उप त्वाऽग्ने दिवेदिवे दोषावस्तर्धिया वयम्। नमो भरन्त एमसि। राजन्तमध्वराणां गोपामृतस्य दीदिविम्। वर्धमानꣳ स्वे दमे। स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये। अग्ने (२) त्वं नो अन्तमः। उत त्राता**

ावो भव वरूथ्यः। तं त्वा शोचिष्ठ दीदिवः।
म्नाय नूनमीमहे सखिभ्यः ः। वसुरग्निर्वसु-
-वाः। अच्छा नक्षि द्युमत्तमो रयिं दाः।
ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण
वः पश्यामि रायस्पोषेण मा पश्यतेडाः स्थ
मधुकृतः स्योना माऽऽ विशतेरा मदः। सह-
स्रपोषं वः पुष्यासम् (३) मयि वो रायः
श्रयन्ताम्। तत्सवितुर्वरेण्यं भर्गो देवस्य
धीमहि। धियो यो नः प्रचोदयात्। सोमा-
नꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य
औशिजम्। कदा चन स्तरीरसि नेन्द्र सश्चसि
दाशुषे। उपोपेन्नु मघवन्भूय इन्नु ते दानं
देवस्य पृच्यते। परि त्वाऽग्ने पुरं वयं विप्रꣳ
सहस्य धीमहि। धृषद्वर्णं दिवेदिवे भेत्तारं
भङ्गुरावतः। अग्ने गृहपते सुगृहपतिरहं
त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं
गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमा
शासे तन्तवे ज्योतिष्मतीं तामाशिषमा शासेऽ-
मुष्मै ज्योतिष्मतीम् (४)॥

( भूयास्त स्वस्तयेऽग्ने पुष्यासं धषद्वर्णमेकान्नत्रिꣳ शच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
पञ्चमप्रपाठके षष्ठोऽनुवाकः॥ ६॥

( गार्हपत्याहवनीययोरुपस्थानम् )

( अथ प्रथमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः )।

षष्ठेऽनुवाके गार्हपत्यस्य पुनरप्याहवनीयस्य चोपस्थानं सपरिकरमभिधीयते ।

कल्पः—" सं पश्यामि प्रजा अहमिति गृहान्प्रेक्षते " इति ।

पाठस्तु—

**सं पश्यामीति** । अहं मनुष्यप्रजा इडप्रजसश्च सम्यक्पश्यामि । इडा धेनुस्तस्याः प्रजा अपत्यानीडप्रजसो मनुष्यरूपाश्च सर्वाः प्रजा अस्माकं गृहे तिष्ठन्तु ।

कल्पः—" अम्भः स्थाम्भो वो भक्षीयेति गोष्ठमुपतिष्ठते " इति ।

पाठस्तु—

**अम्भः स्थेति** । अम्भः पीतोदकसारं महः पूज्यं सर्वैरादरणीयं सहो बलकरमूर्जं स्वादुतमरसरूपं यत्क्षीरादि तत्कारणत्वेन हे पशवस्तद्रूपाः स्थ ततो युष्मदीयं तत्क्षीरादिकमस्माकं भक्ष्यमस्तु ।

कल्पः—" रेवती रमध्वमित्यन्तराऽग्नी तिष्ठञ्जपति " इति ।

पाठस्तु—

**रेवतीरिति** । हे रेवतीः पशवोऽस्मिन्भूलोके गोष्ठे व्रजविशेषे क्षये गृहविशेषे योनौ स्थानविशेषे रमध्वं क्रीडध्वम् । इहैव योनौ स्त सर्वदा तिष्ठत। इतः स्थानान्माऽपगात माऽपगच्छत । मे मदर्थमपत्यपरम्परया बह्वो भूयास्त ।

कल्पः—" सꣳहिताऽसि विश्वरूपीरिति वत्समभिमृशति " इति ।

पाठस्तु—

**सꣳहिताऽसीति**। हे वत्स त्वं संहिताऽसि मात्रा संयुक्तोऽसि । विश्वरूपीरादरेण स्तनं पातुं वामतो दक्षिणतश्च पुनः पुनर्धावन्बहुरूपवदवभाससे । तादृक्त्वमूर्जा क्षीरादिरसनिमित्तेन मामाविश मत्समीपमागच्छ गौपत्येन मदीयं बहुपशुस्वामित्वं निमित्तीकृत्य मामाविश रायस्पोषेण धनपुष्टिनिमित्तेनापि मामाविश । सहस्रसंख्यया पुष्टिर्यथा भवति तथा युष्मान्पुष्यासम् । मयि युष्मदीयानि क्षीरादिधनान्याश्रयन्ताम् ।

कल्पः—" उप त्वाऽग्ने दिवेदिव इति तिसृभिर्गायत्रीभिर्गार्हपत्यमुपातिष्ठतेऽग्ने त्वं नो अन्तम इति चतसृभिश्च द्विपदाभिः स नो बोधि श्रुधी हवमुरुष्याणो अघायतः समस्मादित्येषा चतुर्थी भवति " इति ।

तत्र प्रथमा गायत्री—

( गार्हपत्याहवनीययोरुपस्थानम् )

उप त्वेति । हेऽग्ने प्रतिदिनं वयं त्वामुपेमसि उपगच्छामः । किं कुर्वन्तः । दोषावस्तः सायं प्रातश्च धिया नमो भरन्तो नमस्कारं संपादयन्तः ।

अथ द्वितीया—

**राजन्तमिति** । कीदृशं त्वाम् । अध्वराणां राजन्तं यज्ञराजं, गोपां गवां पालकम्, ऋतस्य दीदिविं सत्येन द्योतमानं, स्वे दमे स्वकीयेऽग्निहोत्रगृहे हविर्भिर्वर्धमानम् ।

अथ तृतीया—

**स न इति** । हेऽग्ने स तादृशस्त्वं नोऽस्मदर्थं सूपायनः प्राप्तुं शक्यो भव । यथा पुत्रार्थं पिता सूपायनस्तद्वदस्माकं स्वस्तये क्षेमाय सचस्व समवेतो भव ।

अथ प्रथमा द्विपदा—

**अग्ने त्वामिति** । हेऽग्ने त्वं नोऽस्माकमन्तमोऽन्तिकतमो भव । उतापि च त्राता शिवश्च सन्वरूथ्यो वरूथे गृहे नित्यं संनिहितो भव ।

अथ द्वितीया—

**तं त्वेति** । हे वह्ने शोचिष्ठ दीदिवः शुद्धतम दीप्यमान सखिभ्यः सखीनामस्माकं सुम्नाय सुखाय नूनं तं पूर्वोक्तगुणयुक्तं त्वामीमहे प्राप्नुमः ।

अथ तृतीया—

**वसुरग्निरिति** । वसुर्वसुमानयमग्निर्वसुरुद्रादिदेवैरादरेणैव श्रूयत इति वसुश्रवाः । हे तादृगग्नेऽच्छास्मदभिमुखो नक्षि प्राप्नुहि । द्युमत्तमोऽतिशयेन दीप्यमानो रयिं दा धनं देहि । चतुर्थी तु शाखान्तरगता ।

कल्पः—" ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति गृहान्प्रेक्षते पशून्वा " इति ।

पाठस्तु—

**ऊर्जा व इति** । हे गृहगताः पशवः क्षीरादिरसनिमित्तेन धनपुष्टिनिमित्तेन [च] युष्मानहं पश्यामि । यूयमपि तथा मां पश्यत । हे इडा गावो यूयं मधुकृतो मधुरघृतकारिण्यः स्थ । स्योनाः सुखकरा इरा अन्नवत्यो मदो मादयित्र्यो मामाविशत । सहस्रसंख्यया पुष्टिर्यथा भवति तथा युष्मान्पुष्यासम् । युष्माकं धनानि क्षीरादीनि मयि श्रयन्ताम् ।

कल्पः—" तत्सवितुर्वरेण्यꣳ सोमानꣳ स्वरणं मित्रस्य चर्षणीधृतः प्र स मित्र कदा चन स्तरीरसि कदा चन प्रयुच्छसि परि त्वाऽग्ने पुरं वयमित्युपस्थाय " इति । आहवनीयमिति लभ्यते ।

( गार्हपत्याहवनीययोरुपस्थानम् )

तत्र प्रथमैवमाम्नाता—

**तत्सवितुरिति** । यः सविताऽस्माकं बुद्धीः प्रेरयति तस्य सवितुर्देवस्य वरणीयं तद्भर्गस्तेजो ध्यायेम ।

अथ द्वितीया—

**सोमानमिति** । ब्रह्मणः परिवृढस्य कर्मणः पते स्वामिन्नग्ने यस्त्वामौशिजमुशिजः पुत्रं कक्षीवन्तमृषिं कर्मप्रवर्तकं कृतवानसीत्यध्याहारः । तादृशस्त्वं मामपि सोमानं सोमयागानां स्वरणमुपदेष्टारं कुरु । मित्रस्य प्र स मित्रेति द्वयं नात्राऽऽम्नातम् ।

अथ पञ्चमी—

**कदा चनेति** । हे इन्द्र परमैश्वर्ययुक्ताग्ने कदाचिदपि स्तरीर्हिंसको नासि । किंतु दाशुषे हविर्दत्तवते यजमानार्थमुपोपेन्नु अत्यन्तसमीप एव सश्चसि समवेतोऽसि । हे मघवन्निन्द्रसदृशाग्ने भूय इन्नु पुनरपि देवस्य ते तव दानं पृच्यते फलदानार्थमस्माभिः संयुज्यते । कदा चन प्रयुच्छसीत्येषाऽन्यत्राऽऽम्नाता ।

अथ सप्तमी—

**परि त्वेति** । सहसि बले भवः सहस्यः । हे सहस्य बलवन्नग्ने वयं त्वां प्रतिदिनं परिधीमहि परितो धारयाम। कीदृशं त्वाम् । पुरमभिमतानां पूरक, विप्रं ब्राह्मणाभिमानिनं, धृषद्वर्णं वैरिणम् । धृषन्नभिभवन्वर्ण आकारो यस्य तादृशम् । भङ्गुरावतो भञ्जनशीलव्यापारोपेतस्य रक्षसो भत्तारम् ।

कल्पः—"अग्न आयूंषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति च पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्यामुष्मा इति जातस्य" इति ।

आग्निपावमान्यौ त्वन्यत्राऽऽम्नाते ।

मन्त्रान्तरपाठस्तु—

**अग्न इति** । हे गृहपालकाग्ने गृहपतिना त्वयाऽनुगृहीतोऽहं शोभनो गृहपतिर्भूयासम् । तथा गृहपतिना मया पूजितस्त्वं गृहस्वामी भूयाः । कियन्तं कालम् । शतं हिमाः । हिमशब्दोपलक्षितहेमन्तर्तुसहिताञ्शतसंवत्सरान् । अहं तन्तव उत्पत्स्यमानपुत्रसंतानाय ज्योतिष्मतीं ब्रह्मवर्चसयुक्तां तामाशिषमायुरारोग्यैश्वर्याभिवृद्धिरूपामाशासे । एवममुष्मै जाताय देवदत्तादिनाम्ने ।

१ ख. °दाग्न° । २ ख. °ति पु° ।

अत्र विनियोगसंग्रहः—

"सं प प्रेक्ष्य गृहानम्भः स्थ गोष्ठमुपतिष्ठते ।
रेवान्तराऽग्नी जपति संहिता वत्सकं स्पृशेत् ॥ १ ॥
उप त्वा पश्चिमं वह्निं षण्मन्त्रैरुपतिष्ठते ।
ऊर्जा प्रेक्ष्य गृहांस्तत्सचतुर्भिः पूर्वपावकम् ।
उपस्थायाग्न इत्यस्मात्पश्चिमं चोपतिष्ठते ॥ २ ॥" इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके
षष्ठोऽनुवाकः ॥ ६ ॥

———

( अथ प्रथमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ) ।

अयंज्ञो वा एष योऽसामोपप्रयन्तो अध्वर-
मित्याह स्तोममेवास्मै युनक्त्युपेत्याह प्रजा
वै पशव उपेमं लोकं प्रजामेव पशूनिमं लोक-
मुपैत्यस्य प्रत्नामनु द्युतमित्याह सुवर्गो वै
लोकः प्रत्नः सुवर्गमेव लोकꣳ समारोहत्यग्नि-
र्मूर्धा दिवः ककुदित्याह मूर्धानम् ( १ ) एवै-
नꣳ समानानां करोत्यथो देवलोकादेव मनु-
ष्यलोके प्रति तिष्ठत्ययमिह प्रथमो धायि
धातृभिरित्याह मुख्यमेवैनं करोत्युभा वामि-
न्द्राग्नी आहुवध्या इत्याहौजो बलमेवाव
रुन्धेऽयं ते योनिर्ऋत्विय इत्याह पशवो वै
रयिः पशूनेवाव रुन्धे षड्भिरुप तिष्ठते षड् वै
( २ ) ऋतव ऋतुष्वेव प्रति तिष्ठति षड्भि-

( पञ्चमानुवाकोक्तमन्त्रव्याख्यानम् )

रुत्तराभिरुप तिष्ठते द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निपावमानीभिरुप तिष्ठते पुनर्नवमेवैनमजरं करोत्यथो पुनात्येवोप तिष्ठते योगं एवास्यैष उप तिष्ठते (३) दम एवास्यैष उप तिष्ठते याच्ञैवास्यैषोप तिष्ठते यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति तादृगेव तदायुर्दा अग्नेऽस्यायुर्मे देहीत्याहाऽऽयुर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाहीत्याह ( ४ ) तनूपा ह्येषोऽग्ने यन्मे तनुवा ऊनं तन्म आ पृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आ पूरयेति वावैतदाह चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसुरव्युष्ट्यै वा एतस्यै पुरा ब्राह्मणा अभैषुर्व्युष्टिमेवाव रुन्ध इन्धानास्त्वा शतम् ( ५ ) हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्येषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्र हरति स्तृत्या अच्छं*म्बट्कारꣳ सं त्वमग्ने सूर्यस्य वर्चसाऽ-

* अछम्बट्कारमिति वैदिकपाठः।

**गथा इत्याहैतत्त्वमसीदमहं भूयासमिति वावै-
तदाह त्वमंग्ने सूर्यवर्चा असीत्याहाऽऽशिषमे-
वैतामाशास्ते ( ६ ) ॥**

( मूर्धानꣳ षड्वा एष उप तिष्ठते पाहीत्याह शतमहꣳ षोडश च ) ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥**

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ) ।

सप्तमेऽनुवाके पञ्चमानुवाकोक्ता मन्त्रा व्याख्यायन्ते । उपप्रेत्यादिमन्त्रसंघोपस्थानेन ज्योतिष्टोमे त्रिवृत्पञ्चदशादिस्तोमवदग्निहोत्रेऽपि स्तोमयोग उपचर्यत इत्याह—

**अयज्ञो वा इति** । यः सामरहितः स यज्ञ एव न भवति । ऋग्भेदादावृत्तिभेदाच्च निष्पन्नः सामसंघः स्तोमः । तं चास्मिन्नग्निहोत्रे मन्त्रसंघेन संपादयति ।

उपशब्दसूचितं दर्शयति—

**उपेत्याहेति** । प्रजाः पशवश्च भूर्लोकमुपगच्छन्ति । तस्माद्यजमानोऽप्युपशब्दसामर्थ्यात्प्रजां पशूंश्चोपेत्य तद्युक्तं भूर्लोकमुपैति ।

प्रत्नशब्दसूचितमाह—

**अस्य प्रत्नामिति** । स्वर्गलोकस्य चिरंतनत्वेन प्रत्नशब्दसूचितत्वात्तेन शब्देन स्वर्गारोहो भवति ।

मूर्धशब्दपृथिवीशब्दाभ्यां सूचितं दर्शयति—

**अग्निर्मूर्धेति** । मूर्धानं श्रेष्ठमेनं यजमानं समानानां समानजातीयानां मध्ये करोति । अपि च देवलोकादागत्य मनुष्यलोक एव प्रतिष्ठितो भवतीत्यर्थः ।

प्रथमशब्दसूचितं दर्शयति—**अयमिहेति** ।

इन्द्रस्य बलाभिमानित्वादग्नेश्च तेजोभिमानित्वाच्छब्दद्वयेनोभयप्राप्तिः सूच्यत इत्याह—**उभा वामिति** ।

मन्त्रगतं रयिशब्दं व्याचष्टे—**अयं ते योनिरिति** ।

( पञ्चमानुवाकोक्तमन्त्रव्याख्यानम् )

पूर्वोत्तरषट्काभ्यां प्रतिदिनमुपस्थानं विधत्ते—

**षड्भिरुपतिष्ठत इति**। उपप्रयन्त इत्यादिकं पूर्वषट्कम्। अग्न आयूंषीत्यादिकमुत्तरषट्कम्।

पूर्वषट्केन यथा प्रतिदिनमुपस्थानं तद्वदुत्तरेणापि प्राप्ते कालविशेषं विधत्ते—

**यथा वै पुरुष इति**। पुरुषादीनां चिरकालेनेवाग्नेः संवत्सरे प्राप्तां जरां निवार्य नूतनशरीरं शोधयितुं संवत्सरादूर्ध्वमुपस्थानम्। अग्निदेवतायाः पवमानदेवतायाश्च संबन्धिन्य ऋच आग्निपावमान्यः। यद्यप्यग्निरेव शोधकत्वात्पवमानस्तथाऽपि शोधकत्वोपाधेरन्यत्वमभिप्रेत्य निर्देशभेदः।

विहितमुपस्थानं चतुर्वारमनूद्य प्रशंसति—

**उपतिष्ठत इति**। उपतिष्ठत इति यदेष एवास्याग्नेर्योगो यजमानेन सहानुग्राह्यानुग्राहकरूपः संबन्धः। तथा दमो दाहादिलक्षणोपद्रवनिवारणम्। तथा धनादियाच्ञा। किंच—यथा लोके कश्चिद्दरिद्रो धनिकाय किंचिदुपायनमानीय नमस्कारं करोति तादृगिदमुपस्थानम्। अयमिह प्रथमो धायि धातृभिरिति योग उक्तः। आरे बाधस्व दुच्छुनामिति अनिष्टनिवारणम्। अथानो वर्धया रयिमिति याच्ञा। मन्त्रं वोचेमाग्नय इत्युपायनम्।

त्रयाणां यजुषामर्थप्रसिद्धिं दर्शयति—**आयुर्दा इति**।

तनुशब्देन प्रजा पशवश्चोपलक्षिता इत्यभिप्रेत्य व्याचष्टे—**अग्ने यन्म इति**।

चित्रावसुपदस्यार्थं वाक्यतात्पर्यं च दर्शयति—

**चित्रावसो इति**। नक्षत्रादिरूपं चित्रमभिव्यक्ततया वसत्यस्यामिति रात्रिश्चित्रावसुः। अव्युष्टिः प्रभातान्तः। हेमन्ततौ रात्रेर्दीर्घत्वेन प्रभातं न भविष्यत्येवेति कदाचिद्ब्राह्मणा भीता अतः पारमशीयेति प्रार्थनया प्रभातं लभते।

शतसंख्यां प्रशंसति—

**इन्धाना इति**। अस्य मन्त्रस्योपस्थाने समिदाधाने च विनियोगद्वयं सूत्रकार उदाजहार—" इन्धानास्त्वा शतꣳ हिमा इत्युपस्थायेन्धानास्त्वा शतꣳ हिमा अग्नेः समिदस्यभिशस्त्या मा पाहि सोमस्य समिदसि परस्याम एधि यमस्य समिदसि मृत्योर्मा पाहीति चतस्रः समिध एकैकस्मिन्नाधाय " इति। तत्रोपस्थानाङ्गप्रस्तावेन मन्त्रो व्याख्यातः।

१ ख. °ले देहो यथा जीर्यति तथाऽग्नेः। २ क. घ. ङ. °थाऽर्थवादि°। ३ ख. °निष्ठाय। ४ क. ध. ङ. च. °र्थसि°। ५ ख. °रस्वा मा पाहि य°। ६ ख. °ङ्गत्वप्र°।

अथ तस्यैव समिदाधानाङ्गत्वं विधत्ते--

**एषा वा इति** । ज्वलन्ती लोहमयी स्थूणा सूर्मी । सा च कर्णकावती छिद्रवती । अन्तरपि ज्वलन्तीत्यर्थः । तत्समानेयमृक् । एकेन प्रहारेण शतसंख्याकान्मारयन्तः शूराः शततर्हाः । असुराणां मध्ये तादृशानेतयर्चा देवा हिंसन्ति । अनया समिदाधानेन शतघ्नीमेनामृचं वज्रं कृत्वा वैरिणं हन्तुं प्रहरति । अच्छम्बट्कारं स्वस्य विनाशो यथा न भवति तथेत्यर्थः । स्तृत्यै नाशाभावेन विस्तीर्णताया इत्यर्थः ।

सं त्वमग्न इत्यर्धेनाग्नेर्गुणकथनं स्वस्यापि तत्प्रार्थनायेत्याह—**सं त्वमग्न इति** ।

द्वितीयार्धे सं मामायुषेति प्रार्थनमिति दर्शयति—**त्वमग्न इति** ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ) ।

सं पश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानानेवाव रुन्धेऽम्भः स्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महः स्थ महो वो भक्षीयेत्याह महो ह्येता सहः स्थ सहो वो भक्षीयेत्याह सहो ह्येता ऊर्जः स्थोर्जं वो भक्षीयेति ( १ ) आहोर्जो ह्येता रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवाऽऽत्मन्रमयत इहैव स्तेतो माऽप गातेत्याह ध्रुवा एवैना अनपगाः कुरुत इष्टकचिद्वा अन्योऽग्निः पशुचिदन्यः सꣳहिताऽसि विश्वरूपीरिति वत्समभि मृशत्युपैवैनं धत्ते पशुचितमेनं कुरुते प्र ( २ )

---

१ क. ङ. च. अछम्ब° ।

( षष्ठानुवाकोक्तमन्त्रव्याख्यानम् )

वा एषोऽस्माल्लोकाच्च्यवते य आहवनीयमुपतिष्ठते गार्हपत्यमुप तिष्ठतेऽस्मिन्नेव लोके प्रति तिष्ठत्यथो गार्हपत्यायैव नि ह्नुते गायत्रीभिरुप तिष्ठते तेजो वै गायत्री तेज एवाऽऽत्मन्धत्तेऽथो यदेतं तृचमन्वाह संतत्यै गार्हपत्यं वा अनु द्विपादो वीराः प्र जायन्ते य एवं विद्वान्द्विपदाभिर्गार्हपत्यमुपतिष्ठते ( ३ ) आऽस्य वीरो जायत ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्याहाऽऽशिषमेवैतामा शास्ते तत्सवितुर्वरेण्यमित्याह प्रसूत्यै सोमानꣳ स्वरणमित्याह सोमपीथमेवाव रुन्धे कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुन्धे कदा चन स्तरीरसीत्याह न स्तरीꣳ रात्रिं वसति ( ४ ) य एवं विद्वानग्निमुपतिष्ठते परि त्वाऽग्ने पुरं वयमित्याह परिधिमेवैतं परि दधात्यस्कन्दायाग्ने गृहपत इत्याह यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात्तेज एवास्मिन्ब्रह्मवर्चसं दधाति ( ५ ) ॥

( षष्ठानुवाकोक्तमन्त्रव्याख्यानम् )

( ऊर्जं वो भक्षीयेति प्र गार्हपत्यमुपतिष्ठते वसति ज्योतिष्मतीमेकान्नत्रिꣳशच्च ) ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥**

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ) ।

अष्टमेऽनुवाके षष्ठानुवाकोक्ता मन्त्रा व्याख्यायन्ते । तत्रेडप्रजस इत्यनेन पदेन गवाश्वादयो विवक्षिता इत्यभिप्रेत्याऽऽह—**सं पश्यामीति** ।

अम्भोमहःसहऊर्जशब्दैर्गवामुपलक्षणं युक्तमित्याह—**अम्भ इति** ।

रेवतीशब्देन विवक्षितं क्षीरादिधनमासामस्तीति व्युत्पत्तिमभिप्रेत्य व्याचष्टे—**रेवतीरिति** । आत्मन्स्वकीयगृह इत्यर्थः ।

स्तेत्यनेन ध्रुवजीवनं माऽप गातेत्यनेन वियोगाभावश्च प्रार्थ्यत इत्याह—**इहेवेति** ।

वत्सस्पर्शं विधत्ते—

**इष्टकचिदिति** । इष्टकामुपधाय यथा कश्चिदग्निश्चीयते तथा पशुमुपधायान्योऽग्निश्चीयत इत्युत्प्रेक्षते । तथा सति वत्सस्पर्शेन पशुमुपधायाग्निश्चितो भवति ।

गार्हपत्योपस्थानं विधत्ते—

**प्र वा एष इति** । "सुवर्गो लोक आहवनीयः" इति श्रुत्यन्तरात्तदुपस्थानादेतल्लोकप्रच्युतिः । सा च गार्हपत्योपस्थानेन समाधीयते । किंचाऽऽहवनीय एव तात्पर्योपेतं गार्हपत्यमुपतिष्ठमानः स्वप्रतिष्ठासिद्ध्यर्थं केवलं तमपलपति ।

उप त्वाऽग्न इत्याद्यास्तिस्र ऋचो विधत्ते—

**गायत्रीभिरिति** । प्रजापतिमुखादग्निना सहोत्पन्नत्वाद्गायत्र्यास्तेजस्त्वम् । तृचानुवचनमविच्छेदार्थम् ।

अग्ने त्वं न इत्याद्यास्तिस्रो द्विपदा विधत्ते—**गार्हपत्यामिति** ।

पश्यतेति लोडाशीरर्थत्वं दर्शयति—**ऊर्जा व इति** ।

सवितृसोमब्रह्मशब्दानामभिप्रायमाह—**तत्सवितुरिति** ।

स्तरीरसि नेति निषेधस्याभिप्रायमाह—

**कदा चनेति** । अन्धकारयुक्ता रात्रिश्चोरवृश्चिकादिबाधयुक्ततया स्तरीरित्युच्यते । विद्वानुपस्थाता तादृशीं रात्रिं नाधिवसति, किंतु सुखकरीमित्यर्थः ।

---

१ क. घ. ङ. वत्से स्पर्शं ।

( षष्ठानुवाकोक्तमन्त्रव्याख्यानम् )

परि धीमहीतिलिङ्गान्मन्त्र एवाग्नेरस्कन्दनार्थः परिधिरित्याह—**परि त्वाऽग्न इति**।

मन्त्रस्य स्पष्टार्थतां दर्शयति—**अग्ने गृहपत इति**।

हिमशब्दो हेमन्तवाचीत्याह—**शतꣳ हिमा इति**।

तन्तवेऽमुष्मा इत्यत्र नामग्रहणं विधत्ते—

**पुत्रस्य नामेति**। एनं पुत्रम्।

अनुत्पन्नपुत्रविषयस्तन्तुशब्द उत्पन्नपुत्रविषयोऽदःशब्द इति व्यवस्थां दर्शयति—**तामाशिषमाशास इति**।

अथ मीमांसा।

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

"ऐन्द्र्योपस्थीयतां वह्निरितीन्द्राग्न्योर्विकल्पनम्।
समुच्चयो वोत शक्र एकोऽग्निः केवलोऽथवा॥
विकल्पः श्रुतिलिङ्गाभ्यां गुणावृत्त्या समुच्चयः।
श्रुतिः शक्त्यनुसारेति शक्र एकोऽत्र लिङ्गतः॥
शक्तिरुक्ता श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकम्।
नैराकाङ्क्ष्यात्मके बाधे श्रुत्याऽग्नौ केवले स्थितिः" इति॥

"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रूयते। "कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यसावृगैन्द्री। तत्रेन्द्रस्य प्रकाशनात्। हे इन्द्र त्वं कदाचिदपि घातको न भवासि किंत्वाहुतिं दत्तवते यजमानाय प्रयिस इत्यर्थः। तत्रेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गान्मन्त्रस्येन्द्रविषयक्रियासाधनत्वं गम्यते। यद्यसौ मन्त्र इन्द्रप्रधानकक्रियायाः साधनं न भवेत्तदानीमनेन मन्त्रेणेन्द्रप्रकाशनं व्यर्थं स्यात्। तस्मादेतन्मन्त्रकरणकक्रियां प्रतीन्द्रः प्रधानमित्येतादृशबुद्ध्युत्पादनं लिङ्गविनियोगः। काऽसौ क्रियेति विशेषजिज्ञासायामैन्द्र्योपतिष्ठत इत्यनेनाविरुद्धपदद्वयरूपेण वाक्येनोपस्थानक्रियायां पर्यवसानं क्रियते। तथा सत्यैन्द्रमन्त्रेणेन्द्रमुपतिष्ठत इत्ययमर्थः पर्यवस्यति। तथा गार्हपत्यमित्यनया द्वितीयान्तपदरूपया श्रुत्या गार्हपत्यस्य प्राधान्यं गम्यते। तच्च गुणभूतां यत्किंचित्करणकक्रियामन्तरेण न संभवति। ततस्तादृशीं कांचित्क्रियां प्रति गार्हपत्यप्राधान्यमित्येतादृश-

१ ख. °पत्यः प्रधानमि°।

बुद्ध्युत्पादनं श्रुतिविनियोगः। ऐन्द्र्योपतिष्ठत इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति। तथा सत्यैन्द्रेण मन्त्रेण गार्हपत्यमुपतिष्ठत इत्यर्थो भवति। तदेवं श्रुतिलिङ्गयोर्विरोधे सति प्रमाणत्वाविशेषाद्व्रीहियववद्विकल्प इत्येकः पूर्वपक्षः। इन्द्रगार्हपत्ययोः प्रधानत्वाविशेषादुपस्थानस्य गुणत्वात्प्रतिप्रधानं गुणावृत्तिरिति न्यायेनोपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चय इति द्वितीयः पूर्वपक्षः। श्रुतिर्विनियुञ्जाना वस्तुसामर्थ्यमनुसृत्यैव विनियुङ्क्ते। अन्यथा वह्निना सिञ्चेत्, वारिणा दहेदित्यपि विनियुज्येत। तत उपजीव्यत्वेन लिङ्गस्य प्रबलत्वादिन्द्र एव मन्त्रेणोपस्थेय इति तृतीयः पूर्वपक्षः। ऐन्द्रमन्त्रस्य गार्हपत्ये मुख्यवृत्त्या शक्त्यभावेऽपि गौणवृत्त्या शक्तिरस्तीति निवेशन इत्यस्मिन्नुदाहरणे पूर्वमेव दर्शितम्। तथा सति सामर्थ्याभावकृतप्रतिबन्धाभावान्निर्विघ्ना श्रुतिः शीघ्रं विनियुङ्क्ते। लिङ्गं तु विलम्बते। मन्त्रपदान्यादौ स्वाभिधेयमर्थं प्रतिपादयन्ति। तत ऊर्ध्वं मन्त्रस्य सामर्थ्यं निरूप्यते। पश्चात्सामर्थ्यवशात्साधनत्ववाचिनी प्राधान्यवाचिनी च श्रुतिः कल्पते[१]। सा च श्रुतिर्मन्त्रेणेन्द्रमुपतिष्ठेतेति विनियुङ्क्ते। तथा च प्रत्यक्षश्रुतौ स्वाभिधेयप्रतिपादनविनियोगयोर्मध्यवर्तिनौ सामर्थ्यनिरूपणश्रुतिकल्पनव्यापारौ न स्त इति प्राबल्यात्तया लिङ्गं बाध्यते। न च प्रत्यक्षश्रुतिविनियोगवेलायामलब्धात्मकत्वेनाप्राप्तं लिङ्गं कथं बाध्येतेति शङ्कनीयम्। भविष्यत्प्राप्तिप्रतिबन्धस्यैवात्र बाधत्वात्। श्रुत्या विनियुक्तस्य मन्त्रस्य पुनर्विनियोगाकाङ्क्षाया अनुदयाद्विनियोजकं लिङ्गं कथं प्राप्स्यति। तस्माद्गार्हपत्योपस्थाने मन्त्रः प्रत्यक्षश्रुत्या विनियुज्यते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः)।

अग्निहोत्रं जुहोति यदेव किं च यजमानस्य
स्वं तस्यैव तद्रेतः सिञ्चति प्रजनने प्रजननꣳ
हि वा अग्निरथौषधीरन्तगता दहति तास्ततो

---

१ क. ख. ध. ङ. कल्प्यते।

भूयाꣳसः प्र जायन्ते ब्रह्मायं जुहोति रेत एव तत्सिञ्चति प्रैव प्रातस्तनेन जनयति तद्रेतः सिक्तं न त्वष्ट्राऽविकृतं प्र जायते यावच्छो वै रेतसः सिक्तस्य (१) त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्र जायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुप तिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि वि करोति स प्रैव जायते श्वःश्वो भूयान्भवति य एवं विद्वानग्निमुपतिष्ठतेऽहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह ( २ ) रात्रिं प्राविशन्ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निꣳ स्तवाम स नः स्तुतः पशून्पुनर्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत्ते देवाः पशून्वित्त्वा कामाꣳ अकुर्वत य एवं विद्वानग्निमुपतिष्ठते पशुमान्भवति [ ३ ) आदित्यो वा अस्माल्लोकादमुं लोकमैत्सोऽमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यायत्स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽमन्यतेममेवाग्निꣳ स्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत्स एनꣳ स्तुतः सुवर्गं लोकमगमयद्यः [४] एवं विद्वानग्निमुपतिष्ठते सुवर्गमेव लोकमेति

( पूर्वोक्तोपस्थानस्थाग्निहोत्राङ्गताप्रदर्शनम् )

सर्वमायुरेत्यभि वा एषोऽग्नी आ रोहति य एनावुपतिष्ठते यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति नक्तमुप तिष्ठते न प्रातः सꣳ हि नक्तं व्रतानि सृज्यन्ते सह श्रेयाꣳश्च पापीयाꣳश्चाऽऽसाते ज्योतिर्वा अग्निस्तमो रात्रिर्यत् (५) नक्तमुपतिष्ठते ज्योतिषैव तमस्तरत्युपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वै (६) आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः प्रजापतिः पशूनसृजत ते सृष्ट्वा अहोरात्रे प्राविशन्ताञ्छन्दोभिरन्वविन्दद्यच्छन्दोभिरुपतिष्ठते स्वमेव तदन्विच्छति न तत्र जाम्यस्तीत्याहुर्योऽहरहरुपतिष्ठत इति यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ्विष्वङ्प्रजया पशुभिरेति कवातिर्यङ्ङिवोपतिष्ठते नैनं प्रत्योषति न विष्वङ्प्रजया पशुभिरेति ॥ ७ ॥

( सिक्तस्य सह भवति यो यत्खलु वै पशुभिस्त्रयोदश च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( पूर्वोक्तोपस्थानस्याग्निहोत्राङ्गप्रदर्शनम् )

( अथ प्रथमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः )।

नवमेऽनुवाके पूर्वोक्तोपस्थानस्याग्निहोत्राङ्गता प्रदर्श्यते । तत्र तावदग्निहोत्रं विधत्ते—

**अग्निहोत्रमिति**। वाक्यान्तरविहितेन पयोदधियवाग्वादिद्रव्येणाग्निहोत्र-नामकं होमं कुर्यात्। यजमानस्य क्षीरप्रभृतिकं यत्स्वमग्नौ हुतं न तद्विनश्यति किंतु तस्यैव यजमानस्य तत्स्वं भूत्वाऽवतिष्ठते।

तदवस्थानं दृष्टान्तेनोपपादयति—

**रेतः सिञ्चतीति**। यथा प्रजोत्पादके योनौ सिक्तं रेतोऽवतिष्ठते तथाऽग्नेः प्रजननरूपत्वात्तस्मिन्हुतमवतिष्ठते।

ननु वह्निसमीपे प्राप्तानां द्रव्याणां दाहः प्रत्यक्षेणोपलभ्यत इत्याशङ्क्याऽऽह-

**अथौषधीरिति**। यद्यपि घर्मकाले दावाग्निः स्वसमीपं प्राप्ता ओषधीर्दहति तथाऽपि दग्धास्ता ओषधयो वृष्टिकाले भूयस्यः प्रजायन्ते। तस्मात्प्रजननोऽग्निः। कालद्वयं विधत्ते—

**यत्सायमिति**। सायंकालीनहोमेन सेचनम्। प्रातःकालीनहोमेनोत्पादनम्।

विहितस्याग्निहोत्रस्याङ्गमुपस्थानं विधत्ते—

**रेतः सिक्तमिति**। लोके योनौ सिक्तं रेतो विश्वकर्मणा यदि न विक्रियेत तदा नैव प्रजोत्पत्तिरस्ति। स च त्वष्टा यावन्ति रूपाण्युद्दिश्य रेतो विविधं करोति तावन्त्युत्पद्यन्ते। अत्रापि यजमानो देवैरनुगृहीतस्त्वष्टा ततो विविधरूपकरणाय बह्वीभिरुपतिष्ठते। अयमुपस्थानकर्मविधिः। एतदनुवादेन षड्भिरुपतिष्ठत इत्यादिमन्त्रविधिः।

उपस्थानं प्रशंसति—

**स प्रैवेति**। उपस्थाता प्रजामुत्पाद्य प्रतिदिनमुत्तरोत्तरं धनादिभिर्वर्धते।

प्रकारान्तरेण प्रशंसति—

**अहर्देवानामिति**। वित्तं पूर्वलब्धं पशुरूपं धनं, वेद्यमतः परं लब्धुं योग्यं, तदुभयं देवद्रव्यमपहृत्य तेन सहासुरा रात्रिं प्राविशन्नन्धकारे क्वापि गताः। ततः पशुहीना वयमिति खिद्यन्तो देवा उपायमपश्यन्। रात्रावग्नेः प्रकाशाधिक्याद्रात्रिराग्नेयी। अग्नेः पशुस्वामित्वात्पशवोऽप्याग्नेयाः। स्तुतः सोऽग्निरेभ्यो देवार्थं रात्रेरध्याहृत्याहरभिलक्ष्य तान्पशून्निराजन्निरगमयत्। कामान्भोगान्।

पुनः प्रकारान्तरेण प्रशंसति—**आदित्यो वा इति**।

पुनरपि प्रकारान्तरेण प्रशंसति—

अभि वा इति । यजमानोऽहवनीयमाहवनीयमप्यग्निं य उपतिष्ठते एषोऽग्निं उभावप्यभ्या-रोहति स्ववशौ करोति । यथा लोके कश्चित्पूर्वमधमः सन्नेवं कामयतेऽहं विद्या-दिना श्रेष्ठ उत्तमं पदमभ्यारूढो भविष्यामीति तथाऽयं यजमान उपस्थानेन स्व-स्योत्तमं पदं करोति । तस्मादुपस्थानं प्रशस्तमित्यर्थः ।

अत्र केचित्प्रातराग्निर्नोपस्थेय इत्याहुः । अन्ये तु न कदाचिदप्युपस्थेय इति । सिद्धान्तिनस्तु सर्वदाऽप्युपस्थेय इति । तत्र प्रथमं पूर्वपक्षं दर्शयति—

नक्तमुपातिष्ठत इति । रात्रौ व्रतान्यनुष्ठेयानि कर्माणि संसृज्यन्ते संकी-र्णानि भवन्ति । अन्धकारे केन कथमनुष्ठितमिति न ज्ञायते । यथाशास्त्रमनुष्ठितो व्रतविशेषः श्रेयांस्तद्विपरीतश्चेत्पापीयान् । तावुभौ सहैव तिष्ठतः । तत्राग्नावुपस्थि-ते सत्यग्निना ज्योतिषा रात्रिप्रयुक्तं तमोदोषं तरति । तस्मान्नक्तमुपस्थेयः । अ-हनि तु तमोदोषाभावान्नोपस्थेय इत्येकः पूर्वपक्षः ।

द्वितीयपूर्वपक्षं विचारपुरःसरं दर्शयति—

उपस्थेय इति । प्लुतिर्विचारार्था । लोके मनुष्यायैव तावद्राज्ञे यः कोऽपि दरिद्रो यत्किंचिज्जम्बीरफलादिकमुपायनमाहृत्य ततः प्रतिदिनमेनं राजानं प्रति क्षेत्रधनादिकं यदि याचति तदा स याचकस्तं राजानं पीडयत्येव । तथा सति को नाम महाप्रभावान्देवान्प्रतिदिनं याचितुमर्हति । याच्ञारूपं चेदमुपस्थानम् । आयुर्दा अग्नेऽस्यायुर्मे देहीत्यादिमन्त्रेषु तत्प्रतीतेः । तस्मादग्निः कदाचिदपि नोपस्थेय इति द्वितीयः पूर्वपक्षः ।

सिद्धान्तं दर्शयति—

अथो खल्वाहुरिति । अथोशब्दः पूर्वपक्षव्यावृत्त्यर्थः । आशिषे वै स्वा-पेक्षितं सर्वमाशासितुमेव कं प्रजापतिसदृशं सर्वदेवात्मकमग्निं प्रति यजमानो यजत इत्यभिज्ञा आहुः । लोकेऽपि राजभिश्चित्तवृत्तिमविज्ञायाकाण्डे देहि देही-त्युक्ते सत्युपरोधो भवति । यदा तु प्रशंसया विनोदेन वा परितोषमुत्पाद्य याचते तदानीमुत्साहयुक्तो याचितादप्यत्यन्तमधिकमेव ददाति, तद्वदाशिषाग्नेर्मन्त्रैरुपस्था-नमेव याच्ञा । सा च बहुविधप्रशंसापूर्वकत्वान्नोपरोधाय भवति किंत्वत्यन्त-परितोषायैव । तस्मात्सायं प्रातश्च वह्निरुपस्थेय एव ।

ऋग्भिरुपस्थानं प्रशंसति—

( प्रवत्स्यतो यजमानस्योपस्थानमन्त्रा दर्शपूर्णमासाङ्गमन्त्राश्च )

**प्रजापतिरिति** । अहोरात्रैवृताः प्रयाणकाले तथा पितरः पशवश्छन्दोयुक्तमन्त्रैरन्विष्टाः सन्तो लब्धाः । तस्माच्छन्दोभिरुपस्थानं विनष्टवस्त्वन्वेषणाय भवति ।

तदुपस्थानस्य प्रतिदिनकर्तव्यतामुन्नयति—

**न तत्रेति** । उपस्थातुरभीष्टप्रार्थनासद्भावादुपस्थेयस्य स्तुतिसद्भावाच्च तत्रोपस्थाने कस्यापि जाम्यालस्यं नास्ति ।

उपस्थानवेलायामीषत्तिरश्चीनमुखत्वं विधत्ते—

**यो वा अग्निमिति** । [ प्रत्यङ् ] प्रत्यङ्मुखः । तथा सत्यग्निरेनं यजमानं प्रत्योषति प्रातिकूल्येन दहति । ( पराङ् ) पराङ्मुखः । तथा सति यजमानः प्रजया पशुभिश्च विष्वङ्ङेति वियुक्तो भवति । कक्षातिर्यङ्ङिवेषत्तिरश्चीन इव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

———

( अथ प्रथमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः )।

मम नाम प्रथमं जातवेदः पिता माता च
दधतुर्यदग्ने । तत्त्वं बिभृहि पुनरा मदैतोस्त-
वाहं नाम बिभराण्यग्ने । मम नाम तव च
जातवेदो वाससी इव विवसानौ ये चरावः ।
आयुषे त्वं जीवसे वयं यथायथं वि परि दधा-
वहै पुनस्ते । नमोऽग्नयेऽप्रतिविद्धाय नमोऽ-
नाधृष्टाय नमः सम्राजे । अषाढः ( १ )
अग्निर्बृहद्वया विश्वजित्सहन्त्यः श्रेष्ठो गन्धर्वः ।
त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवा-
चनाः । सं मामायुषा सं गौपत्येन सुहिते मा

धाः। अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽय॑ꣳ सहस्रसातः। अस्मा अस्तु सुवीर्यम्। मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः सं दधामि हविषा घृतेन। पयस्वतीरोषधयः (२) पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र सꣳ सृज। अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्। अग्निꣳ होतारमिह तꣳ हुवे देवान्यज्ञियानिह यान्हवामहे। आ यन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य। कस्त्वा युनक्ति स त्वा युनक्तु यानि घर्मे कपालान्युपचिन्वन्ति ( ३ ) वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू वि मुञ्चताम्। अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन्पुनः। इध्मो वेदिः परिधयश्च सर्वे यज्ञस्याऽऽयुरनु सं चरन्ति। त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳ अप्येतु ( ४ )॥

( अषाढ ओषधय उपचिन्वन्ति पञ्चचत्वारिꣳशच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः॥ १०॥

( प्रवत्स्यतो यजमानस्योपस्थानमन्त्रा दर्शपूर्णमासाङ्गमन्त्राश्च )

( अथ प्रथमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ) ।

दशमानुवाकस्य पूर्वभागे प्रवत्स्यतो यजमानस्याग्न्युपस्थानमन्त्रा उत्तरभागे केचिद्दर्शपूर्णमासाङ्गमन्त्राश्चाभिधीयन्ते। कल्पे—"प्रवसथमेष्यन्नाहाग्नीन्समाधेहीति ज्वलत उपतिष्ठते " इत्युपक्रम्योक्तं " पशून्मे शंस्य पाहि तान्मे गोपायास्माकं पुनरागमादित्याहवनीयं मम नाम प्रथमं जातवेद इति च " इति ।

तत्र पशूनित्यादिमन्त्रः शाखान्तरगतः । मन्त्रान्तरपाठस्तु—

**मम नाम प्रथममिति** । ब्राह्मणस्य नामद्वयं विद्यते देवदत्तयज्ञदत्तादिकमेकमुपाध्यायदीक्षितादिकमपरम् । अत एव श्रूयते—" तस्माद्द्विनामा ब्राह्मणोऽर्धुकः " इति । तत्राध्यापनादेरूर्ध्वं प्रवृत्तत्वादुपाध्यायादिकं चरमम् । अग्रे जन्मकाले मातापितृभ्यां कृतत्वाद्देवदत्तादिकं प्रथमम् । हे जातवेदो मम यत्प्रथमं नाम तत्त्वं धारय । कियन्तं कालम् । पुनरा मदैतोः । आ मदीयपुरागमनात् । अहमपि तव नाम धारयाणि । त्वमत्र वैकल्यं निर्हरन्मदीयं कार्यं कुरु । त्वन्नामधारिणो मम गन्तव्यदेशे वैकल्यमेव न संभवतीत्यर्थः ।

कल्पे—" अभ्येत्याहाग्नीन्समाधेहीति ज्वलत उपतिष्ठते " इत्युपक्रम्योक्तं " मम नाम तव च जातवेद इति चतसृभिराहवनीयम् " इति ।

तत्र प्रथमा—

**मम नाम तवेति** । हे जातवेदो मम देवदत्तादि नाम तव च वह्न्यादि नामेत्येवं ये नामनी विपरिवृत्यान्योन्यवाससी विपर्ययेण वसानाविवेदानीमावां चरावः । अत ऊर्ध्वं ते नामनी त्वं चाहं च पुनरपि यथायथं त्वदीयं वह्न्यादिनाम तवैव मदीयं च देवदत्तादिनाम मदीयमेव यथा भवति तथा विपरिवृत्य परिदधावहै । एवं सत्यायुर्वृद्धिर्धनादिसंपत्त्या प्रशस्तजीवनं च भवति ।

अथ द्वितीया—

**नमोऽग्नय इति** । अप्रतिविद्धाय केनचिदताडिताय । अनाधृष्टाय केनाप्यतिरस्कृताय । सम्राजे संहतदीप्तये । अषाढः शत्रूणां सोढुमशक्यः । बृहद्वया अपरिमितान्नः । विश्वजित्सर्वस्य जेता । सहन्त्यः स्वयं सहिष्णुः । श्रेष्ठो गन्धर्वः संगीतादिकलाविद्यास्वतिकुशलः ।

अथ तृतीया—

**त्वत्पितार इति** । त्वमेव पिता पालको येषां देवानां ते त्वत्पितारः । त्वां

प्राप्ता आहुतयो येषां देवानां ते त्वामाहुतयः। त्वयि हुताः सत्यो देवांस्तर्पयन्तीत्यर्थः। त्वमेव विशेषेण वाचनप्रख्यापयिता येषां ते त्वद्विवाचनाः। हेऽग्ने मां दीर्घायुषा संधाः संयोजय। गौपत्येन गवां स्वामित्वेन संयोजय। सुहिते सुष्ठु हिते पुरुषार्थे मा धाः, मां स्थापय।

अथ चतुर्थी—

**अयमग्निरिति**। प्रशस्यानां मध्येऽतिशयेन श्रेष्ठः। पुनरपि तादृशानां मध्येऽतिशयेन श्रेष्ठः श्रेष्ठतमः। भगवच्छब्दः पौराणिकैर्व्याख्यातः—

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति।
उत्पत्तिं प्रलयं चैव भूतानामगतिं[२] गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति।

अतिशयेन भगवान्भगवत्तमः। सहस्रसंख्याकस्य धनस्य सनितारो दातारस्तेष्वतिशयेन दाता सहस्रसातमः। तादृशस्याग्नेः प्रसादादस्मै यजमानाय मह्यं शोभनं सामर्थ्यमस्तु।

कल्पः—"नवमीं चेदति प्रवसन्मित्रो जनान्यातयति प्रजानन्निति मैत्र्योपस्थाय मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात्" इति।

निर्गमनतिथिमारभ्य नवमीं तिथिमतिक्रम्य प्रवासे सत्येतदवगन्तव्यम्। तत्र मित्रो जनानिति मन्त्रोऽन्यत्राऽऽम्नातः।

**मनो ज्योतिरिति**। पूर्वार्धे भूमिर्भूम्नेत्यनुवाके व्याख्यातम्। या उषसः प्रातःकालोपलक्षिता आहुतयः, याश्च निम्रुचोऽस्तमयकालोपलक्षिता आहुतय इष्टा इतरैर्यजमानैरनुष्ठिता मया त्वन्तरितास्ताः सर्वा आहुतीरनेन घृतेन हविषा संदधामि अविच्छिन्नाः करोमि।

अग्न्युपस्थानमन्त्रविषयः[३] पूर्वभागो गतः। अथ दार्शिकयजमानमन्त्रादिविषय उत्तरभाग उच्यते।

कल्पः—"पयस्वतीरोषधय इत्यप आचामत्युपस्पृशति वा" इति।

पाठस्तु—

**पयस्वतीरिति**। सारवाची पयःशब्दः। ओषधयः पयस्वत्यः सारवत्यः।

१ ख. वीर्यस्य। २ ख. °नामाग°। ३ ख. °मन्त्रादिवि°।

( प्रवत्स्यतो यजमानस्योपस्थानमन्त्रा दर्शपूर्णमासाङ्गमन्त्राश्च )

वीरुधां लतानां संबन्धि यत्पयो निर्गतं क्षीरं तदपि पयस्वत्सारवत् । अपां मध्ये यत्पयः सारं यच्च पयसो गवादिक्षीरस्य पयः सारं तेन सारेण सर्वेण हे इन्द्र मां संसृज संयोजय ।

**अग्ने व्रतपत इति** । कल्पः--" दक्षिणेनाऽऽहवनीयमवस्थाय व्रतमुपैष्यन्समुद्रं मनसा ध्यायत्यथ जपति अग्ने व्रतपते व्रतं चरिष्यामीति ब्राह्मणः " इति ।

मन्त्रशेषस्तु--" तच्छकेयं तन्मे राध्यताम् " इति ।

तद्व्रतमनुष्ठातुं शक्तो भूयासं, मदीयं तद्व्रतं समृद्धं भवतु ।

**अग्निꣳ होतारमिति** । कल्पः--" अग्निꣳ होतारमिह तꣳ हुव इति हविर्निरूप्यमाणमभिमन्त्रयते हविर्निर्वपणं वा पात्रमभिमृशत्यभि वा मन्त्रयते " इति ।

मन्त्रशेषस्तु--" देवान्यज्ञियानिह यान्हवामहे । आ यन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य " इति ।

इह कर्मणि देवानामाह्वातारं तमग्निमहमाह्वयामि । इह कर्मणि यान्देवानुद्दिश्य जुहुमस्तानपि यज्ञियान्देवानाह्वयामि । आहूताश्च ते देवाः सौमनस्यं प्राप्ता आगच्छन्तु । आगत्य च मेऽस्य हविषो मदीयमिदं हविर्वियन्तु भक्षयन्तु ।

**कस्त्वेति** । कल्पः--अथ यज्ञं युनक्ति कस्त्वा युनक्ति स त्वा युनक्त्विति सर्वं विहारमनुवीक्षते " इति ।

हे यज्ञ कः प्रजापतिः सर्वत्र त्वां युनक्ति योग्यं करोति । तस्मादत्रापि स एव त्वां युनक्तु ।

कल्पः--" उभौ कपालविमोचनं जपतः " इति । उभावप्यध्वर्युर्यजमानौ ।

मन्त्रपाठस्तु--

**यानि घर्म इति** । अयं मन्त्रोऽप्यध्वर्युकाण्ड आम्नातत्वात्प्रथमप्रपाठके व्याख्यातः । वेधसो ब्रह्मसमाः पूष्णः पोषका ऋत्विजो यानि कपालानि वह्नावुपस्थापयन्ति तानि सर्वाण्यपि व्रते समाप्ते सतीन्द्रवायू विमुञ्चताम् ।

**अभिन्न इति** । अथ प्रायश्चित्तम् । तत्र कल्पः--" यदि कपालं भिद्येत गायत्रिया त्वा शताक्षरया संदधामीति तत्संधायोपरि गार्हपत्ये धार्यमाणमभिजुहुयान्मनो ज्योतिर्जुषतामित्यथैनदपोऽभ्यवहरेदभिन्नो घर्मो जीरदानुरिति " इति ।

मन्त्रशेषस्तु--" यत आत्तस्तदगन्पुनः । इध्मो वेदिः परिधयश्च सर्वे यज्ञस्याऽऽयुरनुसंचरन्ति " इति ।

---

१ ख. °यद्या त्वा ।

( प्रवत्स्यतो यजमानस्योपस्थानमन्त्रा दर्शपूर्णमासाङ्गमन्त्राश्च )

घर्मो दीप्तः संतप्तोऽयं कपालविशेषः स्वयं भिन्नत्वेन प्रतीयमानोऽपि मन्त्रसामर्थ्यादभिन्न एव भिन्नत्वदोषं नाऽऽवहति । यस्मादयं जीरदानुः । जीरं जीवनं पुरोडाशद्वारेण यज्ञस्य ददातीति जीरदानुः । यो ह्यन्यं जीवयति स कथं स्वयं भिन्नो भवेत् । अभिन्नत्वे तदाकारः कुतो न भातीत्याशङ्क्योत्तरमुच्यते— यतो यस्मान्मृद्रूपात्कारणादात्त उत्पन्नः पुनस्तत्कारणमगन्नाप्नोदतः कारणरूपमृदाकार एव प्रतीयते न तु कार्याकारः । तदप्रतीतावपीध्मादयः स्वस्वाकारेण प्रतीयमाना यज्ञपुरुषस्याऽऽयुरेनुकृत्य संचरन्ति ।

**त्रयस्त्रिंशदिति** । कल्पः—"अथान्यत्संस्कृत्य कपालेऽवतिसृजेत्त्रयस्त्रिंशत्तन्तव इति " इति ।

मन्त्रशेषस्तु—" ये वितत्निरे य इमं यज्ञं स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवां अप्येतु " इति ।

चतुर्थकाण्डे प्रजापतिर्मनसाऽन्धोऽच्छेत इत्यस्मिन्ननुवाक इष्टकोपधानार्था यज्ञतनुनामकास्त्रयस्त्रिंशन्मन्त्रा आम्नाताः । तन्मन्त्रप्रतिपाद्या यज्ञतनव इह तन्तुस्थानीयाः । यथा तन्तुभिः पटो निष्पाद्यते तथा तास्तनवो यज्ञं विस्तारयन्ति । ते तन्तवो यज्ञनिष्पादकाः । येऽप्यृत्विगादयः स्वधया हविषेमं यज्ञं ददन्तेऽनुतिष्ठन्ति तेषां प्रजापत्यादीनां यज्ञाभिमानिदेवानामृत्विगादियज्ञाङ्गानां च मध्ये यत्स्वरूपं विच्छिन्नं तदेतत्प्रतिसंदधामि । अतः स्वाहा सुष्ठु प्रतिसंहितो घर्मो दीप्तो यज्ञाङ्गविशेषो देवानप्येतु प्राप्नोतु ।

अत्र विनियोगसंग्रहः—

"मम प्रवत्स्यन्पूर्वाग्निं मन्त्रयेत्पुनरागतः ।
ममेत्याद्यैश्चतुर्मन्त्रैर्मनस्तत्र जुहोति हि ॥ १ ॥
गतमग्नेरुपस्थानं मन्त्राः प्रासङ्गिका अथ ।
पयेत्याचामति स्वामी दर्शपूर्णिमयोरपः ॥ २ ॥
अग्ने प्रागग्निपार्श्वस्थो जपेदग्निं हविस्तथा ।
निरुप्यमाणं संमन्त्र्य कस्त्वा यज्ञं युनक्ति हि ॥ ३ ॥
यानीति मुच्यमानानि कपालान्यनुमन्त्रयेत् ।
अभिन्नोऽप्सु क्षिपेद्भिन्नं कपालं त्रय इत्यतः ।
कपालान्तरमादध्यादिति प्रासङ्गिका गताः ॥ ४ ॥ " इति ॥

---

१ क. घ. ङ. च. °नु कृत्वा सं° । २ ख. °ष्वपि सृ° । ३ ख. ततः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके

दशमोऽनुवाकः ॥ १० ॥

---

वैश्वानरो न ऊत्याऽऽप्र यातु परावतः। अग्निरुक्थेन वाहसा। ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्। अजस्रं घर्ममीमहे। वैश्वानरस्य दꣳसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः। उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा। पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा सः (१) रिषः पातु नक्तम्। जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा। वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः। त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः। त्वं देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा। अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरꣳ सुवीर्यम्। वयं जयेम शतिनꣳ सहस्रिणं वैश्वानर (२) वाजमग्ने तवोतिभिः। वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः। इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते

सूर्येण । अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाँसि शिश्रथः कृतानि । उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय । अथा वयमादित्य ( ३ ) व्रते तवानागसो अदितये स्याम । दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूँषि तारिषत् । आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषाऽपस्ततान । सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचाँसि । अग्निर्मूर्धा भुवः । मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे । आ तू नः ( ४ ) उप गन्तन । या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि । अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम् । अदितिर्न उरुष्यत्वदितिः शर्म यच्छतु । अदितिः पात्वँहसः । महीमू षु मातरँ सुव्रतानामृतस्य पत्नीमवसे हुवेम । तुविक्षत्रामजरन्तीमुरूचीँ सुशर्माणमदितिँ सुप्रणीतिम् । सुत्रामाणं पृथिवीं द्यामनेहसँ सुशर्माणमदितिँ सुप्रणीतिम् । दैवीं नावँ स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ।

इमाꣳ सु नावमाऽरुहꣳ शतारित्राꣳ शतस्फ्याम् । अच्छिद्रां पारयिष्णुम् ( ५ ) ॥

( दिवा स सहस्रिणं वैश्वानराऽऽदित्य तू नोऽनेहसꣳ सुशर्माणमेकान्नविꣳशतिश्च ) ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥**

देवासुराः परा भूमिर्भूमिरुपप्रयन्तः सं पश्याम्यर्यज्ञः सं पश्यामीत्याहाग्निहोत्रं मम नाम वैश्वानर एकादश ॥ ११ ॥

देवासुराः क्रुद्धः सं पश्यामि सं पश्यामि नक्तमुप

गन्तनैकपञ्चाशत् ॥ ५१ ॥

हरिः ॐ ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥**

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः ) ।

अथान्तिम एकादशानुवाके काम्या याज्या[पुरोनुवाक्या] उच्यन्ते । इष्टिकाण्डे त्रिहविष्का काचिदिष्टिराम्नायते—

"वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्राव्णे चरुमभिशस्यमानो यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरेणैवैनꣳ स्वदयत्यप पापं वर्णꣳ हते वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति" [ सं० का० २ प्र० २ अ० ५ ] इति ।

अभिशस्यमानः पातकारोपेण दूष्यमाणः । वैश्वानरशब्देन संवत्सराभिमानी कश्चिदग्निरुच्यते । तेनैव संवत्सराभिमानिनैनमभिशस्तं स्वात्मानं स्वदयति बन्धुभ्यो रोचयति । वर्णं वर्ण्यमानमारोप्यमाणं पापमपहते विनाशयति । पापिनं बद्ध्वा नेतुं प्रसारितो यो वरुणपाशस्तस्मादेनं स्वात्मानं वारुणयागेन मोचयति । दधिक्रावदेवकेन यागेन स्वात्मानं पूतं करोति ।

चोदकप्राप्तां दक्षिणां बाधितुं दक्षिणान्तरं विधत्ते—

---

१ ख. °प्राप्तामन्वाहार्यद° ।

"हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनमाद्यमस्यान्नं भवति" [ सं० का० २ प्र० २ अ० ५ ] इति।

आद्यमत्तुं योग्यं मृद्वन्नम्।

अस्यामिष्टौ प्रथमहविषो याज्यापुरोनुवाक्यायुग्मानि चत्वारि विकल्पितानि। तत्र प्रथमयुग्मे पुरोनुवाक्यामाह–

**वैश्वानर इति**। विश्वेषां नराणामुपकारी वैश्वानरोऽग्निरूत्या रक्षणनिमित्तं परावतो दूरादपि देशाद्वाहसा प्रापणसमर्थेनोक्थेनोत्थानपूर्वकेणाऽऽगमनेन नोऽस्मान्प्रायातु प्रागच्छतु।

याज्यामाह–

**ऋतावानमिति**। वैश्वानरमीमहे वयं प्राप्नुमः। कीदृशम्। ऋतावानं सत्यवन्तम्। ऋतस्य यज्ञस्य ज्योतिषोऽभीष्टफलप्रकाशकस्य पतिं पालकम्। अजस्रं घर्मं निरन्तरं दीप्यमानम्।

द्वितीययुग्मे पुरोनुवाक्यामाह–

**वैश्वानरस्येति**। कविर्बुद्धिमानेको यजमानो वैश्वानरसंबन्धिनीभ्यो दंसनाभ्यः क्रियाभ्यो बृहन्महाफलमरिणात्प्राप्नोत्। अपःशब्दः कर्मवाची। शोभनमपः स्वपः। स्वपसो भावः स्वपस्यम्। तेन स्वपस्येन वैश्वानरयागस्य शोभनकर्मत्वेनेत्यर्थः। छान्दसो लिङ्गव्यत्ययः। अयमग्निर्द्युभूमिरूपौ प्रभूतरेतस्कौ स्वकीयमातापितरावुभौ महयँल्लोकपूज्यौ कुर्वन्स्वयमजायत। तस्मादेतदीयकर्मणो महाफलं युक्तमित्यर्थः।

याज्यामाह–

**पृष्टो दिवीति**। पृष्ट इत्यत्र सकारलोपश्छान्दसः। अयमग्निर्दिवि स्पृष्ट आदित्यरूपेणावस्थितः पृथिव्यां दाहपाकप्रकाशकारित्वेनावस्थितस्तथा फलपाककारी सन्स्पृष्टः संबद्धः सर्वा अप्योषधीराविवेश। वैश्वानरोऽग्निः सहसा बलेन स्पृष्टः संबद्धः। स तादृशो नोऽस्मान्दिवा रिषो हिंसकात्पापान्नक्तं रात्रावपि सोऽस्मान्पातु।

तृतीययुग्मे पुरोनुवाक्यामाह–

**जातो यदग्न इति**। हेऽग्ने त्वं जातमात्र एव भुवनानि व्यख्यः स्वतेजसा विशेषेण ख्यापितवानसि। गोपाः पशुं न पशुमिव। यथा गोपालकोऽनायासे-

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

नैव पशुरेतदीय इति ख्यापयति तद्वत् । कीदृशस्त्वम् । इयं इरामन्नमर्हसि। परिज्मा परितो गन्ता। यद्यस्मादेवंविधस्त्वं ततो हे वैश्वानर ब्रह्मणे परिवृढायास्मै कर्मणे गातुं मार्गं विन्द लभस्व । यूयं स्वस्तिभिः श्रेयोभिः सदा नोऽस्मान्पात रक्षत । यूयमिति बहुवचनं पूजार्थम् ।

याज्यामाह—

**त्वमग्न इति** । हेऽग्ने त्वं शोशुचानो भृशं दीप्यमानो जायमान एव रोदसी द्यावापृथिव्यौ शोचिषा दीप्त्याऽऽपृणाः सर्वतः पूरितवानसि । हे जातवेद उत्पन्नजगद्वेदिन्वैश्वानर त्वं महित्वा स्वमहिम्ना देवान्त्विजोऽभिशस्तेः पापादमुञ्चो मोचितवानसि ।

चतुर्थयुग्मे पुरोनुवाक्यामाह—

**अस्माकमिति** । हेऽग्नेऽस्माकं क्षत्रं पालकं पुरुषं मघवत्सु धारयेन्द्रेषु स्थापयेन्द्रसमानं कुरु । कीदृशं क्षत्त्रम् । अनाम्यनमनशीलं कस्यचिदपि नमस्कारं न करोतीत्यर्थः । अजरं जरारहितम् । सुवीर्यमभग्नसामर्थ्यम् । हे वैश्वानर तवोतिभिस्त्वदीयैः पालनैर्वयमपि शतसहस्रसंख्योपेतं वाजमन्नं जयेम ।

याज्यामाह—

**वैश्वानरस्येति** । वयं वैश्वानरस्य सुमतावनुग्रहबुद्धौ स्याम तिष्ठेम । अभिप्राप्तश्रीरयं वैश्वानरः सर्वेषां भुवनानां राजा हिकं प्रकाशकः खलु । इत एव कारणाज्जातमात्र एवेदं विश्वं विचष्टे विशेषेण प्रख्यापयति । अयं वैश्वानरः सूर्यरूपेण यतते दिवा प्रवर्तते । अत एवान्यत्राऽऽम्नातम्—“ उद्यन्तं वावाऽऽदित्यमग्निरनु समारोहति ” इति । तान्येतानि चत्वारि युग्मानि श्रूयमाणेषु सर्वेष्वपि वैश्वानरयागेषु इच्छया विकल्प्यन्ते । वैश्वानरलिङ्गस्य साधारणत्वाद्विशेषलिङ्गानां च स्पष्टानामदर्शनात् । यदि कश्चित्स्वबुद्ध्या विशेषलिङ्गं सूक्ष्ममुत्प्रेक्षेत तदा तदनुसारेण व्यवस्थाऽस्तु ।

द्वितीयहविषः पुरोनुवाक्यामाह—

**अव ते हेड इति** । हे वरुण ते हेडस्तव क्रोधं नमस्कारैरवेमहे शमयामः। यज्ञेभिर्यज्ञविशेषैर्हविर्भिश्च पुरोडाशादिभिरवेमहे शमयामः। हेऽसुर शत्रुनिरसनक्षम

हे प्रचेतः प्रकृष्टचित्त हे राजन्दीप्यमानास्मभ्यमस्मदनुग्रहार्थं क्षयमिह निवसन्न-स्माभिः कृतान्येनांसि शिश्रथः श्लथय।

याज्यामाह—

**उदुत्तममिति**। हे वरुणोत्तममुत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशमुत्कृष्य श्रथय विनाशय। अधममधमाङ्गे पादप्रदेशे स्थापितं पाशमवकृष्य विनाशय। मध्यमं मध्यप्रदेशे स्थापितं पाशं विच्छेदय। अथ पाशत्रयविनाशानन्तरं हे आदित्य सूर्यसदृश वरुण वयमनागसः पापरहिताः सन्तस्तव व्रते स्वकीयकर्मणि अदितयेऽखण्डितत्वाय स्याम योग्या भवेम।

तृतीयस्य हविषः पुरोनुवाक्यामाह—

**दधि क्राव्ण इति**। दधि क्रामति प्राप्नोतीति दधिक्रावा, एतन्नामको दधि-प्रियः कश्चिद्देवविशेषः। अग्निरित्यन्ये। तस्य देवस्याकारिषमहं कर्म कृतवान-स्मि। कीदृशस्य। जिष्णोर्जयशीलस्याश्वस्य व्यापिनो वाजिनोऽन्नवतः। स देवो नोऽस्माकं मुखं सुरभि करत्कर्पूरादिद्रव्यसमृद्धिप्रदानेन सुगन्धोपेतं करोतु। अस्माकमायूंषि च प्रतारिषत्प्रवर्धयतु।

याज्यामाह—

**आ दधिक्रा इति**। अयं दधिक्राः पञ्च कृष्टीर्निषादपञ्चमैश्चतुर्भिर्वर्णैः पञ्चविधान्मनुष्यानाततान सर्वतो विस्तारयति। किं कृत्वा। शवसाऽन्नेन संयोज्य। यथा सूर्यो ज्योतिषा रश्मिना भूरसमादाय वर्षतावपो विस्तारयति तद्व-त्। कीदृशो दधिक्राः। सहस्रसंख्याकं धनं सनोति ददातीति सहस्रसाः। तथा शतसाः। वाज्यन्नवान्। अर्वा कर्मभूमौ गमनवान्। तादृशो देवो मध्वा मधुराणि मदीयानीमानि स्तुतिरूपाणि वचांसि संपृणक्त्वङ्गी करोतु।

पूर्वोक्तामेव त्रिहविष्कामिष्टिं फलान्तराय विधत्ते—

"एतामेव निर्वपेत्प्रजाकामः संवत्सरो वा एतस्याशान्तो योनिं प्रजायै पशूनां निर्दहति योऽलं प्रजायै सन्प्रजां न विन्दते यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव भागधेयेन शमयति सोऽस्मै शान्तः स्वाद्योनेः प्रजां प्र जनयति वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा

१ क. घ. ङ. °मनु°। २ ख. श्रथाय। ३ ख. °ते त्वदीय°।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

पुनाति हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनं विन्दते प्रजाम् " [ सं० का० २ प्र० २ अ० ५ ] इति।

यौवनादिसंपत्त्या प्रजामुत्पादयितुं योग्यो यः प्रजां न लभत एतस्य प्रजार्थं प्रवृत्तां योनिं गर्भधारणस्थानमशान्तः संवत्सरो देवो वैश्वानरो निःशेषेण दहति। एवं पशुष्वपि योज्यम्। द्वादशकपालेन तु शान्तो योनिं समाधाय प्रजामुत्पादयति।

तस्य पूतत्वादिफलार्थमेकहविष्कामिष्टिं विधत्ते—

"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन्तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति " [ सं० का० २ प्र० २ अ० ५] इति।

द्वादशत्वसंख्यान्तर्गताभिरष्टत्वादिसंख्याभिर्गायत्र्यादिसाम्यमापाद्य प्रशंसति।

एतामेवेष्टिं दर्शाद्यत्ययप्रायश्चित्तार्थं विधत्ते—

"अव वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्या अथो देवता एवान्वारभ्य सुवर्गं लोकमेति " [ सं० का० २ प्र० २ अ० ५ ] इति।

यदा संवत्सरमेवोपदधाति विच्छेदरहितं करोति तदा संवत्सरस्यावयवयोर्दर्शपूर्णिमादिनयोरनुष्ठानस्य कुतोऽत्ययः। किंच संवत्सरे प्रीते सर्वदेवतानां प्रीतत्वात्ता देवता आश्रित्य तदनुग्रहेण स्वर्गं प्राप्नोति।

आधानेन समृद्धिरहितो योऽग्निमुद्वासयिष्यति तस्य द्विहविष्कामिष्टिं विधत्ते—

"वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्नाग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्मा आतिथ्यं करोत्यथो यथा जनं यतेऽवसं करोति तादृगेव तद्द्वादशकपालो वैश्वानरो भवति द्वादश

---

१ ख. प्रवृत्तं। २ ख. उत्पन्नपुत्रस्य। च. जातस्य। ३ ख. °म्यमनूद्य।

मासाः संवत्सरः संवत्सरः खलु वा अग्नेर्योनिः स्वामेवैनं योनिं गमयत्याद्यमस्यान्नं भवति" [ सं० का० २ प्र० २ अ० ५ ] इति ।

अष्टत्वसंख्यया गायत्रीद्वारा तत्सहोदरस्याग्नेः सर्वस्याप्यातिथ्यं कृतं भवति । किंच यथा लोके दूरदेशवर्तिनं पितृभ्रात्रादिरूपं जनं प्रति यते गच्छते पुरुषायावसं रक्षकं पाथेयं करोति तादृशमिदमुद्वासयिष्यमाणायाग्नये पुरोडाशप्रदानम् । द्वादशसंख्यया मासद्वारा संवत्सररूपां स्वयोनिमेवाग्निं गमयति । अग्नेरनुग्रहेणास्य समीचीनमन्नं भवति ।

अत्राऽऽग्नेये हविषि याज्यापुरोनुवाक्ययोः प्रतीकद्वयमाह-

**अग्निमूर्धा भुव इति** । अनयोरग्निर्मूर्धेत्यसौ पुरोनुवाक्या । सा चोपप्रयन्त इत्यनुवाके व्याख्याता । भुवो यज्ञस्येत्यसौ याज्या । सा तु चतुर्थकाण्ड आम्नातत्वात्तत्रैव व्याख्यास्यते ।

प्रजाभिः समृद्धं ग्रामं कामयमानस्य द्विहविष्कामिष्टिं विधत्ते-

"वैश्वानरं द्वादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकामः" [ सं० का० २ प्र० २ अ० ५ ] इति ।

प्रकृतावष्टाकपालैकादशकपालयोर्हविषोरेकस्मिन्नेवाग्नावधिश्रितत्वादत्रापि तत्प्राप्तावपवदति-

"आहवनीये वैश्वानरमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै" [ सं० का० २ प्र० २ अ० ५ ] इति ।

वसीयोऽत्यधिकं यत्पापं तत्पापवस्यसं तस्य ग्रामप्राप्तिप्रतिबन्धकपापस्य विधृत्यै वियोजनायेत्यर्थः ।

द्वादशत्वसंख्यां प्रशंसति-

"द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै सजाताꣳश्च्यावयति" [ सं० का० २ प्र० २ अ० ५ ] इति ।

अस्मै यजमानार्थं सजातान्समानकुले समुत्पन्नान्मनुष्यांश्च्यावयति प्रह्वीभूतान्करोति ।

मरुद्देवतां प्रशंसति-

"मारुतो भवति मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्यविशमव रुन्धे" [ सं० का० २ प्र० २ अ० ५ ] इति ।

---

१ ख. °रा वत्सरसोद° ।

[ काम्ययाज्यापुरोनुवाक्याभिधानम् ]
विशः करप्रदाः प्रजाः। वैदिकप्रजानुग्रहेण मानुषप्रजासमृद्धिं संपादयति।
सप्तसंख्यां प्रशंसति—
" सप्तकपालो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानव रुन्धे " [ सं० का० २ प्र० २ अ० ५ ] इति।
ईदृङ्चान्यादृङ्चेत्यादिनामधारिणां सप्तानां समूहः प्रथमो गणः। शुक्रज्योतिश्चेत्यादिको द्वितीयः। ऋतजिच्चेत्यादिकस्तृतीयः। ऋतश्चेत्यादिकश्चतुर्थः। ईदृक्षास इत्यादिकः पञ्चमः। मितासश्चेत्यादिकः षष्ठः। गणान्तरं शाखान्तरे द्रष्टव्यम्। वैदिकगणानुग्रहेणैव ज्ञातिगणान्बहून्संपादयति।
प्रकृतौ हविःष्वासादितेषु पश्चात्सामिधेनीप्रेषणे कृते ताः सामिधेन्योऽनूच्यन्ते तद्वदत्रापि सामिधेनीभ्यः प्रागेवाऽऽसादनं वैश्वानरस्य क्रियते। मारुतासादनस्य तु सामिधेन्यनुवचनकालीनत्वं विधत्ते—
" अनूच्यमान आ सादयति विशमेवास्मा अनुवर्त्मानं करोति " [ सं० का० २ प्र० २ अ० ५ ] इति।
प्रजां यजमानानुगामिनीं करोतीत्यर्थः।
अथ मारुतयागे पुरोनुवाक्यामाह—
**मरुत इति**। हे मरुतो यद्यस्मात्कारणाद्वयं सुम्नायन्तः सुखमिच्छन्तो दिवो द्युलोकाद्वो युष्मान्हवामह आह्वयामस्तस्मादाहूता यूयं नोऽस्मानुपगन्तन प्राप्नुत।
याज्यामाह—
**या वः शर्मेति**। हे मरुतो वो युष्माञ्शशमानाय भजमानाय दातुं या शर्म यानि सुखानि सन्ति संपादितानि विद्यन्ते, त्रिधातूनि त्रिस्थानानि लोकत्रयवर्तीनि यानि सुखानि दाशुषे हविर्दत्तवतेऽधियच्छताधिकं यथा भवति तथा भवन्तः प्रयच्छन्ति तानि सर्वाण्यस्मभ्यं वियन्त प्रयच्छत। किंच वृषणोऽभिमतफलस्य वर्षितारो रयिं धनं नोऽस्मभ्यं धत्त संपादयत। सुवीरं शोभनपुत्रं च संपादयत।
इष्ट्यन्तरं विधत्ते—
" आदित्यं चरुं निर्वपेत्संग्राममुपप्रयास्यन्नियं वा अदितिरस्यामेव पूर्वे प्रतितिष्ठन्ति " [ सं० का० २ प्र० २ अ० ६ ] इति।
उपप्रयास्यञ्जिगमिषुः। अनयेष्ट्या जितसंग्रामाः पूर्वे पुरुषा भूमावेव प्रतितिष्ठन्ति तद्वदयमपीत्यर्थः।

१ क. घ. ङ. च. °मः। धुनिश्चे°।

अत्र युग्मद्वयमाम्नातम् । तत्र प्रथमयुग्मे पुरोनुवाक्यामाह–

आदितिर्नेति । उरुष्यतु शत्रुभ्यो रक्षतु । स्पष्टमन्यत् ।

याज्यामाह–

**महीमू ष्विति ।** अदितिमु अदितिदेवतामेवावसेऽस्मद्रक्षार्थं सुहुवेम सुष्ठु आह्वयामः । कीदृशीम् । महीं महनीयां सुव्रतानां मातरं शोभनकर्मणां पुरुषाणां मातृवद्धितकारिणीम्, ऋतस्य पत्नीं सत्यस्य पालयित्रीं, तुविक्षत्रां बहुराजपालिताम्, अजरन्तीं सदा जरारहिताम्, उरूचीं विस्तीर्णगतिं, सुशर्माणं समीचीनसुखोपेतां, सुप्रणीतिं सुखेन कर्मणां प्रणेत्रीम् ।

द्वितीययुग्मे पुरोनुवाक्यामाह–

**सुत्रामाणमिति ।** स्वस्तये क्षेमायादितिमारुहेम प्राप्नुयाम । कीदृशीम् । सुत्रामाणं सुष्ठुत्रात्रीम् । पृथिवीं विस्तीर्णाम् । द्यां द्योतमानाम् । अनेहसं कालात्मिकां चिरकालस्थायिनीमित्यर्थः। दैवीं नावम् । यथा मनुष्यनिर्मिता नौः समुद्रस्योपरि तिष्ठति तथा देवनिर्मिता भूमिर्महाजलस्योपरि वर्तत इत्यर्थः । स्वरित्रां सुष्ठु शत्रुभ्यः पालयित्रीम् । अनागसं पापरहिताम् । अस्रवन्तीं छिद्ररहिताम् ।

याज्यामाह–

**इमा४ स्विति ।** इमां भूमिं नावं नौसदृशीं सुष्ठ्वारुहे प्राप्तवानस्मि । कीदृशीम् । शतसंख्याकान्यरित्राणि चोरेभ्यो रक्षकाण्यायुधानि यस्यां सा शतारित्रा तां दिक्पालकैः पालितामित्यर्थः । शतसंख्याकाः स्फ्यसदृशास्तरणदण्डा यस्यां सा शतस्फ्या ताम् । मण्डूककूर्मादिभिर्जलस्योपरि धारितामित्यर्थः । अच्छिद्रामधोभागे जलस्य प्रवेशच्छिद्ररहिताम् । पारयिष्णुमभीष्टफलस्य पारं नेतुं समर्थाम् ।

युद्धभूमिं प्राप्तस्य जयार्थिन इष्टिं विधत्ते–

"वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरः खलु वै देवानामायतनमेतस्माद्वा आयतनाद्देवा असुरानजयन्यद्वैश्वानरं द्वादशकपालं निर्वपति देवानामेवाऽऽयतने यतते जयति त९ संग्रामम्" [ सं० का० २ प्र० २ अ० ६ ] इति ।

यस्मिन्नायतने युद्धं भविष्यति तत्प्राप्य तस्मिन्प्रदेशे निर्वपेत् । संवत्सरदेवता-

---

१ ख. °पालयित्रीम् । २च. °र्थः । सुशर्माणं शोभननाम्नीं, सुप्रणीतिं सुष्ठु प्रापणकर्त्रीं, दै° । ३ ख. चारिभ्यो । ४ ख. ताहक्पालकैः ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

या भूबलस्य स्वामित्वात्तया पालिते देशे देवानां जयस्तद्वदयमपि प्रयतते तस्मा-ज्जयति ।

मारणादिपापार्थं प्रवृत्तयोः परस्परवैरिणोरन्नं यो भुङ्क्ते तस्य प्रायश्चित्तरूपा-मिष्टिं विधत्ते—

"एतस्मिन्वा एतौ मृजाते यो विद्विषाणयोरन्नमत्ति वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेवाऽत्ति नाऽस्मिन्मृजाते" [ सं० का० २ प्र० २ अ० ६ ] इति ।

अविचारादिना परस्परमारणोद्युक्तौ विद्विषाणौ तावेतौ स्वकीयान्नभुजि स्व-कीयं पापं मृजाते लेपयतः । संवत्सरदेवेन स्वदितं निर्दोषीकृतमेवान्नमसावत्ति । अतस्तौ नास्मिँल्लेपयतः ।

यावुभौ परस्परमद्रोहाय शपथं कुरुतस्तयोर्मध्ये प्रथमं द्रुह्यतः प्रायश्चित्तार्थेष्टिं विधत्ते—

"संवत्सराय वा एतौ सममाते यौ समभाते तयोर्यः पूर्वोऽभिद्रुह्यति तं वरुणो गृह्णाति वैश्वानरं द्वादशकपालं निर्वपेत्सममानयोः पूर्वोऽभिद्रुह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेवाऽऽप्त्वा निर्वरुणं परस्तादभिद्रुह्यति नैनं वरुणो गृ-ह्णाति" [ सं० का० २ प्र० २ अ० ६ ] इति ।

संवत्सराय संवत्सरदेवं साक्षिणं कृत्वेत्यर्थः । समगाते सम्यक्शपथं कुरुतः । वरुणग्रहणं नाम रोगोत्पत्तिः । निर्वरुणं रोगनिवारकं संवत्सरदेवमेव प्रथमतः प्राप्य पश्चात्तद्बलेन युक्तो द्रोहं कृतवान्भवति । ततो नास्य वरुणग्रहणं भवति ।

अविं प्रतिगृहीतवतः पापपरिहारायेष्टिं विधत्ते—

"आव्यं वा एष प्रतिगृह्णाति योऽविं प्रतिगृह्णाति वैश्वानरं द्वादशकपालं नि-र्वपेदविं प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितामेव प्रतिगृह्णाति नाऽऽव्यं प्रतिगृह्णाति" [ सं० का० २ प्र० २ अ० ६ ] इति ।

अवत्यस्मादित्याव्यं पापम् । श्लेष्मरोग इति केचित् । संवत्सरेण स्वदितां नि-र्दोषीकृताम् ।

अधस्तादुपरिष्टाच्चोभयतो दन्तैर्युक्तं प्राणिस्वरूपं प्रतिगृहीतवतः पापपरिहारा-येष्टिं विधत्ते—

आत्मनो वा एष मात्रामाप्नोति य उभयादत्प्रतिगृह्णात्यश्वं वा पुरुषं वा वै-

श्वानरं द्वादशकपालं निर्वपेदुभयादत्प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेव प्रतिगृह्णाति नाऽऽत्मनो मात्रामाप्नोति " [ सं० का०२ प्र०२ अ० ६ ] इति ।

मात्रां हिंसाम् । उभयतो दन्ता यस्य तत्स्वरूपमुभयादत् ।

धनलाभमुद्दिश्य दातृसमीपं गमिष्यत इष्टिं विधत्ते—

" वैश्वानरं द्वादशकपालं निर्वपेत्सनिमेष्यन्त्संवत्सरो वा अग्निर्वैश्वानरो यदा खलु वै संवत्सरं जनतायां चरत्यथ स धनार्घो भवति यद्वैश्वानरं द्वादशकपालं निर्वपति संवत्सरसातामेव सनिमभि प्रच्यवते दानकामा अस्मै प्रजा भवन्ति " [ सं० का० २ प्र० २ अ० ६ ] इति ।

सनिं धनलाभम् । लोके यो याचको दातृजनसमूहे संवत्सरं चरति तदानीमसौ धनसमृद्धो भवति । संवत्सरदेवेन सातां दत्तामेव सनिं धनलब्धिमभिप्राप्नोति । अस्य प्रजाश्च दानशीला भवन्ति ।

तयेष्ट्या दातृसमीपे धनं लब्ध्वा गृहे समागतस्य नैमित्तिकीमिष्टिं विधत्ते—

" यो वै संवत्सरं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेद्यमेव प्रयुङ्क्ते तं भागधेयेन विमुञ्चति प्रतिष्ठित्यै " [ सं० का० २ प्र० २ अ० ६ ] इति ।

संवत्सररूपं वैश्वानरं प्रयुज्य धनलाभार्थमिष्ट्या निर्बध्य यो न मुञ्चेत्सोऽप्रतिष्ठितो भवति । पुनरिष्ट्या तदीयभागं दत्त्वा तं विमुञ्चति विसर्जितवान्भवति ।

तत्रेतिकर्तव्यतां कांचिद्विधत्ते—

"यया रज्ज्वोत्तमां गामाजेत्तां भ्रातृव्याय प्रहिणुयान्निर्ऋतिमेवास्मै प्रहिणोति" [ सं० का० २ प्र० २ अ० ६ ] इति ।

दातृभ्यो लब्धासु गोषूत्तमां गां यया रज्ज्वा बद्ध्वा समानयति तां रज्जुं भ्रातृव्यविनाशार्थं तदीयगोष्ठे प्रक्षिपेत् । तथा सति निर्ऋतिं दारिद्र्यरूपां राक्षसीमिव भ्रातृव्यार्थं प्रेषयति ।

अत्र विनियोगसंग्रहः—

"अन्त्यानुवाकगा याज्या यागे वैश्वानराभिधे ।
वैश्वेत्यष्टौ विकल्पाः स्युरवद्दे वारुणे चरौ ॥ १ ॥

१ क. घ. ङ. च. °भये द° ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

दधीति दध्यादिचरावग्न्युद्वासनयागके।
अग्निर्भुव इति द्वे स्तः प्रतीके ते उभे मते ॥ २ ॥
मरुत्सप्तकपालेष्टावदीत्यादित्यके चरौ।
चतस्रः स्युर्विकल्पार्था इति प्रश्नोऽत्र पञ्चमः "॥ ३ ॥ इति।

अथ मीमांसा।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्।

"यद्द्वादशकपालेष्टेर्वैश्वानर्या अनन्तरम्।
श्रुतमष्टाकपालादि तद्गुणो नाम वा स्तुतिः॥
अन्तर्भावादष्टतादेर्नाम स्यादग्निहोत्रवत्।
द्रव्यं द्रव्यान्तरे नो चेद्गुणस्तर्हि फलत्यसौ॥
वाक्यैक्यमुपसंहाराद्विस्पष्टं तत्तु बाध्यते।
नानागुणविधौ तस्मादंशद्वारांऽशिसंस्तुतिः" ॥ इति।

काम्येष्टिकाण्डे श्रूयते—"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन्तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति" इति।

अत्राष्टत्वादिसंख्यासामान्यात्पुरोडाशानां गायत्र्यादिरूपत्वकल्पना कृता। इष्टिविधायके वाक्ये येयं द्वादशसंख्या तस्यामष्टत्वादिसंख्यानामन्तर्भावात्ताः संख्या निमित्तीकृत्याग्निहोत्रशब्दवदष्टाकपालादिशब्दाः कर्मनामधेयानीत्येकः पक्षः। नात्र द्वादशकपालशब्दः संख्यापरः किंतु पुरोडाशद्रव्यपरः। द्वादशसु कपालेषु संस्कृत इति व्युत्पत्तेः। एवमष्टाकपालादिशब्दा अपि। तथा सति द्रव्यस्य द्रव्यान्तरेऽनन्तर्भावान्नामधेयस्य निमित्तं नास्तीति चेदेवं तर्हि पुरोडाशद्रव्यरूपो गुणो विधीयताम्। न चोत्पत्तिशिष्टद्वादशकपालपुरोडाशावरुद्धत्वादष्टाकपालादेरनवकाश इति वाच्यम्। ब्रह्मवर्चसादिफलाय तद्विध्युपपत्तेरित्यपरः पक्षः। अयमप्यनुपपन्नः। बहूनां गुणानां विधौ वाक्यभेदापत्तेः। न च भिन्नान्येवैतानि वाक्यानीति वाच्यम्। वैश्वानरं द्वादशकपालं निर्वपेदिति विहितस्य

१ क. घ. ङ. च. °पक°। २ क. घ. ङ. च. °होत्रादिश°।

यस्मिञ्जात एतामित्युपसंहारेण वाक्यैकत्वावगमात् । तस्मादंशैरष्टाकपालादिभिरंशी द्वादशकपालः स्तूयते ।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

" वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वाऽग्रिमः ।
कर्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि ॥
जाते यस्मिन्निष्टिमेतां निर्वपेत्तस्य पूतता ।
तच्चेप्सितं पितुस्तेन पिता तत्र प्रवर्तते " इति ॥

काम्येष्टिकाण्डे वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति प्रकृत्य श्रूयते— " यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति " इति । तत्र पितुः प्रबुद्धस्य कर्तृत्वं न तु मुग्धस्य पुत्रस्य । ततोऽनुष्ठानफलयोर्वैयधिकरण्यपरिहाराय पितुरेव पूतत्वादिफलमिति चेत्, मैवम् । यस्मिञ्जाते निर्वपति स पूत इति वाक्येन फलस्य पुत्रसंबन्धावगमात् । न चात्र निष्फलस्य पितुः( तुर )प्रवृत्तिरिति वाच्यम् । पुत्रनिष्ठपूतत्वादेरीप्सितत्वेन स्वफलबुद्ध्या प्रवृत्तिसंभवात् । तस्मात्पुत्रस्य पूतत्वादिकम् ।

तत्रैवान्यच्चिन्तितम्——

" जन्मानन्तरमेवेष्टिर्जातकर्मणि वा कृते ।
निमित्तानन्तरं कार्यं नैमित्तिकमतोऽग्रिमः ॥
जातकर्मणि निर्वृत्ते स्तनप्राशनदर्शनात् ।
प्रागेवेष्टौ कुमारस्य विपत्तेरूर्ध्वमस्तु सा " इति ॥

पुत्रजन्मनो वैश्वानरेष्टिनिमित्तत्वान्नैमित्तिकस्य कालविलम्बायोगाज्जन्मानन्तरमेवेष्टिरिति चेन्मैवम् । स्तनप्राशनं तावज्जातकर्मानन्तरं विहितम् । यदि जातकर्मणः प्रागेव वैश्वानरेष्टिर्निरुप्येत तदा स्तनप्राशनस्यात्यन्तविलम्बनात्पुत्रो विपद्येत । तथा सति पूतत्वादिकमिष्टिफलं कस्य स्यात् । तस्मान्न जन्मानन्तरं किंतु जातकर्मण ऊर्ध्वं सेष्टिः ।

तत्रैवान्यच्चिन्तितम्—

" जातकर्मानन्तरं स्यादाशौचेऽपगतेऽथवा ।
निमित्तसंनिधेराद्यः कर्तृशुद्ध्यर्थ उत्तरः " इति ॥

---

१ ख. °द्ध्यर्थमुत्त° ।

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

यद्यपि जातकर्मानन्तरमेव तदनुष्ठाने निमित्तभूतं जन्म संनिहितं भवति तथाऽप्यशुचिना पित्राऽनुष्ठीयमानमङ्गविकलं भवेत्। जातकर्मणि तु विपत्तिपरिहाराय तात्कालिकी शुद्धिः शास्त्रेण दर्शिता। ततो मुख्यसंनिधेरवश्यंबाधितत्वाच्छुद्धिलक्षणाङ्गवैकल्यं वारयितुमाशौचादूर्ध्वमिष्टिं कुर्यात्।

द्वादशाध्यायस्य तृतीयपादे चिन्तितम्—

"वैश्वानरे पाथिकृते साहित्यं वा विकल्पनम्।
साहित्यं स्याददृष्टाय विकल्पः स्यात्समाधये" इति॥

विहितयोर्दर्शपूर्णमासयोः कदाचिदननुष्ठाने प्रायश्चित्तं श्रूयते—"वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य" इति, "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्" इति च। अत्र पूर्वदृष्टप्रयोजनाभावाददृष्टार्थमुभयं समुच्चित्यानुष्ठेयमिति चेन्न। यज्ञवैगुण्यसमाधेर्दृष्टप्रयोजनत्वादन्योन्यनिरपेक्षयोर्द्वयोर्व्रीहियववद्विकल्पः। एवमृग्यजुःसामवेदेषु विहितस्याननुष्ठानान्निषिद्धस्याऽऽचरणाद्वा यद्यज्ञवैगुण्यं तस्य वैगुण्यमात्रस्य सर्वस्य समाधानाय निरपेक्षाणि प्रायश्चित्तानि विहितानि—"भूः स्वाहेति गार्हपत्ये जुहुयात्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्, भूर्भुवः सुवः स्वाहेत्याहवनीये जुहुयात्" इति। तान्येतानि विकल्प्यन्ते[1]। प्रत्येकं वैगुण्यसमाधानक्षमत्वात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १॥

**इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमः प्रपाठकः॥ ५॥**

---

१ क. घ. ङ. च. विक०।

( अथ प्रथमाष्टके षष्ठः प्रपाठकः )।

( तत्र प्रथमोऽनुवाकः )।

हरिः ॐ।

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च। बृहस्पतिप्रसूतो यजमान इह मा रिषत्। आज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मꣳ सत्यौजाः सहोऽसि सहमानमसि सहस्वारातीः सहस्वारातीयतः सहस्व पृतनाः सहस्व पृतन्यतः। सहस्रवीर्यमसि तन्मा जिन्वाऽऽज्यस्याऽऽज्यमसि सत्यस्य सत्यमसि सत्यायुः ( १ ) असि सत्यशुष्ममसि सत्येन त्वाऽभि घारयामि तस्य ते भक्षीय पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय ( २ ) धर्त्राय गृह्णामि विशे त्वा यन्त्राय धर्त्राय गृह्णामि सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा गृह्णामि रायस्पोषाय त्वा गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामि भूरस्माकꣳ हविर्देवानामा-

(प्राधान्येनाऽऽज्यग्रहणानुमन्त्रणमन्त्राः)

शिषो यजमानस्य देवानां त्वा देवताभ्यो
गृह्णामि कामाय त्वा गृह्णामि (३) ॥

(सत्यायुरोजसे यन्त्राय त्रयस्त्रिꣳशच्च)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ प्रथमकाण्डे षष्ठः प्रपाठकः)।

(तत्र प्रथमोऽनुवाकः)।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

षष्ठे प्रपाठक ऐष्टिकयाजमानमन्त्रास्तद्व्राह्मणानि चाऽऽम्नायन्ते। तद्विशेष-स्तु विनियोगसंग्रहे दर्शितः—

"षष्ठे प्रश्ने याजमानकाण्डे द्वादश वर्णिताः।
अनुवाकाः षट्सु मन्त्रा ब्राह्मणं पञ्चसूदितम् ॥
अन्ते याज्याः क्रमेणाऽऽज्यग्रहणाद्यनुमन्त्रणम्।
आज्यग्रहो मुख्यहोमो भक्ष्यः शेषाहुतिस्तथा ॥
एतेऽनुमन्त्रणीयार्था मन्त्रा आप्ययनादिगाः।
सूर्योपस्थित्यादिमन्त्रा ब्राह्मणे तु विभज्यते ॥
परिग्रहो देवतानामायुधानां च संभृतिः।
द्वादशद्वंद्वसंपत्तिर्हविषां सादने विधिः ॥
विधिराश्रावणादीनां याज्या इत्यनुवाकगाः" इति ॥

तत्र प्रथमानुवाक आज्यग्रहणानुमन्त्रणमन्त्राः प्राधान्येनाभिधीयन्ते।

कल्पः—"सं त्वा सिञ्चामीति तत्सꣳ सिञ्चेदभि वा मन्त्रयेत" इति। तदिति स्कन्नमाज्यमुच्यते। यस्याऽऽज्यमनुत्पूतꣳ स्कन्देदित्यादिना स्कन्दनस्य प्रकृतत्वा-त्। यदि शुद्धप्रदेशे स्कन्देत्तदानीमनेन मन्त्रेण पुनः पात्रे प्रक्षिपेत्। अशुचि-प्रदेशे स्कन्दने त्वभिमन्त्रणम्।

---

१ ख. च. °स्तदब्रा°। २ ख. °षविनियोगस्तु।

पाठस्तु—

**सं त्वा सिञ्चामीति** । हे स्कन्नाज्य बृहस्पतिमेरितोऽहं प्रजादीन्संपादयेयम् । त्वामनेन यजुषा मन्त्रेण पात्रे सम्यक्सिञ्चामि । इह कर्मणि यजमानः स्कन्दनापराधेन मा रिषन्मा हिंस्यताम् । अयं मन्त्र आध्वर्यवः । अतो यजमानस्यान्यत्वेनोक्तिरविरुद्धा ।

कल्पः—" आज्यमसि सत्यमसीत्यध्वर्युर्यजमानश्चाऽऽनिमील्यावेक्ष्यानुच्छ्वसन्तावाज्यमवेक्षेते " इति ।

पाठस्तु—

**आज्यमसीति** । अत्र वैश्वानरमित्यादिभिश्चतुर्भिः पदैः प्रत्येकमन्वेतुमसीति पदमनुवर्तनीयम् । तथा सति तान्येतानि द्वाविंशतिर्वाक्यानि संपद्यन्ते । तैरेतैर्वाक्यैराज्यं प्रशस्यते । अजिधातोर्गत्यर्थादुत्पन्न आज्यशब्दः । आज्यमसि प्रापकमसि । घृतेन हि होमाधारो ज्वलन्नग्निः प्राप्यते । सद्विद्यमानं कर्मफलं तदर्हतीति सत्यम् । प्रसिद्धं ह्याज्यस्य कर्मफलसाधनत्वम् । सत्यस्याध्यक्षमसि सतां कर्म सत्यम् । ज्योतिष्टोमे प्रवर्तमाना यजमानसप्तदशा ऋत्विजः सन्तः । ते हि परस्परं द्रोहशङ्कामपनेतुं तानूनप्त्रसंज्ञकमाज्यं स्पृशन्ति । सोऽयं स्पर्शः सतां कर्म, तस्य कर्मणोऽध्यक्षं स्वामि । हविरसि प्राधान्येन हूयमानमसि । पुरोडाशादीनां हविषां नाशेऽप्याज्येनैव तत्कर्मशेषसमापनात्प्राधान्यं द्रष्टव्यम् । विश्वेषां नराणां संबन्धि वैश्वानरम् । विश्वेषां देवानां संबन्धि वैश्वदेवम् । प्रसिद्धो भोज्यत्वेन हविष्ट्वेन चोभयसंबन्धः । उत्पूतशुष्ममुत्पवनेनोद्दीपितबलम् । सत्यौजाः सत्यबलम् । आज्यस्य हि बलमवितथम् । अग्न्युद्दीपनस्य प्रत्यक्षत[1] एव दृश्यमानत्वात् । सहः शत्रूणामभिभवनसमर्थम् । सहमानं निरन्तरं तदभिभवेनैव वर्तमानम् । तादृक्त्वं सहस्वारातीरस्मदमित्रानभिभव । सहस्वारातीयतः, ये तु प्रत्यक्षं शात्रवं कर्तुमशक्ता मनसा शात्रवं कर्तुमिच्छन्ति तानप्यभिभव । सहस्व पृतनाः शत्रुसेना अभिभव । सहस्व पृतन्यतः सेनाः संपादयितुमिच्छतः शत्रूनप्यभिभव । सहस्रवीर्यमसि यथोक्ताभिभवविशेषान्कर्तुं बहुप्रकारसामर्थ्योपेतं त्वमसि । तन्मा जिन्व तत्तादृक्स्वभाव त्वं मां यागद्वारेण प्रीणय । आज्यस्याऽऽज्यमसि लौकिकं यदाज्यं तदुत्पूतशुष्मं न भवति त्वं तूत्पूतशुष्मत्वान्मुख्यमाज्यमसि । सत्यस्य सत्यमसि लौकिकफलसाधनं कृष्यादिकं सत्यं तत्कदा-

१ ख. घ. ङ. च. प्रत्यक्षतः ।

( प्राधान्येनाऽऽज्यग्रहणानुमन्त्रणमन्त्राः )
चिद्वृष्ट्याद्यभावेन व्यभिचारान्न मुख्यं सत्यं त्वं तु कदाचिदप्यव्यभिचारान्मुख्यं सत्यमसि । सत्यायुरसि सत्यभूतमायुरस्मिन्निति सत्यायुः । आज्यनिष्पन्नेन कर्मणा भाविदेहे यदायुः प्राप्यते तन्न व्यभिचरतीत्यायुषः सत्यत्वम् । सत्यशुष्ममसि सत्यबलमसि । अग्न्युद्दीपनबलं सत्यौजःशब्देन पूर्वमुक्तम् । इह तु फलप्रदानबलमुच्यते । सत्येन त्वाऽभिघारयामि तादृशं त्वां चक्षुषा पश्यामीत्यर्थः। तथा च पौरोडाशिककाण्डे समाम्नायते—“ ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि हवींष्यभिघारयति । अथ केनाऽऽज्यमिति । सत्येनेति ब्रूयात् । सत्येनैवैनदभिघारयति ” इति । चक्षुषः सत्यत्वमाधानब्राह्मणे प्रतिपादितम् । “ अनृतं वै वाचा वदति । अनृतं मनसा ध्यायति । चक्षुर्वै सत्यम् । अद्रा३गित्याह । अदर्शमिति । तत्सत्यम् ” इति । तस्य ते भक्षीय तादृशं त्वां भजानि।

**पञ्चानां त्वेति** । कल्पः “ आज्यग्रहणं गृहीतं गृहीतमनुमन्त्रयते पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति चतुर्भिर्जुह्वामष्टभिरुपभृति चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय धर्त्राय गृह्णामि विशे त्वा यन्त्राय धर्त्राय गृह्णामि सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा गृह्णामि रायस्पोषाय त्वा गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामीति चतुर्भिर्ध्रुवायां भूरस्माकꣳ हविर्देवानामाशिषो यजमानस्य देवानां त्वा देवताभ्यो गृह्णामीत्यभिपूर्यमाणामनुमन्त्रयते कामाय त्वा गृह्णामीति ” इति ।

प्राच्यादिषूर्ध्वान्तासु पञ्चसु दिक्षु वर्तमाना वायवः पञ्चसंख्याकाः । ते चाग्निचयनाङ्गेषु मन्त्रेष्वेवमाम्नायन्ते—“ यत्ते रुद्र पुरो धनुस्तद्वातो अनु वातु ते यत्ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते यत्ते रुद्रोत्तराद्धनुस्तद्वातो अनु वातु ते यत्ते रुद्रोपरि धनुस्तद्वातो अनु वातु ते ” इति । यद्वा शरीरमध्ये वर्तमानाः प्राणापानव्यानोदानसमानरूपाः पञ्च वातास्तेषां वातानां यन्त्राय स्वस्वव्यापारेषु नियमनाय धर्त्राय जगद्विधारणकुशलाय हे आज्य त्वां गृह्णामि । ऋतूनां पञ्चत्वमैतरेयब्राह्मणे प्रतिपादितम्—“ द्वादश मासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन ” इति । प्राच्यादीनामूर्ध्वान्तानां दिशां पञ्चत्वं प्रसिद्धम् । पञ्चजनशब्दः समस्तो देवमनुष्यासुररक्षो-

१ ख. समाम्नातम् । २ ख. भक्षयाणि । ३ ख. °माणम° । ४ ख. °शलत्राय ।

गन्धर्वेषु रूढः । ते च देवादयः पञ्चसंख्याकाः । चरुशब्दः पाकाधारभूतां स्थालीमाचष्टे । सा च क्वचित्पञ्चबिलैर्युज्यते । तच्च पुरुषमेधावसाने कल्पसूत्रकार उदाजहार—" पञ्चबिलस्य चरोर्विज्ञायत आज्य आग्नेयः पूर्वस्मिन्बिले, दधन्यैन्द्रो दक्षिणे, शृते प्रतिदुहिनीतमिश्रे वा वैश्वदेवः पश्चिमे, अप्सु मैत्रावरुण उत्तरे, पयसि बार्हस्पत्यो मध्यमे" इति । तस्य पञ्चबिलस्य चरोर्नियमनायेति योज्यम् । ब्रह्मणो ब्राह्मणजातेः । तेजो ब्रह्मवर्चसं तस्य[1] यन्त्राय । क्षत्रियजातेरोजो युद्धसामर्थ्यम् । वैश्यजातेः कृषिवाणिज्यादिषु नियमनम् । सुवीर्यं सर्वेषां स्वस्वव्यापारेषु सामर्थ्यातिशयः । सुप्रजास्त्वं शोभनापत्यत्वम् । रायस्पोषो धनपुष्टिः । ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः । ब्रह्मणस्त्वा तेजस इत्यत्र शिष्टाङ्गीकृतसाधुवेषरूपं [ तेजो ] द्रष्टव्यम् । भूरस्माकमित्याद्यो मन्त्रः । हविर्देवानामिति द्वितीयः । आशिषो यजमानस्येति तृतीयः । अवशिष्टश्चतुर्थः । हे आज्य त्वमस्माकं श्रेयसे भव । देवानां हविर्भव । यजमानस्य या आशिषस्तद्रूपं भव । देवानां तर्पकं त्वां देवार्थं गृह्णामि । आपस्तम्बस्य तु भूरस्माकमित्यादिरेक एव मन्त्रः । हे आज्य हविर्भागिन्यो देवतास्त्वां यथा यथा कामयन्ते तथाविधकामाय त्वां गृह्णामि ।

अत्र विनियोगसंग्रहः—

" स्याद्दर्शपूर्णमासस्थं काण्डं तु यजमानगम् ।
षष्ठः प्रश्नस्तत्र सं त्वा स्कन्नाज्यं प्रक्षिपेत्स्रुचि ॥ १ ॥
आज्यमाज्यमवेक्षेत पञ्चानां त्वा चतुर्दश ।
स्रुक्स्वाज्यमन्त्रणे मन्त्रा इति मन्त्रास्तु षोडश ॥ २ ॥ " [इति] ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः ) ।

ध्रुवोऽसि ध्रुवोऽहꣳ संजातेषु भूयासं धीरश्चेता वसुविद्उग्रोऽस्युग्रोऽहꣳ संजातेषु भूयास-

---

१ ख. तस्मै तस्य ।

(हविर्होमानुमन्त्रणम्)

मुग्रश्चेत्ता वसुविदभिभूरस्यभिभूरहꣳ संजातेषु भूयासमभिभूश्चेत्ता वसुविद्गुनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः। इन्धानास्त्वा सुप्रजसः सुवीरा जोग्जीवेम बलिहृतो वयं ते। यन्मे अग्ने अस्य यज्ञस्य रिष्यात् (१) यद्वा स्कदादाज्यस्योत विष्णो। तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे। भुर्भुवः सुवरुच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते। अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्वामर्त्यस्य ते होतमूर्धन्ना जिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविश वागस्यैन्द्री संपत्नक्षयणी (२) वाचा मेन्द्रियेणाऽऽविश वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतामग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमग्नेरहं देवयज्ययाऽन्नादो भूयासम् (३) दब्धिरस्यदब्धो भूयासममुं दभेयमग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमिन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयास-

( हविर्होमानुमन्त्रणम् )

मिन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासं महे- न्द्रस्याहं देवयज्यया जेमानं महिमानं गमेय- मग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयम् ॥ ( ४ )

( रिष्यात्सपत्नक्षयंण्यन्नादो भूयास२ षट्त्रि२शच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः )।

प्रथमानुवाके हविर्ग्रहणानुमन्त्रणमुक्तं, द्वितीयानुवाके हविर्होमानुमन्त्रणं वक्तव्यम् । तत्र हूयमानस्य हविषो बहिःस्कन्दननिवारणाय परिधीयमानानां परिधीनामनुमन्त्रणमनुवाकादावुपवर्ण्यते।

ध्रुवोऽसीति । कल्पः–" परिधीन्परिधीयमानाननुमन्त्रयते ध्रुवोऽसि ध्रु- वोऽह२ सजातेषु भूयासं धीरश्चेत्ता वसुविदिति मध्यममुग्रोऽस्युग्रोऽह२ सजातेषु भूयासमुग्रश्चेत्ता वसुविदिति दक्षिणमभिभूरस्यभिभूरह२ सजातेषु भूयासमभिभू- श्चेत्ता वसुविदित्युत्तरम् " इति ।

हे मध्यपरिधे त्वं ध्रुवः स्थिरोऽसि । रक्षोभिरविचाल्यमानत्वात् । अत एवाऽऽ- म्नायते–" परिधीन्परिदधाति रक्षसामपहत्यै " इति । तस्य ध्रुवस्य तवानुम- न्त्रणेनाहमपि सजातेषु ज्ञातिषु ध्रुवः स्थिरो भूयासम् । किंच धीरो धैर्यवान्, चेत्ता रक्षोपहननस्य ज्ञाता, वसुविद्वसुनो लब्धा भूयासम् । हे दक्षिणपरिधे त्वं रक्षांस्यपहन्तुमुग्रोऽसि । तवानुमन्त्रणेनाहमप्युग्रो भूयासम् । ज्ञातयो यथा मदप्रत- तिवादिनो भवन्ति तथा संपादनमुग्रत्वम् । किंच वैरिणोऽपहन्तुमप्युग्रो भूयासम् । हे उत्तरपरिधे त्वं रक्षसामभिभविताऽसि । तवानुमन्त्रणेनाहमपि ज्ञातीनां वैरिणां चाभिभविता भूयासम् । एतदीयस्य ब्राह्मणस्य समीपवर्तित्वेनात्यन्तबुद्धिविच्छे- दाभावान्नात्र ब्राह्मणमुदाहृत्य व्याक्रियते किंतु पाठक्रमेणैवोदाहृत्य व्याकरिष्यते ।

---

१ ख. °वाक आज्यग्रह° । २ ख. °न्तवि° । ३ ख. °त्य दशमानुवाके व्या° ।

( हविर्होमानुमन्त्रणम् )

युनज्मीति । कल्पः—"अथाग्निं योगेन युनक्ति युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेद इति" इति ।

हे जातवेदो दैव्येन देवयोग्येन ब्रह्मणा मन्त्रेण त्वां युनज्मि अस्मिन्कर्मणि युक्तं करोमि । किमर्थम् । इदं हविर्वोढुम् ।

इन्धाना इति । कल्पः—"समिधोरभ्याधीयमानयोर्जपति—"इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं त इति" इति ।

हे जातवेदस्त्वामिन्धाना ज्वलयन्तो वयं सुप्रजसः शोभनापत्योपेताः सुवीराः शोभनभृत्योपेता ज्योक्चिरं जीवेम । किं कुर्वन्तः । तव बलिं पूजामुपहरन्तः ।

यन्मे अग्न इति । कल्पः—"अथान्तर्वेदि हवींष्यासन्नान्यभिमन्त्रयते यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो । तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थ इति" इति ।

हेऽग्नेऽस्य मम यज्ञस्य संबन्धि यद्बर्हिरादिकं रिष्यान्नश्येद्रक्षःप्रभृतिभिर्विनाशितं स्यात्, आज्यस्योताऽऽज्यस्यापि संबन्धि यद्वा यदल्पं बिन्दुजातं जोह्वादिकं स्कन्दादधः पतेत्, हे विष्णो व्यापक तेन नष्टेन स्कन्नेन च वैरिणं हन्मि । यः सपत्नो मारयितुमशक्य एनं दुर्मरायुं सपत्नं निर्ऋत्याः पापदेवताया उपस्थ उत्सङ्ग आदधामि स्थापयामि ।

भूर्भुव इति । कल्पः—"अथ भूर्भुवः सुवरित्याग्निहोत्रमेताभिर्व्याहृती(ति)भिरुपसादयेत् । अथ वै भवति दर्शपूर्णमासावालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेत् । अथ वै भवति चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेत्" इति ।

भूरादयस्त्रयः शब्दा लोकत्रयवाचिनः । एतानि हवींषि लोकत्रयरूपाणीति स्तूयन्ते । इदं व्याहृतित्रयं यद्यपि याजमानकाण्डे पठितं तथाऽपि प्रत्यक्षेण ब्राह्मणवाक्येनाऽऽध्वर्यवक्रियायां विनियुक्तत्वादुत्कृष्टव्यम् ।

उच्छुष्म इति । कल्पः—"इध्ममभ्याधीयमानमनुमन्त्रयत उच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्वेति" इति ।

हेऽग्ने यजमानायोच्छुष्म एधि उद्भूतबलो भव, यजमानकार्येष्वाविष्कृतबलो भव । अभिदासत उपक्षयते शत्रवे निशुष्म एधि न्यग्भूतबलो भव । उक्तक्रमेण यजमानमनुग्रहीतुं शत्रुं च निग्रहीतुं चतुर्भिः संबोधनैरग्निं प्रोत्साहयति । हेऽग्नेऽ-

१ ख. °जामाह° । २ ख. °तुभिर्विशेषणैर° ।

ज्ञ्नादिगुणयुक्त देवेद्ध देवैर्दीप्त मन्विद्ध मनुना दीप्त । एतच्च पदद्वयं निविद्ब्राह्मणेन व्याख्यातम्—“ देवेद्ध इत्याह देवा ह्येतमैन्धत मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य ऐन्ध ” इति । मन्द्रजिह्व मन्द्रा हर्षहेतुर्जिह्वा यस्येति विग्रहः ।

अमर्त्यस्येति । कल्पः—“ प्रवरं प्रव्रियमाणमनुमन्त्रयते—अमर्त्यस्य ते होतर्मूर्धन्ना जिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति ” इति ।

हे होतर्देवानामाह्वातर्मरणरहितस्य तव मूर्धनि घृतादिकं क्षारयामि । किमर्थम् । यजमानस्य धनपुष्टिशोभनापत्यशोभनवीर्यार्थम् ।

मनोऽसीति । कल्पः—“ स्रौवमाघारमाघार्यमाणमनुमन्त्रयते मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविशेति ” इति ।

हे स्रौवाघार त्वं मनोऽसि प्रजापतिसंबन्धि चासि । मनसा प्रजापतिं ध्यायताऽध्वर्युणा निष्पाद्यमानत्वात् । अत्र भूतशब्दः प्रजापतिसृष्टं यज्ञमाचष्टे । प्राजापत्यो यज्ञ इति ब्राह्मणेन व्याख्यास्यमानत्वात् । तेन भूतेन प्रजापतिसृष्टेन यज्ञेन तत्साधनेन मनसा च सह हे स्रौवाघार मामाविश ।

वागस्येति । कल्पः—स्रुच्यमाघारमाघार्यमाणमनुमन्त्रयते वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाऽऽविशेति ” इति ।

हे स्रुच्याघार त्वं वागसि । वाचा मन्त्रमुच्चारयताऽध्वर्युणा निष्पाद्यमानत्वात् । कीदृशी वाक् । ऐन्द्रीन्द्रेण व्याकृतत्वात् । तच्चैन्द्रवायवग्रहब्राह्मणे समाम्नातम्—“ तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् ” इति । सा च वाक्सपत्नक्षयणी वैरिघातिनी । स्रुच्याघारमन्त्ररूपाया वाचः सपत्नघातित्वं तद्ब्राह्मणेन सूचितम्—“ अहुतो यज्ञो यज्ञपतेरित्याहानार्त्यै ” इति । तादृश्या वाचेन्द्रसृष्टेन चक्षुरादीन्द्रियेण च सह हे स्रुच्याघार मामाविश ।

वसन्तमिति । कल्पः—“प्रयाजानामिष्टंमिष्टमनुमन्त्रयते वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतामिति ” इति ।

ऋतुवाचकैर्वसन्तादिशब्दैः समिद्यागादिपञ्चप्रयाजाभिमानिदेवता विवक्ष्यन्ते । तांश्च वसन्तादीनहं तोषयामि । ते च तुष्टा मां तोषयन्तु ।

---

१ ख. °णे व्या° । २ ख. °धकेन । ३ ख. °ष्टम° ।

( हविर्होमानुमन्त्रणम् )

**अग्नीषोमयोरिति** । कल्पः—" आज्यभागाविष्टावनुमन्त्रयते—अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमिति " इति ।

उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायेति श्रवणादग्नीषोमावाज्यभागयोर्देवौ तयोः संबन्धिनी देवयज्या समन्त्रकाज्यभागाहुतिस्तयाऽध्वर्युनिष्पादितया यजमानोऽहं चक्षुष्मांश्चक्षुर्युक्तो भूयासम् । युक्तं चैतत् । " चक्षुषी वा एते यज्ञस्य यदाज्यभागौ " इति ब्राह्मणे चक्षुष्ट्वेन निरूपितत्वात् ।

**अग्नेरहमिति** । कल्पः—" अग्निमिष्टमनुमन्त्रयते—अग्नेरहं देवयज्ययाऽन्नादो भूयासमिति " इति ।

दर्शपूर्णमासयोराद्यस्य प्रधानयागस्याग्निर्देवता । स चान्नभक्षकः । " अग्निर्वै देवानामन्नादः " इति श्रुतेः । अतस्तद्यागेन यजमानस्यान्नादत्वमुचितम् ।

**दब्धिरसीति** । कल्पः—"उपांशुयाजमिष्टमनुमन्त्रयते दब्धिरस्यदब्धो भूयासममुं दभेयमिति " इति ।

अमुमित्यत्र यं यजमानो द्वेष्टि तं मनसा ध्यायतीति । उपांशुयाजस्य प्रजापतिर्विष्णुरग्नीषोमौ वा विकल्पेन देवताः । हे उपांशुयाजदेव त्वं दब्धिरसि अस्माभिर्द्वेष्यस्य त्वं हिंसकोऽसि । त्वत्प्रसादादहं वैरिभिरहिंसितो भूयासम् । अमुं वैरिणं दभेयं मारयेयम् ।

**अग्नीषोमयोरिति** । कल्पः—" अग्नीषोमाविष्टावनुमन्त्रयते—अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमिति " इति ।

पौर्णमास्यां तृतीययागस्याग्नीषोमौ देवता(ते) । तयोश्च वृत्रहत्यानिमित्तं त्वष्टा हतपुत्र इत्यनुवाके प्रपञ्चितम् । अतस्तद्यागेन यजमानस्य वैरिहन्तृत्वं युक्तम् ।

**इन्द्राग्नियोरिति** । कल्पः—" इन्द्राग्नी इष्टावनुमन्त्रयते—इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमिति " इति ।

अमावास्यायामसोमयाजिनः सांनाय्याभावे द्वितीयपुरोडाशस्येन्द्राग्नी देवता(ते) । तत्रेन्द्रानुग्रहाद्यजमानस्येन्द्रियोपेतत्वमग्न्यनुग्रहाच्चान्नादत्वम् ।

**इन्द्रस्याहमिति** । कल्पः—" इन्द्रमिष्टमनुमन्त्रयते—इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासमिति " इति ।

सांनाय्यस्येन्द्रो देवता तत्प्रसादादिन्द्रियावित्वम् ।

**महेन्द्रस्येति** । कल्पः—" महेन्द्रमिष्टमनुमन्त्रयते महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमिति " इति ।

केषांचित्सामान्यस्य महेन्द्रो देवता । तथा चाऽऽम्नायते—" एषां वै भूतश्रियः शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवता " इति । तत्रेन्द्रशब्दार्थप्रयुक्त्या यजमानस्य जेतृत्वप्राप्तिः । महच्छब्दार्थप्रयुक्त्या यजमानस्य विद्यैश्वर्यादिगुणैर्महत्त्वप्राप्तिः ।

अग्नेः स्विष्टकृत इति । कल्पः—" स्विष्टकृतमिष्टमनुमन्त्रयते—अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयमिति " इति ।

कश्चिदग्निः केनचिन्निमित्तेन रुद्रनामधेयमलभत । स च कदाचिद्देवैरास्तुत्या तोषितः पूर्वमिष्टानां यागानां वैगुण्यं परिहृत्य स्विष्टत्वं कृतवान् । तथा च ब्राह्मणमाम्नायते—" देवा वै यज्ञाद्रुद्रमन्तरायन्त स यज्ञमविध्यत्तं देवा अभि समगच्छन्त कल्पतां न इदमिति तेऽब्रुवन्स्विष्टं वै न इदं भविष्यति यदिमः राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वम् " इति । " यद्यग्ने स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रः समर्धयति" इति च । स्विष्टकृच्छब्दस्य निर्वचनं सौत्रामण्यां मैत्रावरुणप्रैषमन्त्रे विस्पष्टमाम्नायते—" देवो अग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत् । स्विष्टं कुर्वन्स्विष्टकृत् । स्विष्टमद्य करोतु नः " इति । तत्राग्निशब्दार्थप्रयुक्तं यजमानस्याऽऽयुष्मत्त्वम् । अत एव मन्त्रान्तरमेवमाम्नायते—" अग्निरायुष्मान्स वनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि " इति । स्विष्टकृच्छब्दार्थप्रयुक्त्या यज्ञप्रतिष्ठाप्राप्तिः । यदाऽयमग्निः स्विष्टं करोति तदा यजमानः सगुणेन संपूर्णेन यज्ञेन प्रतिष्ठां फलप्राप्तिलक्षणां लभते ।

अथ विनियोगसंग्रहः—

" ध्रुवोऽसीति त्रिभिर्मन्त्रैः परिधिस्थापनं क्रमात् ।
भुवामियोग इन्धानाः सविधोरनुमन्त्रणम् ॥ १ ॥
यन्मे हविर्मन्त्रयेत भूस्त्रिभिः सादनादिभिः ।
उपहूतो मन्त्रयेताऽऽसन्नमन्यं प्रभृतिं तथा ॥ २ ॥
सोमाधारं ध्रुवोऽसीति कुम्भाधारं तु प्राणीति ।
वसन्तमृत्वाभिर्मन्त्रैः प्रयाजांस्तांश्च मन्त्रयेत् ॥ ३ ॥
अग्नीषोमेत्याज्यभागावग्नेरित्यग्नियागकम् ।
दब्धिरुपांशुयाजस्य स्विष्टमसीति मन्त्रणम् ॥
अनुवाके द्वितीयेऽस्मिन्मन्त्राः षड्विंशतीरिताः ॥ ४ ॥ इति ।

१ ख. °भिः स्थापये° । २ ख. प्रकरं ।

(हविर्होमानुमन्त्रणम्)

अथ मीमांसा।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

"स्याद्वसन्तादिमन्त्राणां क्रमो नो वाऽन्यथा भवेत्।
शाखान्तरे व्यत्ययेन न क्रमो नियतोऽत्र हि" इति।

दर्शपूर्णमासयोर्याजमानकाण्डे प्रयाजानुमन्त्रणमन्त्रा आम्नाताः—"वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामि" इत्यादयः। तेषां नियतः क्रमोऽभ्युपगन्तव्यः। कुतः। अन्येष्वाग्नेयोपांशुयाजाद्यनुमन्त्रणमन्त्रेषु नियतक्रमदर्शनेनात्रापि क्रमनियमस्य बुद्धिस्थत्वादिति चेन्मैवम्। अत्र नियामकाभावात्। न तावदत्र पाठो नियामकः। वसन्तग्रीष्मवर्षाशरद्धेमन्तमन्त्राणामनेन क्रमेण तैत्तिरीयशाखापठितानां शाखान्तरे व्यत्ययेन पाठदर्शनात्। नाव यवागूपाकवदर्थो नियामकः। वसन्तमन्त्रेण यस्य कस्यचित्प्रयाजस्यानुमन्त्रणेऽप्यनुपपत्त्यभावात्। नाप्यत्र लिङ्गं नियामकम्। वसन्तमन्त्रे समिद्यागैकविषयस्य विशेषसामर्थ्यस्याद्दर्शनात्। तस्मादत्र नास्ति नियतः क्रमः।

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

+"उपांशुयजतेर्नाङ्गं दब्धिमन्त्रोऽङ्गताऽथवा।[3]
साधारणत्वाल्लिङ्गादेर्मानाभावादनङ्गता॥
मन्त्राणां कर्मणां चात्र क्रमेणाऽऽम्नानमीक्ष्यते।
प्रक्रियावत्क्रमो मानं यथासंख्यं ततोऽङ्गता॥
क्रमः समानदेशत्वं पाठादर्थाच्च पाठतः।
यथासंख्यं संनिधिश्च यथासंख्यमुदाहृतम्॥
शुन्धध्वमिति सांनाय्यपात्राङ्गं संनिधेर्मतम्।
पशुधर्मोऽर्थसादेश्यादग्नीषोमीयगो भवेत्" इति॥

दर्शपूर्णमासयोर्याजमाने मन्त्रकाण्डे कश्चिन्मन्त्र आम्नायते—दब्धिरस्यदब्धो भूयासममुं दभेयम्" इति। अस्य मन्त्रस्योपांशुयाजाङ्गतायां श्रुति-

+ जैमिनीयन्यायमालाविस्तरे तु—"दब्धिर्नामेति मन्त्रोऽङ्गमुपांशुर्यजतेर्न वा" इति पाठः।

१ क. घ. ङ. च. °न च क्र°। २ ख. °जने नाङ्ग°। ३ ख. °न्त्रो गतोऽथ°।

वाक्ये न विद्येते । ब्राह्मणे ×विनियोग आम्नायार्थविवरणस्यैवाऽऽम्नातत्वात् । "एतया वै दब्ध्या देवा असुरानदभ्नुवन्तयैव भ्रातृव्यं दभ्नोति" इति ब्राह्मणम् । दब्धिर्घातुकमायुधम् । आग्नेयाग्नीषोमीययोरप्यनिष्टनिवारकत्वाल्लिङ्गं साधारणम् । प्रकरणं च त्रयाणामेकमेव । ततो मानाभावादयं मन्त्रो नोपांशुयाजाङ्गमिति प्राप्ते ब्रूमः—आध्वर्यवकाण्ड आग्नेयोपांशुयाजाग्नीषोमीयकर्माणि क्रमेणाऽऽम्नातानि । याजमाने च काण्डे तद्विषया मन्त्राः क्रमेणाऽऽम्नाताः—"अग्नेरहं देवयज्ययाऽन्नादो भूयासं दब्धिरस्यदब्धो भूयासममुं दभेयमग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्" इति । तत्र यथा वाक्यद्वयानुसंधानसंपन्नं प्रकरणं पृथक्प्रमाणं तथा प्रकरणद्वयानुसंधानसंपन्नः क्रमः कुतो न मानं स्यात् । न चास्य प्रकरणेऽन्तर्भावः । द्वयोर्वाक्ययोरिव प्रकरणयोरेकवाक्यत्वाभावात् । तस्मात्क्रमप्रमाणेन[4] मध्यवर्तिन उपांशुयाजस्य मध्यवर्ती मन्त्रोऽङ्गम् । समानदेशत्वं क्रम इति क्रमस्य स्वरूपम् । तच्च द्विविधं पाठकृतमर्थकृतं च । पाठकृतमपि द्विविधं यथासंख्यं संनिधिश्चेति । तयोराद्यस्य दब्धिमन्त्र उदाहरणम् । शुन्धध्वं दैव्याय कर्मण इत्ययं मन्त्रः शोधनीयेषु वस्तुषु साधारणो भासते । तत्र सांनाय्यपात्राणि कुम्भीशाखापवित्रादीन्यनन्तरेषु मातरिश्वन इत्यादिमन्त्रेष्ववभासन्त इति संनिधिना तत्पात्रप्रोक्षणे शुन्धध्वमिति मन्त्रो विनियुज्यते । अनुष्ठानसादेश्यात्पशुधर्माणामग्नीषोमीयाङ्गत्वम् । तदेवं क्रमस्य त्रैविध्यं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ) ।

**अग्निर्मा दुरिष्टात्पातु सविताऽघशꣳसाद्यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषꣳ सुरूपव-**

---

× न्यायमालाविस्तरे तु—"विनियोगमनाम्नायार्थ" इति पाठः ।

१ क. ब्राह्मणो । २ ख. °योगमाम्ना° । ३ ख. °यार्थान्तरेणास्यै° । ४ क. घ. ङ. च. °न प्रकरणेन म° ।

( भक्ष्यस्येडादिभागस्यानुमन्त्रणम् )

षवर्ण एहीमान्भन्द्रान्दुर्या॑ अभ्येहि मामनुव्रता न्यु शीर्षाणि मृड्ढ्वमिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवम् ( १ ) तेऽशीय सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञो दिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान्राय उत यज्ञाः सचन्तामस्मासु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी जुष्टिरसि जुषस्व नो जुष्टा नः ( २ ) असि जुष्टिं ते गमेयं मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम्। ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोप दसत्प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वान्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोके ( ३ ) ॥

( उपहवं जुष्टा नस्त्वा षट् च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ प्रथमकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ) ।

द्वितीयानुवाके हविरनुमन्त्रणमुक्तम् । तृतीयानुवाके भक्षस्येडादिभागस्यानुमन्त्रणमुच्यते ।

**अग्निर्मेति** । कल्पः " प्राशित्रेऽवदीयमाने जपति अग्निर्मा दुरिष्टात्पातु सविताऽघशंस्मादिति " इति ।

मन्त्रवैकल्येन क्रियावैकल्येन वा यदिष्टं दुरिष्टं तत्तस्माद्दुरिष्टादग्निर्मा पातु । अघशंसात्पापरूपेरसुरादेः सविता मां पातु ।

**यो मेऽन्तीति** । कल्पः—यजमानभागे यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषमिति " इति ।

यजमानभाग इत्यस्यावदीयमाने जपतीति शेषोऽनुवर्तते । यो राक्षसादिर्मान्तिके दूरे वाऽरातीयति शत्रुत्वमिच्छति तं राक्षसादिमेतेन यजमानभागेन जेषं जयेयम् ।

कल्पः—" इडामाह्रियमाणामनुमन्त्रयते सुरूपवर्षवर्ण एहीति मघोनीत्यन्तः " इति ।

सुरूपेति मन्त्रादिः । मघोनीति मन्त्रान्तः ।

पाठस्तु—

**सुरूपवर्षेति** । गोशरीरं(रस्य) धारयित्र्या इडाख्याया देवतायाः संबोधनं सुरूपवर्षवर्ण इति । शृङ्गपुच्छादिकं रूपम् । वर्षं वृष्टिः । वर्णः शुक्लकृष्णकपिलत्वादिः । शोभना रूपवर्षवर्णा यस्याः सा तथोक्ता । शृङ्गादीनामतिदीर्घत्ववक्रत्वादिपरिहारेण दर्शनीयत्वं रूपस्य शोभनत्वम् । वर्षं द्विविधमुदकरूपं घृतरूपं च । तत्रेडा स्वकीयात्पदाद्घृतं वर्षति । तथा च मन्त्र आम्नायते—" इडायाः पदे घृतवति स्वाहा" इति । "मानवी घृतपदी मैत्रावरुणी " इति च । "इडायाः पदं घृतवच्चराचरम् " इति च । तथा ब्राह्मणमप्याम्नायते—"सा यत्र यत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते " इति । वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति " इति च । तदिदं घृतरूपत्वं वर्षस्य शोभनत्वम् । कर्बुरादिसंकीर्णत्वपरिहारेण विस्पष्टं शुक्लकृष्णकपिलत्वादिकं वर्णस्य शोभनत्वम् । तथाविधे हे इडे, इमानस्मदीयान्भद्राञ्शास्त्रोक्तयज्ञसाधनसंपूर्णान्दुर्या-

१ ख. °डामवदीयमानाम° । २ ख. °वर्षादिर्मघो° । ३ ख. °रीरधारिण्या इ° । ४ ख. °ति । " इ° ।

( भक्ष्यस्येडादिभागस्यानुमन्त्रणम् )
न्यज्ञगृहान्प्रत्यागच्छ। "गृहा वै दुर्याः" इति हि श्रूयते। किंच मामभिलक्ष्यानुव्रताऽस्मिन्यज्ञव्रतेऽनुकूला सती, एहि आगच्छ। उशब्दः समुच्चये। अपि च हे इडाविशेषा यूयमस्मदीयानि शिरांसि निमृड्ढ्वं नितरां स्नेहपूर्वकाघ्राणादिना शोधयध्वम्। त एवेडाविशेषा इडादिभिः सूनर्यन्तैः षड्भिर्नामविशेषैः स्पष्टी क्रियन्ते। इडादीनां गोनामविशेषत्वं सप्तमकाण्डे समाम्नातम्—"इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि" [ सं० का० ७ प्र० १ अ० ६ ] इति।

एतेषां प्रदर्शनार्थत्वाद्गमत्यादिकमपि द्रष्टव्यम्। हे जुष्टे प्रिये सेव्ये वा ते जुष्टिं त्वदीयां प्रीतिमशीय प्राप्नुयाम्। हे उपहूत इड एहीत्येवमागमनायास्माभिरनुज्ञातेऽहमपि त उपहवं त्वदीयामनुज्ञामशीय प्राप्नुयाम्। अस्य यज्ञस्य येयमाशीः फलप्रार्थना सा मे सत्या भूयात्। अरेडताऽनादरमकुर्वता मनसा तत्फलं साधयितुं शकेयं त्वत्प्रसादाच्छक्तो भूयासम्। मयाऽनुष्ठितोऽयं यज्ञो निःश्रेणीमिव क्रमेण दिवमारोहतु। केनापि वैकल्यप्रतिबन्धेन भ्रंशो यज्ञस्यानारोहणं, भ्रंशाभावे तु यज्ञ आरोहत्येव। आरुह्य च यस्यां दिवि यज्ञहविर्भाजो निवसन्ति तां दिवं स्वर्गप्रदेशविशेषं गच्छतु। तस्मिन्प्रदेशे गत्वा सभायामुपविष्टा देवा येन मार्गेण हविर्भोजनशालां गच्छन्ति तेनैव मार्गेणायं यज्ञो यज्ञसंबद्धहविर्देवानप्येतु प्राप्नोतु। तेन यज्ञेन तुष्ट इन्द्रोऽस्मास्विन्द्रियं यज्ञान्तरानुष्ठानाय चक्षुरादिपाटवं दधातु स्थापयतु। तादृशानस्मान्रायो यज्ञसाधनानि धनानि यज्ञा उत करिष्यमाणा यज्ञा अपि सचन्तामाश्रयन्ताम्। आशिषस्तद्यज्ञफलान्यस्मासु सन्तु। सा तादृशी त्वं नोऽस्मान्प्रति सुप्रतूर्तिः सुष्ठु प्रकर्षेण शत्रूणां हिंसिका मघोनी धनवती च भव।

**जुष्टिरसीति**। कल्पः—"अवान्तरेडां प्राश्यमानामनुमन्त्रयते जुष्टिरसि जुषस्व नो जुष्टा नोऽसि जुष्टिं ते गमेयमिति" इति।

हेऽवान्तरेडे त्वं जुष्टिरसि प्रीतिरूपाऽसि। नोऽस्माञ्जुषस्व प्रीणय। नोऽस्माभिर्जुष्टाऽसि सेविताऽसि। ते जुष्टिं त्वदीयां प्रीतिं गमेयं प्राप्नुयाम्।

**मनो ज्योतिरिति**। कल्पः—"अथान्तर्वेद्याङ्गिर्मार्जयते मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तामिति" इति।

---

१ ख. °श्रेणिमि°। २ ख. °जो देवा नि°।

( भक्षयस्येडादिभागस्यानुमन्त्रणम् )

मनो ज्योतिर्मननीयोऽयमग्निस्तत्तदाहुतिष्वाज्यं सेवताम् । केनापि वैकल्येन विच्छिन्नमिमं यज्ञं वैकल्यपरिहारेण संदधातु । बृहस्पतिः स्वयमेव नोऽस्मदीयमिमं यज्ञं तनुताम् । विश्वे देवा इह यज्ञे मादयन्तां तृप्यन्तु ।

**ब्रध्न पिन्वस्वेति** । कल्पः—" बर्हिषदं पुरोडाशमनुमन्त्रयते ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोप दसदिति " इति ।

यज्ञपुरुषवाची ब्रध्नशब्दः । " यज्ञो वै ब्रध्नः " इति श्रुतेः । हे ब्रध्न पिन्वस्वास्मानृत्विजश्च प्रीणय । ददतो धनं प्रयच्छतो मम देयं धनं मा क्षीयतामपि तूपचीयताम् । यागं कुर्वतो मम सामर्थ्यं मोपदसन्मोपक्षीयतामपि तु पुनः पुनर्वर्धताम् ।

**प्रजापतेरिति** । कल्पः—" अथान्वाहार्यं [1]पचति तमन्तर्वेद्यासन्नमभिमन्त्रयते प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वान्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इति " इति ।

यद्यप्यन्वाहार्यं ऋत्विजां भागस्तथाऽपि तेन प्रजापतेः परितोषात्तद्भागत्वमप्यविरुद्धम् । स च भाग ऊर्जस्वान्बलवान् । तद्भोजिनां बलप्रदत्वात् । पयस्वान्क्षीरवत्स्वादुतमः । यद्वा क्षीरे पच्यमानत्वात्पयस्वान् । अत एव सूत्रकार आह—" क्षीरे भवतीत्येके " इति । हेऽन्वाहार्य[2] त्वं शरीरगतान्प्राणादिवायुभेदान्पाहि । एक एव वायुः शरीरगतः स्थानभेदात्कार्यभेदाच्च प्राणादिनामभिर्भिद्यते ।

स्थानभेदः कैश्चिदुक्तः—

" हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः " इति ॥

उच्छ्वासनिःश्वासौ प्राणव्यापारः । मलमूत्रयोरधःपातनमपानव्यापारः । भुक्तस्यान्नरसस्य शरीरे साम्येन नयनं समानव्यापारः । उद्गारादिरुदानव्यापारः । कृत्स्नासु शरीरनाडीषु व्याप्य प्राणापानवृत्त्योः संधिकाले शरीरस्य बलप्रदानं व्यानव्यापारः । अत एव च्छन्दोगा आमनन्ति—" यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः । अथ यः प्राणापानयोः संधिः स व्यानो यो व्यानः

---

१ ख. पचति । २ ख. °र्य स त्वं ।

( शेषाहुतीनामनुयाजादीनामनुमन्त्रणम् )

सा वाकस्मादप्राणन्ननपानन्वाचमभिव्याहरति। अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाऽग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपान स्तानि करोति" इति। एवं बहुविधव्यापारहेतुत्वात्प्राधान्यं द्योतयितुं व्यानस्य द्विरुक्तिः। यद्वा नागकूर्मादिवायुविशेषाणामत्रान्तर्भावमभिप्रेत्य पुनरप्युक्तिः। हेऽन्वाहार्य त्वमक्षितोऽक्षणोऽसि। अपरिमितो निरुप्य इति ब्राह्मणोक्तेर्दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचतीति सूत्रकारोक्तेश्च। तस्मात्परलोकेऽप्यक्षित्यै त्वां ददामीति शेषः। तेनाभिप्रायेण दीयमानत्वादमुत्र परलोके मम भोगाय मा क्षेष्ठाः क्षयं मा प्राप्नुहि। तस्मादहमप्यमुष्मिँल्लोके त्वां यथेच्छमनुभवामीति शेषः।

अत्र विनियोगसंग्रहः—

"अग्निः प्राशित्रावदानं यो मेऽन्ति स्वामिभागकम्।
इडाद्वयं सुरूपेति जुष्टिरित्यनुमन्त्रयेत्॥ १॥
मनोऽद्भिर्मार्जनं ब्रध्न पुरोडाशं प्रजापतेः।
अन्वाहार्यं मन्त्रयेत मन्त्राः सप्तेह वर्णिताः॥ २॥" इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

[ अथ प्रथमाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः ]।

बर्हिषोऽहं देवयज्यया प्रजावान्भूयासं नराशंसस्याहं देवयज्यया पशुमान्भूयासमग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयमग्नेरहमुज्जितिमनूज्जेषं सोमस्याहमुज्जितिमनूज्जेषमग्नेरहमुज्जितिमनूज्जेषमग्नीषोमयोरहमुज्जितिमनूज्जेषमिन्द्राग्नियोरहमुज्जितिमनूज्जेषमिन्द्रस्याहम् [ १ ] उज्जितिमनूज्जेषं महेन्द्रस्याहमुज्जितिमनूज्जेषमग्नेः स्विष्टकृतोऽहमु-

ज्जितिमनूज्जेषं वाजस्य मा प्रसवेनोद्ग्राभेणोद॑-
ग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणा-
धराꣳ अकः । उद्ग्राभं च निग्राभं च ब्रह्म देवा
अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषू-
चीनान्व्यस्यताम् । एमा अगमन्नाशिषो दोह-
कामा इन्द्रवन्तः ( २ ) वनामहे धुक्षीमहि
प्रजामिषम् । रोहितेन त्वाऽग्निर्देवतां गमयतु
हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो
देवतां गमयतु वि ते मुञ्चामि रशना वि
रश्मीन्वि योक्त्रा यानि परिचर्तनानि धत्ताद-
स्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान्दे-
वतासु । विष्णोः शंयोरहं देवयज्यया यज्ञेन
प्रतिष्ठां गमेयꣳ सोमस्याहं देवयज्यया (३)
सुरेता रेतो धिषीय त्वष्टुरहं देवयज्यया पशू-
नाꣳ रूपं पुषेयं देवानां पत्नीरग्निर्गृहपतिर्य-
ज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र
भूयासं वेदोऽसि वित्तिरसि विदेय कर्मासि
करुणमसि क्रियासꣳ सनिरसि सनिताऽसि
सनेयं घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सह-
स्रिणं वेदो ददातु वाजिनम् ( ४ ) ॥

( इन्द्रस्याहमिन्द्रवन्तः सोमस्याहं देवयज्यया चतुश्चत्वारिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(शेषाहुतीनामनुयाजादीनामनुमन्त्रणम्)

( अथ प्रथमकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः )।

तृतीये भक्ष्यस्येडादिभागस्यानुमन्त्रणमुक्तम्। चतुर्थे शेषाहुतीनामनुयाजादीनामनुमन्त्रणमुच्यते।

**बर्हिषोऽहमिति।** कल्पः—"अनूयाजानामिष्टमिष्टमनुमन्त्रयते बर्हिषोऽहं देवयज्यया प्रजावान्भूयासं नराशꣳसस्याहं देवयज्यया पशुमान् भूयासमग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयमिति" इति।

बर्हिर्नराशंसस्विष्टकृच्छब्दा अनुयाजदेवानामाग्निविशेषाणां वाचकाः। बर्हिर्नराशंसयागाभ्यां प्रजापतिः क्रमेण प्रजाः पशूंश्च ससर्जेति यजमानस्य तत्तत्प्रार्थना युक्ता। स्विष्टकृन्मन्त्रस्तु व्याख्यातः।

कल्पः—"अथ यत्र होतुरभिजानात्यग्निरिदं हविरजुषतेति तद्यजमानमुज्जितीर्वाचयति अग्नेरहमुज्जितिमनूज्जेषमिति यथेष्टम्" इति।

यस्मिन्काले होता सूक्तवाकं पठन्नग्निरिदꣳहविरजुषतेत्यादीनि तत्तद्देवतास्मारकाणि वाक्यानि पठति तस्मिन्कालेऽध्वर्युर्यजमानं तत्तद्देवताविषयाण्युज्जितिवाक्यानि वाचयेत्। अमावास्यायां पौर्णमास्यां वा यां यां देवतां यजति तदिष्टमनतिक्रम्य तदनुसारेण सूक्तवाकभागा उज्जितिभागाश्च प्रयोक्तव्याः।

पाठस्तु—

**अग्नेरहमिति।** आज्यभागदेवोऽग्निर्हविः सेवित्वा तेन हविषा पुष्टो यज्ञविरोधिनोऽसुरादीनभिभवन्नुत्कृष्टं जयं प्राप्तवान्। तदीयां तामुज्जितिमनु यजमानोऽहं पापरूपं वैरिणमभिभवन्नुत्कृष्टं जयं प्राप्तोऽस्मि। एवं सर्वत्र योज्यम्।

कल्पः—"उक्तं वाजवत्योर्व्यूहनम्" इति।

वाजशब्दोऽस्ति ययोर्ऋचोस्ते ऋचौ वाजवत्यौ, तयोर्ऋचोर्यजमानेन जप्यमानयोरध्वर्युर्जुहूपभृतौ द्वे स्रुचौ व्यूहेत्परस्परविपर्यासेनापसारयेत्। तत्प्रकारस्त्वस्माभिराध्वर्यवकाण्डे दर्शित इत्यर्थः।

पाठस्तु—

**वाजस्य मेति।** इन्द्रो वाजस्यान्नस्य प्रसूतिनिमित्तेन स्रुच ऊर्ध्वग्रहणेन मामुद्ग्रभीदुत्कर्षं प्रापितवान्। अथ स्रुचो न्यक्कारेण मम सपत्नानधराग्न्यक्कृतानकरोत्। देवा ब्रह्म परिवृढं स्रुचोरुद्ग्राहनिग्राहरूपं कर्मद्वयमवर्धयन्। अथेन्द्राग्नी

१ क. ख. घ. °ष्टम°। २ क. घ. ङ. च. युक्ताः। ३ ख. °ल्पः। वाजवतीभ्यां व्यूहत्युभौ वाजवत्यौ जपेत्। वाजश°। ४ ख. °र्शितः। पा°।

मम सपत्नान्विषूचीनान्सर्वतः पलायमानान्व्यस्यतां विनाशयेताम् ।

**एमा अग्मन्निति** । कल्पः–"अथ यत्र होतुरभिजानात्याशास्तेऽयं यजमानोऽसाविति तद्यजमानं यज्ञस्य दोहं वाचयत्येमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषमिति" इति ।

यस्मिन्काले होता सूक्तवाकं पठन्नाशास्तेऽयमित्यादिवाक्यमुच्चारयति तस्मिन्कालेऽध्वर्युर्यजमानमेमा अग्मन्नित्यादियज्ञदोहमन्त्रं वाचयति । सूक्तवाक आयुराशास्ते सुप्रजास्त्वमाशास्त इत्यादय आयुराद्याशिषः समाम्नाताः । इमा आशिषोऽग्मन्मां प्रत्यागच्छन्तु । वयमप्यायुरादिदोहं कामयमानास्तत्फलप्रदेनेन्द्रेण युक्तत्वादिन्द्रवन्तस्तमिन्द्रं वनामहे भजामहे । तेन भजनेन पुत्रपौत्रादिप्रजामिषमिष्यमाणमन्नायुरादिकं धुक्षीमहि कामधेनुसदृशीमिन्द्रदेवतां दुग्धास्म ।

**रोहितेनेति** । कल्पः "प्रस्तरं प्रह्रियमाणमनुमन्त्रयते रोहितेन त्वाऽग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयत्विति" इति ।

रोहितहर्येतशब्दा अग्नीन्द्रसूर्याणामश्वानभिदधते । हे प्रस्तर तैरश्वैरग्न्यादयस्त्वां सूक्तवाकोक्तां देवतां गमयन्तु ।

**वि ते मुञ्चामीति** । कल्पः—"परिधीन्विमुच्यमानाननुमन्त्रयते वि ते मुञ्चामि रशना वि रश्मीन्वि योक्त्रा यानि परिचर्तनानि । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान्देवतास्विति" इति ।

लोके ह्यारुरुक्षुरारोहणीयमश्वं रशनादिभिः सर्वतो बध्नाति । तत्र रशनाशब्देन पल्ययनदार्ढ्यायोदरे बध्यमाना तन्तुमयी चर्ममयी वा कक्ष्याऽभिधीयते । रश्मिशब्देनाश्वमुखे संलग्नो हस्तेनाश्वनियमनार्थो रज्जुविशेष उच्यते । योक्त्रशब्देनाश्वं स्तम्भे बद्धु[न्धु]मुपयुक्तो रज्जुविशेषः । पल्ययनस्य पुरतः पृष्ठतश्चापसरणं वारयितुमुरःपुच्छादौ बन्धनोपयुक्ता रज्जुविशेषाः परिचर्तनशब्देनोच्यन्ते । अश्ववदग्नेश्च[१] रशनादिस्थानीयाः परिधयः । हेऽग्ने तव बन्धनहेतून्परिधिरूपान्रशनादीन्विमुञ्चामि । तद्विमोकेन संतुष्टस्त्वमस्मासु द्रविणं धेहि । यच्चान्यद्भद्रमन्नपानादिकं तदप्यस्मासु धेहि । अस्मदीयहविर्भुक्षु देवतासु भागधान्हविष्प्रदानस्मान्प्रकर्षेण ब्रूहि ।

**विष्णोः शंयोरिति** । कल्पः—"शंयुवाकमुक्तमनुमन्त्रयते विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमिति" इति ।

---

१ क. घ. ङ. च. तेनात्र भ° ।

( शेषाहुतीनामनुयाजादीनामनुमन्त्रणम् )

शंयुशब्दः सुखमिश्रं बृहस्पतिपुत्रं ब्रूते। ते शंयुं बार्हस्पत्यमिति ब्राह्मणोक्तेः। स च बहुषु कार्येषु व्याप्नुवन्विष्णुरित्युच्यते। तस्य परितोषहेतुत्वात्परिधिप्रहरणं तदीया देवयज्या तया यजमानोऽहं कृत्स्नयज्ञेन निष्पन्नां प्रतिष्ठां फलं गमेयं प्राप्नुयाम्।

**सोमस्याहमिति**। कल्पः—"पत्नीसंयाजानामिष्टमनुमन्त्रयते सोमस्याहं देवयज्यया सुरेता रेतो धिषीय त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमिति" इति। "अथेतरावुपसमस्यति देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासमिति" इति च।

चतुर्णां पत्नीसंयाजानां क्रमेण सोमस्त्वष्टा देवपत्न्यो गृहपत्यग्निरिति चतस्रो देवताः। तत्र सोमस्य रेतोधारणाभिमानित्वात्तदीययागेनाहं रेतो धिषीय धारयेयम्। द्विविधं रेतो वन्ध्यमुत्पादकं च। तत्र वन्ध्यव्यावृत्तये सुरेता इति विशेष्यते। त्वष्टा तु निषिक्तं रेतः पश्वादिरूपेण विकारयति। अतस्तद्यागेन पशुरूपं पुषेयं पुष्यासम्। मिथुनत्वसिद्ध्यर्थमेकस्मिन्नेव मन्त्रे तृतीयचतुर्थदेवते समस्येते। या देवपत्न्यो यश्च गृहपतिरग्निस्तदुभयं मिलित्वा यज्ञसंबन्धि मिथुनम्। तदीययागेनाहमपि मिथुनेन पुत्रपुत्रीरूपेण प्रकृष्टो भूयासम्।

कल्पः—"वेदे यजमानं वाचयति वेदोऽसि वित्तिरसि विदेयेत्याऽन्तादनुवाकस्य" इति।

वेदे निहिते सतीति शेषः। अन्तर्वेदि वेदं निधायेति सूत्रान्तरे दर्शनात्।

पाठस्तु—

**वेदोऽसीति**। वेदोऽसीत्यस्य वाक्यस्यार्थो वित्तिरसीत्यनेन स्पष्टी क्रियते। हे दर्भमय त्वं वेदनामाऽसि। तस्य नाम्नोऽयमर्थः—वित्तिर्द्रव्यलाभसाधनमित्यतस्त्वत्प्रसादेनाहं धनं विदेय लभेय। तथैवोपरि व्याख्येयम्। कर्मासि कर्मनामकम( कोऽ )सि। तस्य व्याख्यानं करुणमसीति। क्रियतेऽनेनेति करुणं वेदिसंमार्जनभस्माध्यूहनादिसाधनमित्यर्थः। अतस्त्वयाऽहं संमार्जनादिकं क्रियासम्। तथा त्वं सनिरसि सनिनामाऽसि। तद्व्याख्यानं सनिताऽसीति। धनस्य दाताऽसीत्यर्थः। अतस्त्वत्प्रसादेन सनेयं धनमृत्विगादिभ्यो देयासम्। किंच वेदो भवान्मह्यं रायस्पोषं धनं पुष्टिं ददातु। कीदृशं रायस्पोषं, घृतवन्तं घृतादिभोजनसाधनसमृद्धम्। कुलायिनं निवासहेतुबहुगृहोपेतम्। सहस्रिणं सहस्रलक्षादिसंख्योपेतम्। वाजिनं भोज्यान्नसमृद्धम्।

अत्र विनियोगसंग्रहः-

" बर्हिस्त्रिभिरनूयाजान्मन्त्रयेत्सूक्तवाककम् ।
अग्नेरित्यष्टभिर्वाजवद्भ्यां व्यूहेत्स्रुचौ तथा ॥ १ ॥
एमाः स्वनामग्रहणे रोहीति प्रस्तरं त्रिभिः ।
वि ते परिधिमोकं तु विष्णोः शं शंयुवाककम् ॥ २ ॥
त्रिभिः सोमादिसंयाजान्वेदो वेदाभिमर्शनम् ।
अनुवाके चतुर्थेऽस्मिंस्त्रयोविंशतिरीरिताः " ॥ ३ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ) ।

आ प्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् । प्रजापतेर्विभान्नाम लोकस्तास्मिꣳस्त्वा दधामि सह यजमानेन सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायाम् ( १ ) दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तां विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु वि क्रमे निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु वि क्रमे निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु वि क्रमे निर्भक्तः स यं

( आप्यायनादिमन्त्राभिधानम् )

त्रिष्टुभो विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभेन छन्दसा दिशोऽनु वि क्रमे निर्भक्तः स यं द्विष्मः (२) ॥

( दक्षिणायामन्तरिक्षमनु वि क्रमे निर्भक्तः स यं द्विष्मो विष्णोरेकान्नत्रिंशच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ) ।

चतुर्थेऽनूयाजादिशेषहोमानुमन्त्रणमुक्तम्। पञ्चमे त्वाप्यायनादिमन्त्रा उच्यन्ते।

**आ प्यायतामिति** । कल्पः—" ध्रुवामाप्यायमानामनुमन्त्रयते—आ प्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्निति " इति ।

यज्ञंयज्ञं प्रति तां तामाहुतिं प्रति देवयद्भ्यो देवान्होतुमिच्छद्भ्य ऋत्विग्भ्यः। पर्याप्तेन घृतेनेयं ध्रुवाऽऽप्यायतां पुनः पुनः पूर्यताम्। ऊधःशब्देन पयःपूर्णस्तनसंघोऽभिधीयते । सूर्याशब्देनोषा आदित्यपत्नी विवक्ष्यते । तत्पत्नीत्वं च नक्षत्रेष्टावाम्नायते—"उषा वा अकामयत । प्रियाऽऽदित्यस्य सुभगा स्यामिति" [ब्रा० का० ३ प्र० १ अ० ६ ] इति । इवशब्दोऽत्राध्याहर्तव्यः । यथा सूर्याया गोरूपधारिण्या ऊधः पयःपूर्णं तथा ध्रुवा घृतेनाऽऽप्यायताम् । किंच, अदित्या वेदिरूपायाः पृथिव्या उपस्थ उत्सङ्गे वर्तमाना सेयं ध्रुवोरुधारा महाधारा पुनः पुनः सिच्यमानाभिराज्यधाराभिरुपेताऽत एव पृथिवी विस्तीर्णा सत्यस्मिन्सर्वस्मिन्यज्ञे सम्यगाप्यायताम् ।

**प्रजापतेरिति** । कल्पः—" अथ यजमानभागं प्राश्नाति प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेनेति " इति ।

यद्यपि स्वर्गादिलोकाः सर्वे प्रजापतिना सृष्टत्वात्तत्संबन्धिनस्तथाऽप्यकर्मभूमित्वेन यजमानान्प्रति विशेषेण न भान्तीति नास्ति एतेषां विभाञ्शब्दवाच्यत्वम्। भूर्लोकस्तु कर्मभूमित्वेन यजमानानां विशेषेण भासमानत्वाद्विभाञ्शब्दवाच्यः । विभान्नामके प्रजापतिसंबन्धिनि तस्मिन्भूलोके हविर्भागभक्षकेण यजमानेन मया सह त्वां स्थापयामि ।

(आप्यायनादिमन्त्राभिधानम् )

**सदसीति** । कल्पः—" पूर्णपात्रे यजमानं वाचयति सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमासि मा मे क्षेष्ठा इति" इति।

पूर्णपात्र आनीयमानेऽध्वर्युणेति शेषः । हे पूर्णपात्र त्वं सदसि संयवनादिकार्यकारितया शोभनमसि । अतो मम फलप्रदानेन सद्भूयाः शोभनं भूयाः । सर्वमसि व्युत्सेकेन वक्ष्यमाणेन प्राच्यादिसर्वदिग्व्याप्तमसि । अतो ममापेक्षितं सर्वं कार्यं कर्तुं क्षमं भूयाः । अद्भिः पूर्णमसि । अतो मम प्रयोजनं संपूर्णं कर्तुमुद्युक्तं भूयाः । अक्षितमसि पूर्णत्वादेव क्षयरहितमसि । अतो मम कार्यकरणे मा क्षेष्ठाः क्षयं मा प्राप्नुहि ।

**प्राच्यां दिशीति** । कल्पः—" दिशो व्यूहति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तामिति " इति ।

ऋत्विग्देवाद्यभिमानिनः सर्वे प्राणिनो यागं द्रष्टुं प्राच्यादिदिक्षु निवसन्ति । अत एव ब्राह्मणमाम्नायते—" सर्वाणि वै भूतानि व्रतमुपयन्तमनूपयन्ति " इति। मासगृहादीनामचेतनत्वेऽपि तदभिमानिनः पुरुषा इह विवक्षिताः । अन्तर्धानादिशक्तियोगादेतेषामदर्शनमविरुद्धम्। त एते देवादयस्तस्यां तस्यां दिशि मार्जयन्तां शोधयन्ताम् ।

**विष्णोः क्रम इति** । कल्पः—"अथोपोत्थाय दक्षिणेन पदा विष्णुक्रमान्क्रमते विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु वि क्रमे निर्भक्तः स यं द्विष्म इति चतुर्भिरनुच्छन्दसं तृतीये चतुर्थमनुवर्तयति न चतुर्थाय प्रक्रामति नाऽऽहवनीयमुपात्येति " इति ।

तृतीये पदेऽवस्थाय चतुर्थं मन्त्रं पठेत् । चतुर्थमन्त्राय प्रक्रमं न कुर्यात्किंतु मन्त्रमन्तरेण तूष्णीमेव चतुर्थं प्रक्रमं कुर्यात्। तं प्रक्रमं कुर्वन्नाहवनीयं नातिक्रामेत्किंत्वाहवनीयात्पश्चादेव वेदिमध्ये चतुरः प्रक्रमान्समापयेत्।

द्वितीयादिमन्त्रपाठस्तु—

**विष्णोः क्रम इति** । अत्र यजमानः स्वात्मानं विष्णुत्वेन भावयेत्। चतुर्णां प्रक्रमाणां प्रदेशान्पृथिव्यादिलोकरूपत्वेन भावयेत्। गायत्र्यादिच्छन्दोभिमानिदे-

१ ख. °तुरः प्रक्रमप्रदे° ।

( सर्योपस्थानादिमन्त्राभिधानम् )

वतास्तेषां प्रक्रमाणामनुग्राहिकाः। अभिमातिशब्दो नरकप्रदं पापमाचष्टे। पाप्मा वा अभिमातिरिति श्रुतेः। हे प्रथमप्रक्रम त्वं पापघाती विष्णोः क्रमोऽसि। गायत्रीछन्दोदेवतयाऽनुगृहीतोऽहमेतत्प्रदेशरूपां पृथिवीमनुसृत्य विक्रमे पादं प्रक्षिपामि। यमभिमातिं वयं द्विष्मः सोऽभिमातिर्निर्भक्तोऽस्मात्प्रदेशान्निःसारितः। एवमुत्तरत्र योज्यम्। अभिशस्तिरन्यैरापादितोऽपवादः। रातिर्दानं द्रव्यलाभः। तन्निवारणमरातिस्तदिच्छन्तो विरोधिनोऽरातीयतः(न्तः)। तृतीयप्रक्रमस्तान्हन्ति। शत्रुत्वं हिंसकत्वं, तदिच्छन्तो वैरिणः शत्रूयतः(न्तः)। चतुर्थप्रक्रमस्तान्हन्ति।

अत्र विनियोगसंग्रहः—

"आप्या ध्रुवाप्यायनं स्यात्प्रजा स्वाम्यंशभक्षणम्।
सदसीति प्रणीतानां धाराया अभिमन्त्रणम्॥ १॥
प्राच्यां तु पञ्चभिः सिञ्चेत्क्रमेद्विष्णोश्चतुष्टयात्।
अनुवाके पञ्चमेऽस्मिन्मन्त्रा द्वादश वर्णिताः॥ २॥ इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

[ अथ प्रथमाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः ]।

**अगन्म सुवः सुवरगन्म संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते माऽऽ वृक्षि सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्मः ( १ ) सं ज्योतिषाऽभूवमैन्द्रीमावृतमन्वावर्ते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषः समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासं वसुमान्यज्ञो वसीयान्भूयासमग्न आयू-**

---

१ क. घ. ङ. च. °तत्पदे शत्रूणां पृ°। २ घ. ङ. च. °च्छन्तस्तस्य वि°।

ऽषि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्। अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् (२)। दधत्पोषꣳ रयिं मयि। अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳहिमास्तामाशिषमा शासे तन्तवे ज्योतिष्मतीं तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीं कस्त्वा युनक्ति स त्वा वि मुञ्चत्वग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि यज्ञो बभूव स आ (३) बभूव स प्र जज्ञे स वावृधे। स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन्करोतु वयꣳ स्याम पतयो रयीणाम्। गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इडावाꣳ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान्॥ (४)॥

( द्विषमः सुवीर्यꣳ स आ पञ्चत्रिꣳशच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः॥ ६॥

( अथ प्रथमकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः )।

पञ्चम आप्यायनादिमन्त्रा वर्णिताः। षष्ठे सूर्योपस्थानादिमन्त्रा उच्यन्ते। अगन्मेति। कल्पः—"अथात्रैव तिष्ठन्नाहवनीयमुपतिष्ठते—अगन्म सुवः सुवरगन्म संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते माऽऽ वृक्षीति" इति।

आद्येन सुवःशब्देन कर्मफलभोगभूमिरभिधीयते। द्वितीयेन सुवःशब्देन मोक्षद्वारभूत आदित्यलोकः। हे आहवनीय त्वत्प्रसादात्प्रथमं फलभोगस्थानं सपुत्रपौत्रा वयं गम्यास्म। ततो मोक्षद्वारमादित्यलोकं गम्यास्म। तदर्थमहं तव संदृशः कटाक्षान्मा च्छित्सि विच्छिन्नो मा भूवम्। ते त्वदर्थं यत्तपोऽस्माभि-

१ च. षष्ठ उपस्थानम्।

( सूर्योपस्थानादिमन्त्राभिधानम् )
रनुष्ठास्यते तस्मै तपसे ते तवानुग्रहान्माऽऽवृक्षि आ समन्ताद्वृक्णो विच्छिन्नो मा भूवम् ।

**सुभूरसीति** । कल्पः—" अथाऽऽदित्यमुपतिष्ठते—सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीति " इति ।

हे आदित्य त्वं सुभूरसि सुष्ठु भवत्युदेतीति सुभूः । रश्मीनां रश्मियुक्तानां चन्द्रादीनां मध्ये श्रेष्ठोऽसि । आयुषः स्थापयिताऽसि । अतो मय्यायुः स्थापय । एवं ब्रह्मवर्चसेऽपि योज्यम् ।

**इदमहमिति** । कल्पः—" अथैभ्यो लोकेभ्यो भ्रातृव्यं निर्भजति—इदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्म इति " इति ।

यो भ्रातृव्यो मदीयो वैरी पृथिव्यादिलोकत्रये प्राच्यादिदिक्षु मम विरोधमाचरति मदीयमन्नाद्यं चापजिहीर्षति अमुं भ्रातृव्यं ततः पृथिव्यादेरिदं निर्भजामि शीघ्रमेव निःसारयामि । इदानीं विरोधमनाचरन्तमपि कालान्तरे तदाचरणशङ्कया यं भ्रातृव्यं वयं द्विष्मः सोऽपि निःसारितः ।

**सं ज्योतिषेति** । कल्पः—" सं ज्योतिषाऽभूवमित्यात्मानं प्रत्यभिमृशते " इति ।

अहमादित्यज्योतिषा समभूवं संगतो भूयासम् ।

**ऐन्द्रीमिति** । कल्पः—" दक्षिणमꣳसमभि पर्यावर्तत ऐन्द्रीमावृतमन्वावर्त इति " इति ।

परमैश्वर्ययोगादादित्य इन्द्रः । तदीयमावर्तनमन्वहमपि प्रादक्षिण्येनाऽऽवर्ते ।

**समहमिति** । कल्पः—" अथोदङ्पर्यावर्तते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोष इति " इति ।

अहं प्रजया संगतो भूयासम् । प्रजाऽपि मया संगता भूयात् । रायस्पोषेऽप्येवं योज्यम् ।

**समिद्ध इति** । कल्पः—" अथाऽऽहवनीये समिधमादधाति समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासꣳ स्वाहेति " इति ।

---

१ ख. °थ । वर्चोधा असि वर्चो ब्रह्मवर्चसं मयि धेहि ब्रह्मवर्चसं मयि स्थापयेति तदर्थः । क° । २ क. घ. ङ. °मित्युरः प्रत्य° । ३ क. घ. ङ. °दङ्ङुपपर्या° ।

( सूर्योपस्थानादिमन्त्राभिधानम् )

अत्र समित्प्रक्षेपाय स्वाहेति शब्दोऽध्याहृतः । हेऽग्नेऽनया समिधा प्रदीप्तस्त्वं मे मदर्थं दीदिहि दीप्यस्व। तव दीपयिताऽहमपि त्वत्प्रसादाद्दीप्तो भूयासम्।

**वसुमानिति** । कल्पः—" अथाऽऽहवनीयमुपतिष्ठते वसुमान्यज्ञो वसीयान्भूयासमिति " इति ।

अयं यज्ञस्त्वत्प्रसादाद्वसुमान्धनवान् । अहमपि त्वत्प्रसादाद्वसीयान्वसुमत्तरो भूयासम् ।

कल्पः—" अथाऽऽग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठतेऽग्न आयूꣳषि पवसेऽग्ने पवस्वेति " इति ।

पाठस्तु—

**अग्न आयूꣳषीति** । हेऽग्ने पुत्रपौत्रादियुक्तानामस्माकमायूंषि पवसे शोधयसि । अपमृत्युं परिहरसीत्यर्थः । नोऽस्माकमूर्जं बलमिषमन्नं चाऽऽसमन्तात्सुव प्रेरय देहीत्यर्थः । दुच्छुनां वैरिसेनामारे दूरे बाधस्व निराकुरु । सकारान्तोपःशब्दः कर्मवाची । शोभनमपः कर्म यस्यासौ स्वपाः । हेऽग्ने त्वं स्वपाः सन्नस्मे अस्मान्पवस्व शोधय । मयि ब्रह्मवर्चसं व्यवहारसामर्थ्यं पुष्टिं धनं च स्थापय ।

**अग्ने गृहपत इति** । कल्पः—" अथ गार्हपत्यमेत्योपतिष्ठते—अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमा मह्यममुष्मै ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मा अमुष्मा इति यावन्तोऽस्य पुत्रा जाता भवन्ति तन्तव इत्यन्ततः " इति ।

यद्यप्यत्र " तामाशिषमाशासे तन्तवे ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीम् " इत्याम्नायपाठस्तथाऽप्यदःशब्दस्योत्पन्नपुत्रविषयत्वात्तन्तुशब्दस्यानुत्पन्नपुत्रविषयत्वाच्चायं क्रमो न्याय्य इत्यभिप्रेत्य शाखान्तरानुसारेण सूत्रकारो मन्त्रं पपाठ । अयं गार्हपत्योऽग्निरस्मिन्गृहे सर्वदा धार्यमाणत्वाद्गृहपतिः । हे गृहपतेऽग्ने गृहपतिना त्वयाऽनुगृहीतोऽहं सुष्ठु गृहपतिर्भूयासम् । त्वमपि गृहपतिना मया पूजितः सुष्ठु गृहपतिर्भूयाः । हिमशब्दो हेमन्तवाची सन्संवत्सरमुपलक्षयति । शतसंवत्सरानग्निमिन्धानोऽहं तन्तवेऽनुत्पन्नबहुपुत्रोत्पत्तये ज्योतिष्मतीं तदुत्पत्तिप्रकाशनसमर्थां तामाशिषमाशासे । अमुष्मा उत्पन्नपुत्राय देवदत्तादिनामकाय ज्योतिष्मतीमतिबुद्धिप्रकाशनसमर्थां तामाशिषमाशासे ।

---

१ क. ङ. च. °यसेऽप° । २ ख. नोऽस्मभ्यमू° । ३ ख. °त्यमुप° । ४ ख. °त्वाच्चायं । ५ ख. °मोऽन्या° ।

( सूर्योपस्थानादिमन्त्राभिधानम् )

**कस्त्वेति**। कल्पः–"कस्त्वा युनक्ति स त्वा वि मुञ्चत्विति यज्ञं विमुञ्चति" इति।

कशब्दः प्रजापतिमाचष्टे। हे यज्ञ पूर्वं यः प्रजापतिस्त्वां युनक्ति युक्तवान्स एवेदानीं त्वां विमुञ्चतु।

**अग्ने व्रतपत इति**। कल्पः–"अथाऽऽहवनीये समिधमादधाति अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधीति" इति।

यज्ञरूपस्य व्रतस्य पते हेऽग्ने त्वत्प्रसादादिदं व्रतं चरितवानस्मि। तद्व्रतं समापयितुमशकं शक्तोऽभूवम्। मदीयं तद्व्रतमराधि समृद्धमभूत्।

**यज्ञो बभूवेति**। कल्पः "अथ यज्ञस्य पुनरालम्भं जपति यज्ञो बभूव स आ बभूव स प्र जज्ञे स वावृधे। स देवानामधिपतिर्बभूव सो अस्मा२ अधिपतीन्करोतु वय२ स्याम पतयो रयीणामिति" इति।

इदानीमनुष्ठितोऽयं यज्ञो बभूव संपूर्णोऽभूत्। स यज्ञ आबभूव पुनरप्यावृत्तो भवतु। स यज्ञः प्रजज्ञेऽस्माननालस्येनानुष्ठातॄन्प्रज्ञातवान्। अत एवास्मद्गृहे स यज्ञो वावृधे पुनः पुनरनुष्ठानेन वर्धताम्। स यज्ञोऽस्माभिरिज्यमानानां देवानामधिकं पालयिता भवतु। स यज्ञोऽस्मानप्यधिपतीनधिकमनुष्ठानस्य पालकान्करोतु। वयमपि तस्य यज्ञपुरुषस्य प्रसादाद्रयीणां यज्ञसाधनानां धनानां पतयो भूयास्म।

**गोमा२ अग्न इति**। कल्पः–"अथ प्राङुत्क्रम्य जपति गोमा२ अग्नेऽविमा२ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इडावा२ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावानिति" इति।

हेऽग्ने पुनरावर्तनाय प्रार्थ्यमानो यज्ञ एतैर्विशेषणैर्विशिष्टो भूयात्। बहवो गावोऽस्य सन्तीति गोमान्। एवमविमानश्वीति योज्यम्। नृवत्सखा, ऋत्विग्रूपैर्मनुष्यैर्युक्ता देवाः सखायो यस्य यज्ञस्य स तादृशः। सदमित्सदैवाप्रमृष्योऽनभिभवनीयः। इडावानन्नवान्। प्रजावान्बह्वपत्यप्रदः। दीर्घः पुनः पुनरनुष्ठानादविच्छिन्नः। रयिर्बहुधनोपेतः। पृथुबुध्नो विस्तीर्णमूलो मन्त्रेष्वनुष्ठानेषु च मूलभूतेषु वैकल्यरहितः। सभावानविकलं यज्ञं द्रष्टुमिच्छन्त्या महत्या विद्वत्सभया युक्तः। असुः प्राणः सोऽस्यास्तीत्यसुरः, हेऽसुर प्राणवन्नग्न एष पुनः प्रार्थ्यमानो यज्ञ उक्तविशेषणविशिष्टो भूयात्।

अत्र विनियोगसंग्रहः—

"अगन्पूर्वाग्न्युपस्थानं सुभूर्भानोरुपस्थितिः ।
इदं निःसारयेच्छत्रून्संज्योति स्वाभिमर्शनम् ॥ १ ॥
ऐन्द्रीं प्रदक्षिणावृत्तिः समहं तद्विपर्ययः ।
समिद्धः समिदाधानं वसु पूर्वाग्न्युपस्थितिः ॥ २ ॥
अग्न आयूंत्रिभिर्मन्त्रैरपराग्नेरुपास्थितिः ।
कस्त्वा यज्ञविमोकः स्यादग्ने तदूरतमुत्सृजेत् ॥ ३ ॥
यज्ञेति पुनरालम्भं जपेद्धोमांस्तु गोमतीम् ।
षष्ठेऽनुवाक एतस्मिन्मन्त्राः पञ्चदशेरिताः ॥ ४ ॥" इति ।

अथ मीमांसा ।

नवमाध्यायस्य प्रथमपादे चिन्तितम्—

अगन्मादिः स्वर्गदेवौ हेतू यद्वा प्र(ऽत्र)चोदितम् ।
आद्यो लिङ्गान्मैवमङ्गस्यापूर्वाकाङ्क्षितत्वतः ॥

दर्शपूर्णमासयोर्मन्त्रौ श्रुतौ—अगन्म सुवरित्येकः । अग्नेरहमुज्जितिमनूज्जेषमित्यपरः । तयोरुभयोः क्रमेण स्वर्गदेवौ प्रयोजकौ । कुतः । तल्लिङ्गदर्शनात् । तथा सति सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र स्वर्गाग्न्योरभावान्नास्त्यूह इति प्राप्ते ब्रूमः—चोदितं यदपूर्वं तस्यैव फलत्वेनानुष्ठेयतयेतिकर्तव्यताकाङ्क्षा युक्ता । ततो मन्त्रयोरपूर्वं प्रयोजकम् । तथा सति विकृतावगन्म ब्रह्मवर्चसं सूर्यस्याहमुज्जितिमनूज्जेषमित्येवं मन्त्रयोरस्त्यूहः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके
षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ) ।

**यथा वै संमृतसोमा एवं वा एते संमृतयज्ञा यद्दर्शपूर्णमासौ कस्य वाऽह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां**

( देवतापरिग्रहादिविधिः )

यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वो भूते यजत एतद्वै देवानामायतनं यदाहवनीयोऽन्तराऽग्नी पशूनां गार्हपत्यो मनुष्याणामन्वाहार्यपचनः पितृणामग्निं गृह्णाति स्व एवाऽऽयतने देवताः परि ( १ ) गृह्णाति ताः श्वो भूते यजते व्रतेन वै मेध्योऽग्निर्व्रतपतिर्ब्राह्मणो व्रतभृद्-व्रतमुपैष्यन्ब्रूयादग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिस्तस्मा एव प्रतिप्रोच्य व्रतमा लभते बर्हिषा पूर्ण-मासे व्रतमुपैति वत्सैरमावास्यायामेतद्ध्येतयोरायतनमुपस्तीर्यः पूर्वश्चाग्निरपरश्चेत्याहुर्मनुष्याः ( २ ) इन्न्वा उपस्तीर्णमि-च्छन्ति किमु देवा येषां नवावसानमुपास्मिन्छ्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति यजमानेन ग्राम्याश्च पशवोऽवरुध्या आरण्याश्चेत्याहुर्यद्ग्राम्यानुपवसति तेन ग्राम्यानव रुन्धे यदारण्यस्याश्नाति तेनाऽऽरण्यान्यदना-श्वानुपवसेत्पितृदेवत्यः स्यादारण्यस्याश्नातीन्द्रियम् ( ३ ) वा आरण्यमिन्द्रियमेवाऽऽत्मन्धत्ते यदनाश्वानुपवसेत्क्षोधुकः स्याद्यदश्नीयाद्रुद्रोऽस्य पशूनभि मन्येताऽपोऽश्नाति तन्नेवाशितं नेवानाशितं न क्षोधुको भवति नास्य रुद्रः पशूनभि मन्यते वज्रो वै यज्ञः क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो यदनाश्वानुप-वसति वज्रेणैव साक्षात्क्षुधं भ्रातृव्यꣳ हन्ति ( ४ ) ॥

( परि मनुष्या इन्द्रियꣳ साक्षात्त्रीणि च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( अथ प्रथमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ) ।

एतैः षड्भिरनुवाकैर्याजमानमन्त्रा उदीरिताः । अथानुवाकपञ्चकेन याजमानब्राह्मणमुच्यते । तत्रास्मिन्सप्तमानुवाके देवतापरिग्रहादिर्विधीयते । आहवनीयादिष्वग्निष्वध्वर्युणाऽन्वाधीयमानेषु तस्मिन्नन्वाधानकाले यजमानोऽच्छिद्रकाण्डाम्नातानग्निं गृह्णामीत्यादिमन्त्राञ्जपेत् । सोऽयं देवतापरिग्रहः । असौ चाऽऽपस्तम्बसूत्रे विस्पष्टः ।

आपस्तम्बो ह्यग्निं गृह्णामीत्यादिमन्त्रानुच्चार्येदमाह—" आहवनीयेऽन्वाधीयमाने जपति " इति । अन्तराऽग्नी पशव इति मन्त्रमुच्चार्येदमाह—" अन्तराऽग्नी तिष्ठञ्जपति " इति । इह प्रजा इत्यादिमन्त्रद्वयमुच्चार्येदमाह—"गार्हपत्यम्" इति ।

अन्वाधीयमानमनुमन्त्रयत इति शेषः ।

अयं पितृणामिति मन्त्रमुच्चार्येदमाह—" दक्षिणाग्निम् " इति ।

अत्रापि पूर्ववद्वाक्यशेषः ।

तमिमं देवतापरिग्रहं विधातुमादौ प्रस्तौति—

**यथा वा इति** । एकस्मिन्नेव काले संहत्य प्राप्ताः समृतसोमाः सोमयागा एकस्मिन्नेव वसन्ततौ बहूनां यजमानानां सोमयागाः संहत्य प्राप्यन्त एवमेव बहूनां यजमानानामेते दर्शपूर्णमासा यज्ञा एकस्मिन्नेव पर्वणि संहत्य प्राप्यन्ते । देवताश्चाग्न्यादयो या एकस्य यजमानस्य ताश्चान्यस्यापि । तथा सति देवानां मनसि संकटमुत्पद्यते । तत्संकटमहशब्देन द्योत्यते । देवानां पक्षपातस्यानुचितत्वात् । कस्य यजमानस्य यज्ञं देवा आगच्छन्ति कस्य वा यज्ञं नाऽऽच्छन्तीति महदेतत्संकटम् । तस्य संकटस्यायं परिहारः—बहूनां यजमानानां मध्ये यो यजमान इतरेभ्यः पूर्वः प्रवृत्तो देवताः परिगृह्णाति स यजमान एताः परिगृहीता देवताः परेद्युर्यष्टुमर्हति । न च सर्वेऽपि यजमानाः परस्परमात्सर्येण प्रथमं प्रवर्तन्त इति स दोषस्तदवस्थ इति शङ्कनीयम् । परिग्रहमन्त्रपाठेनैव देवसंकटस्य परिहृतत्वात् । यागस्योद्देशत्यागमात्रत्वाद्देवानामागमनमन्तरेणापि सोऽनुष्ठातुं शक्यते । योगसामर्थ्येन वा बहूनि शरीराणि स्वीकृत्य तत्र सर्वत्राऽऽगमिष्यन्ति । इत्थं च परिहारं भगवान्बादरायणो देवताधिकरणे विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनादिति सूत्रयामास । किं बहुनाऽस्य वाक्यस्य देवतापरिग्रहविध्यर्थवादत्वान्न किंचिद्देवानां संकटमस्ति ।

१ ख. एवैक° । २ ख. ता एवान्य° । ३ ख. पूर्व । ४ ख. °त्र तत्र स° । ५ ख. इमं । ६ ख. °पत्तिदर्शि° ।

(देवतापरिग्रहादिविधिः)

देवतापरिग्रहार्थानां देशविशेषाणां विधिमर्थवादेनोन्नयति—

**एतद्वा इति।** वसून्रुद्रानादित्यानिन्द्रेण सह देवता इत्याहवनीयार्थमन्त्रलिङ्गादाहवनीयो देवानां स्थानम्। अन्तराऽग्नी पशव इति मन्त्रलिङ्गादाहवनीयगार्हपत्ययोर्मध्यं पशूनां स्थानम्। इह प्रजा विश्वरूपा रमन्तामिति मन्त्रलिङ्गाद्गार्हपत्यो मनुष्याणां स्थानम्। अन्वाहार्यः [1]पच्यतेऽस्मिन्नित्यन्वाहार्यपचनो दक्षिणाग्निः। अयं पितृणामग्निरिति मन्त्रलिङ्गादसौ पितृणां स्थानम्।

देशविधिमन्त्राननूद्य तेषु देशेष्ववस्थितस्य देवतापरिग्रहं विदधाति——

**अग्निं गृह्णातीति।** स्पष्टोऽर्थः।

मन्त्रेण यज्ञरूपव्रतस्वीकारं विधातुं प्रस्तौति—

**व्रतेनेति।** वक्ष्यमाणमन्त्रपाठरूपेण व्रतस्वीकारेणैव व्रतपतिरयमग्निर्मेध्यो यागयोग्यो भवति। ब्राह्मणश्च यजमानो व्रतधारी भवति।

समन्त्रकव्रतस्वीकारं विधत्ते—

**व्रतमुपैष्यन्निति।** मन्त्रोऽयमतीतप्रश्ने मम नामेत्यनुवाके समाम्नातः

मन्त्रगतं व्रतपतिशब्दं मन्त्रतात्पर्यं च व्याचष्टे—**अग्निर्वा इति।**

तिथिविशेषेण व्रतोपायनस्य कालविशेषं विधत्ते—

**बर्हिषेति।** बर्हिषा बर्हिराहरणेनोपलक्षिते काले वत्सैर्वत्सापाकरणेनोपलक्षिते काल इत्यर्थः। एतदुक्तं कालद्वयमेतयोस्तिथिविशेषगतयोर्व्रतस्वीकारयोरुचितं स्थानमिति शाखान्तरप्रसिद्धिः।

अथोपस्तरणं विधत्ते। अध्वर्युर्यदा दर्भैराहवनीयगार्हपत्यौ परिस्तृणाति तदानीमच्छिद्रकाण्डपठितस्योभावग्नी उपस्तृणुत इत्यादिमन्त्रस्य यजमानेन जप उपस्तरणम्। अथवाऽध्वर्युकर्तृकं परिस्तरणम्। तदिदमस्मिन्काण्डे विदधाति—

**उपस्तीर्य इति।** परोक्षकथनेन विधिः प्रशस्यते।

विहितमुपस्तरणमुपपादयति—

**मनुष्या इदिति।** इन्न्वा इति निपातत्रयसमुदायोऽपिशब्दार्थं ब्रूते। अत्यन्तदरिद्रा मनुष्या अपि शीतवातादिपरिहाराय तृणादिभिराच्छन्नं गृहमिच्छन्ति महाप्रभावा देवा उपस्तरणमिच्छन्तीति किमु वक्तव्यम्। येषां देवानामिच्छानु-

---

१ ख. °रासादनेनो°।

सारेण तदा तदा तत्र तत्र नवावसानं नूतनगृहं निष्पाद्यते । यो यजमान एवं विद्वानग्निमुपस्तृणाति अस्मिन्यजमाने परेद्युर्यक्ष्यमाणे सति पूर्वेद्युस्तत्समीपे हविर्भुजो देवता निवसन्ति ।

आरण्यं सायमाशेऽश्नातीति सूत्रकारेण यदारण्यधान्यभोजनमुक्तं तदिदं विधातुं प्रस्तौति—

**यजमानेनेति** । अत्रायं विचारः । किं ग्राम्यधान्यस्यान्नं भोक्तव्यमारण्यधान्यस्य वा भोजनमेव वा वर्जनीयमिति । तत्राऽऽरण्यधान्यभोजनपक्षमभ्युपेत्येतरपक्षद्वयमपोद्यते । पशवो हि द्विविधाः । ग्राम्या आरण्याश्च । गवाश्वाजाविपुरुषगर्दभोष्ट्राः सप्त ग्राम्याः । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयाः सप्ताऽऽरण्याः । त एत उभयेऽपि यजमानेनावरुध्याः संपादनीया इति बुद्धिमन्त आहुः । यदि ग्राम्यान्व्रीह्यादीन्प्रत्युपवसेद्भोजनं वर्जयत्तेन वर्जनेन ग्राम्यान्पशून्संपादयति । यदारण्यस्य नीवारादेरन्नं भुञ्जीत तेन भोजनेनाऽऽरण्यान्पशून्संपादयति । यद्यनाश्वानुभयविधभोजनवर्जमुपवासं कुर्यात्तदानीमयं व्रतविशेषः पितृदेवत्यो भवेत् । पितरो ह्यनश्नन्तं श्राद्धकर्तारमभिनन्दन्ति ।

इदानीं विदधाति—

**आरण्यस्येति** । इन्द्रियाभिवृद्धिहेतुरारण्यधान्यम् ।

अथ पक्षान्तरं विधातुं भोजनाभोजनयोर्दोषमाह—

**यदनाश्वानिति** । क्षोधुकः क्षुधाशीलः । अभिमन्येत हन्यात् ।

विधित्सितं पक्षान्तरं विदधाति—**अप इति** ।

उक्तं दोषद्वयमत्र परिहरति—

**तन्नेवेति** । अशितास्वप्स्वदनाभावादशितमिव न भवति, क्षुच्छान्तेरनशितमिव न भवति । अतो न दोषद्वयम् ।

अथोपवासपक्षं विधत्ते—

**वज्रो वा इति** । यज्ञस्य नरकपाताद्यनिष्टनिवारकत्वाद्वज्रत्वम् । क्षुधो वैरित्वं प्रसिद्धम् । यज्ञाङ्गभूतोपवासलक्षणेनानेन वज्रेणैव भाविजन्मनि प्राप्स्यमानं साक्षाद्भ्रातृव्यं मुख्यवैरिणं क्षुद्रूपं हन्ति । अनेन यज्ञेन जन्मान्तरेऽन्नबाहुल्यस्य लप्स्यमानत्वात् ।

( यज्ञायुधसंभृत्यभिधानम् )

अथ मीमांसा ।

षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

वत्सैर्दर्शे सवत्सस्य वत्समात्रस्य वा विधिः ।
व्रतकालं लक्षयेद्वा वत्सयुक्ते व्रते विधिः ॥
भाति रागाद्व्रतप्राप्तेर्वत्समात्रं विधीयते ।
व्रतस्याकरणं वत्सः कालंगीस्तदपाकृतेः " इति ।

दर्शपूर्णमासयोः श्रूयते—" बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायाम् " इति । व्रतं भोजनम् । अत एवाऽऽम्नायते—" अमाषममांसं बहुसार्पिष्कं व्रतयति " इति । तदेतद्व्रतं वत्ससंयुक्तमत्र विधीयते । कुतः । वत्सैरिति तृतीयया साहित्यस्य प्रतिभानादित्येकः पक्षः। रागत इत्येव प्राप्तत्वाद्व्रतं न विधीयते किंतु वत्समात्रं विधेयमिति द्वितीयः पक्षः । न हि वत्सः पाण्यादिवद्व्रतस्य करणम् । ततो न तस्य विधिः । किंतु वत्सानामपाकरणेन काल उपलक्ष्यते । तस्मिन्काले व्रतमुपेयात् । एवं पूर्णमासे बर्हिःसंपादनकाले व्रतमुपेयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

[ अथ प्रथमाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः ]।

यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधतेऽपः प्र णयति श्रद्धा वा आपः श्रद्धामेवाऽऽरभ्य यज्ञेन यजत उभयेऽस्य देवमनुष्या इष्टाय श्रद्दधते तदाहुरति वा एता वर्त्रं नेदन्त्यति वाचं मनो वावैता नाति नेदन्तीति मनसा प्र णयतीयं वै मनः ( १ ) अनयैवैनाः प्र णयत्यस्कन्नहविर्भवति य एवं वेद यज्ञायुधानि सं भरति यज्ञो वै यज्ञायुधानि यज्ञमेव तत्सं भरति यदेकमेक संभरेत्पितृदेवत्यानि

---

१ ख. °लस्तस्माद्° । २ ख. विधातव्यं ।

स्युर्यत्सह सर्वाणि मानुषाणि द्वेद्वे सं भरति याज्यानुवाक्य-
योरेव रूपं करोत्यथो मिथुनमेव यो वै दश यज्ञायुधानि
वेद मुखतोऽस्य यज्ञः कल्पते स्फ्यः [२] च कपालानि
चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं
च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि य
एवं वेद मुखतोऽस्य यज्ञः कल्पते यो वै देवेभ्यः प्रतिप्रोच्य
यज्ञेन यजते जुषन्तेऽस्य देवा हव्यꣳ हविर्निरुप्यमाणमभि
मन्त्रयेताग्निꣳ होतारमिह तꣳ हुव इति (३) देवेभ्य एव
प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यमेष वै यज्ञस्य
ग्रहो गृहीत्वैव यज्ञेन यजते तदुदित्वा वाचं यच्छति यज्ञस्य
धृत्या अथो मनसा वै प्रजापतिर्यज्ञमतनुत मनसैव तद्यज्ञं
तनुते रक्षसामनन्ववचाराय यो वै यज्ञं योग आगते युनक्ति
युङ्क्ते युञ्जानेषु कस्त्वा युनक्ति स त्वा युनक्त्वित्याह प्रजा-
पतिर्वै कः प्रजापतिनैवैनं युनक्ति युङ्क्ते युञ्जानेषु (४) ॥

(वै मनः स्फ्य इति युनक्त्वेकादश च)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ प्रथमकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः)।

सप्तमे देवतापरिग्रहादिरुक्तः । अष्टमे यज्ञायुधसंभृतिरुच्यते ।
तत्र प्रथमं तावदपां प्रणयनं विधातुं प्रस्तौति—

**यो वै श्रद्धामिति** । यो यजमानो मनसि देवतादिविषयां श्रद्धामसंनिधाप्य
यष्टुं प्रयुङ्क्ते तदीयामिष्टिं देवा ऋत्विजश्च न विश्वसन्ति ।

विधत्ते—

( यज्ञायुधसंभृत्यभिधानम् )

**अपः प्रेति** । अपां श्रद्धाहेतुत्वमितरोऽपिणः समामनन्ति—" आपो ह्यस्मै श्रद्धां संनमन्ते पुण्याय कर्मणे " इति । प्रत्यक्षं चैतत्स्नानाचमनादियुक्तस्य देवपूजादावैकाग्र्यातिशयदर्शनात् । अतोऽपां प्रणयनेन श्रद्धाया उपस्थापितत्वाद्देवानामृत्विजां चैतदीये यज्ञे विश्वासो युक्तः । यद्यपि पौरोडाशिककाण्डेऽध्वर्युकर्तृकमिदं प्रणयनं विहितं तथाऽपि शाखाभेदान्नपुनरुक्तिः । शाखाभेदश्चाऽऽपस्तम्बेन तत्रत्यमन्त्राणां साकल्येनानुवादाद्विविपुनरुक्तिबाहुल्याच्चावगन्तव्यः ।

पृथिवीं च मनसा ध्यायन्नीति सूत्रकारेण प्रणयनकाले ध्यानमुक्तं, तदिदं विधातुं विधत्ते—

**तदाहुरिति** । तत्तत्रापां प्रणयने केचिदभिज्ञा इत्याहुः । किमिति । एता आपो वत्रं शरीरस्य वृत्तिमतिनेदन्ति अतिक्रामन्ति, वाचमप्यतिक्रामन्ति, न खलु प्रवहन्तीनां नद्यादिगतानामपां निवारणं शरीरेण वाचा वा कर्तुं शक्यते । मन एवैकमेता आपो नातिक्रामन्तीति । तदुत्तरत्र स्पष्टी करिष्यते ।

विधत्ते—

**मनसेति** । पृथिवीं ध्यायन्निति शेषः । ब्राह्मणान्तरमनुसृत्य सूत्रकारेणोक्तत्वात् ।

अनतिक्रमणमुपपादयति—

**इयं वा इति** । मनसः पृथिवीवद्व्याप्तुं शक्यत्वात्पृथिवीत्वम् । न हि नद्यादिगता आपः पृथिव्या अतिक्रमणे शक्ताः ।

मनसा प्रणयनस्य वेदनं प्रशंसति—**अस्कन्नहाविरिति** ।

विधत्ते—

**यज्ञायुधानीति** । वक्ष्यमाणानि स्फ्यकपालादीनि यज्ञस्य साधनत्वादायुधानीत्युच्यन्ते । तान्यध्वर्युः संपादयेत् । साध्यसाधनयोरभेदोपचाराद्यज्ञस्यैव तदायुधत्वम् । तत्तेनाऽऽयुधसंपादनेन यज्ञमेव संपादयति ।

अत्राऽऽयुधानां प्रयोगस्त्रिविधः । एकैकस्य प्रयोगः सर्वेषां सह प्रयोगो द्वयोर्द्वयोः प्रयोगश्चेति । तत्र तृतीयं विधातुमितरपक्षौ निन्दति—

**यदेकमेकमिति** । ईदृशौ पैतृकमानुषपात्रप्रयोगौ गृह्यकारेण दर्शितौ—द्वंद्वं न्यञ्चि पात्राणि प्रयुनक्ति देवसंयुक्तानि सकृदेव मनुष्यसंयुक्तान्येकैकशः पितृसंयुक्तानीति ।

---

१ ख. °वीं म° ।

विधत्ते—

**द्वेद्वे इति** । द्वित्वसाम्येन याज्यानुवाक्यारूपत्वं स्त्रीपुरुषात्मकमिथुनत्वं च । संपादनीयानां यज्ञायुधानां स्वरूपविशेषं विधातुं तद्वेदनं प्रशंसति—

**यो वै दशेति** । यो यजमानो मुखतो यज्ञारम्भे दशैतानि संपादनीयानीत्यनुसंधत्तेऽस्य यज्ञो निर्विघ्नेनानुष्ठानक्षमो भवति ।

आयुधविशेषस्वरूपाणि विधत्ते—

**स्फ्यश्चेति** । स्फ्यो नाम बाहुमात्रः खड्गाकारः काष्ठविशेषः । कपालानि भाण्डलेशसदृशानि । अग्निहोत्रहवणीलक्षणं सूत्रकार आह—वैकङ्कत्यग्निहोत्रहवणी बाहुमात्र्यरत्निमात्री वा प्रसृताकृतिरिति । शम्या बाहुमात्रो गदाकृतिः काष्ठविशेषः । शिष्टानि शूर्पादीनि लोकप्रसिद्धानि । पुनरपि दशायुधवेदनप्रशंसनमुपसंहारार्थम् । चकाराः परस्परसमुच्चयार्था अनुक्तदशायुधसमुच्चयार्था वा ।

तानि सर्वाण्यापस्तम्बो दर्शयति—

" उत्तरेण गार्हपत्याहवनीयौ दर्भान्संस्तीर्य द्वंद्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि तान्युत्तरेणावशिष्टान्यन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणि " इति ।

यजमानस्याभिमन्त्रणं विधातुं प्रस्तौति—

**यो वै देवेभ्य इति** । प्रतिप्रोच्य होष्यामीति प्रतिश्रुत्य ।

विधत्ते—

**हविर्निरुप्यमाणमिति** । अग्निः होतारमित्यादिमन्त्रः पूर्वप्रपाठके मम नामेत्यनुवाके समाम्नातो व्याख्यातश्च । देवानामाह्वातारं तमग्निमिह यज्ञेऽहमाह्वयामि । आ यन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्येत्यस्मिन्नुत्तरार्धे देवेभ्यः प्रतिश्रवणं विस्पष्टम् । अस्य हविषो वियन्तु इदं हविरश्नन्त्वित्यर्थः ।

इदमभिमन्त्रणं पुनः प्रशंसति—

**एष वा इति** । एष मन्त्रप्रयोगो यज्ञस्वीकाररूपः । हविषो वियन्त्वित्यनेन देवतामुद्दिश्य द्रव्यत्यागस्य सूचितत्वात् ।

यजमानस्य मौनं विधत्ते—

१ ख. °नि भग्ननूतनमृद्भाण्डलेशा° ।

(यज्ञायुधसंभृत्यभिधानम्)

**तद्गुदित्वेति** । तदभिमन्त्रणमन्त्रवाक्यम् । मौनेन यज्ञो बहिरप्रकाशितत्वाद्धृतो भवति ।

पुनरपि मौनं प्रशंसति—

**अथो मनसेति** । सति वाग्व्यापारे विवक्षितशब्दविशेषतदर्थचिन्तया तत्प्रसक्तानुप्रसक्तचिन्तया च विक्षिप्तं मनः प्रकृताद्यज्ञात्[1]स्खलति । अतः प्रजापतिरविक्षेपाय मनसैव यज्ञमकरोत् । तद्वद्यजमानोऽपि तत्तेन मौनेन मनसैव यज्ञं तनुते । तथा सति स्खलनाभावाद्रक्षसामत्र प्रचारो न भवति ।

यज्ञयोगविधिमुन्नेतुं प्रस्तौति—

**यो वै यज्ञमिति** । यो यजमानो यज्ञयोगकाले समागते सत्यप्रमत्तो यज्ञं युनक्ति स एव युञ्जानेषु यजमानेषु युङ्क्त इति व्यपदेशमर्हति । अकाले तु योगः कृतोऽप्यकृत एव स्यात् ।

योगविध्युन्नयनमभिप्रेत्य तत्र करणभूतं मन्त्रमुदाहृत्य व्याचष्टे—

**कस्त्वा युनक्तीति** । अयमपि मन्त्रः पूर्वप्रपाठके समाम्नातः । यः प्रजापतिः सर्वदा सर्वेषां यजमानानां यज्ञं युनक्ति स एवाद्य मदीयं यज्ञं युनक्तु रथेऽश्वमिव मयि यज्ञं संबध्नातु । अनेन मन्त्रेण यज्ञं युञ्ज्यादित्युन्नेयो विधिः ।

अथ मीमांसा ।

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

द्रव्यस्य स्फ्यकपालादेः सांकर्यं वा व्यवस्थितिः ।
यज्ञायुधत्वं सर्वाङ्गसमं तेनात्र संकरः ।
वाक्यस्योद्धननादेः स्याद्वैयर्थ्यं संकरे सति ।
अनुवादो ह्यायुधोक्तिर्व्यवस्था तेन पूर्ववत् ।

दर्शपूर्णमासयोः श्रूयते—"स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि" इति । स्फ्यशब्देन खड्गाकारं काष्ठमुच्यते । अग्निहोत्रहवणी हविर्निर्वापसाधनं काष्ठपात्रम् । शम्या गदाकारं काष्ठम् । तत्र व्रीह्यादिद्रव्येष्ववघातादिसंस्काराणां सांकर्ये निराकृतेऽपि स्फ्यकपालादिद्रव्याणामुद्धननपुरोडाशश्रपणाद्यङ्गक्रियासु सांकर्यं निराकर्तुमशक्यम् । येन केनापि द्रव्येण यस्यां कस्यां-

[1] क. घ. ङ. च. °ज्ञाच्चल° ।

चित्क्रियायां कृतायामपि श्रूयमाणस्य यज्ञायुधत्वस्याविरोधात् । न च (घ)व्यवस्थामात्रेण यज्ञसाधनत्वमेवैतीति प्राप्ते ब्रूमः—स्फ्येनोद्धन्ति । कपालेषु श्रपयति । अग्निहोत्रहवण्या हवींषि निर्वपति । शूर्पेण विविनक्ति । कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति । शम्यायां दृषदमुपदधाति । उलूखलमुसलाभ्यामवहन्ति । दृषदुपलाभ्यां पिनष्टीत्येतेषां विशेषसंयोगबोधकानां वाक्यानां वैयर्थ्यं सांकर्यपक्षे प्रसज्येत । व्यवस्थापक्षेऽपि संबन्धसामान्यबोधकं यज्ञायुधवाक्यमनर्थकमिति चेन्न । उद्धननादिवाक्यसिद्धार्थानुवादित्वात् । न च वैपरीत्येनोद्धननादिवाक्यानामेवानुवादित्वमिति वाच्यम् । बहुवैयर्थ्यस्य जघन्यत्वात् । न चात्यन्तं यज्ञायुधानुवादस्य वैयर्थ्यम् । यज्ञायुधानि संभरतीत्यासादनविधानायोपयुक्तत्वात् । तस्मादवघातादिसंस्कारा इव स्फ्यकपालादिद्रव्याणि व्यवस्थितानि ।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

दश यज्ञायुधानीति हविष्ट्वेन विधिर्न वा ।
आद्योऽप्राप्तेः पुरोडाशे समुच्चयविकल्पने ॥
सार्धमुत्पत्तिशिष्टेन विकल्पादिर्न युज्यते ।
स्फ्येनोद्धन्तीति यत्प्राप्तं तदत्रानूद्य संस्तवः ॥

दर्शपूर्णमासयोः स्फ्यश्च कपालानि चेत्याद्यनुक्रम्यैतानि वै दश यज्ञायुधानीत्याम्नातम् । तानि चात्र हविष्ट्वेन विधीयन्ते । कुतः । मानान्तरैरप्राप्तत्वेनापूर्वार्थत्वात् । यदि तत्र पुरोडाशो हविर्भवेत्तदा तेन सहैतेषां समुच्चयो विकल्पो वाऽस्त्विति प्राप्ते ब्रूमः—आग्नेयोऽष्टाकपाल इत्युत्पत्तिशिष्टेन पुरोडाशेन सह पश्चाच्छिष्टानामायुधानां विकल्पो समुच्चयो वा न संभवति । आयुधत्वं यज्ञसाधनत्वम् । तच्च स्फ्येनोद्धन्ति कपालेषु श्रपयतीत्यादिशास्त्रसिद्धमेवात्रानूद्य यज्ञायुधानि संभरतीत्येष संभरणविधिः स्तूयते । तस्मान्नास्ति हविष्ट्वम् ।

एकादशाध्यायस्य तृतीयपादे चिन्तितम्—

देशपात्रर्त्विजोऽन्यस्मिन्प्रयोगेऽन्य उतैच्छिकाः ।
भुक्त्यर्थपर्णवत्तेऽन्ये वासोवत्ते स्युरैच्छिकाः ॥

समे यजेतेत्युक्तो देशः । जुह्वादीनि पात्राणि । अध्वर्युप्रमुखा ऋत्विजः । ते चैकस्मिन्प्रयोग उपयुक्ता निरिष्टकत्वान्न प्रयोगान्तरमर्हन्ति । इष्टान्निर्गता निरिष्टाः ।

---

क. घ. ङ. °त्वमुपै° ।

( यज्ञायुधसंभृत्यभिधानम् )

कुत्सिता निरिष्टा निरिष्टका दुष्टाः। पुनःप्रयोगानर्हा इत्यर्थः । यथा भोजन उपयुक्तं कदलीपलाशादिपर्णं प्रक्षाल्यापि न पुनः शिष्टास्तत्स्वी कुर्वन्ति तथाऽत्राप्यन्ये देशादयः प्रयोगान्तरे संपाद्या इति प्राप्ते ब्रूमः—यथा वस्त्रं पूर्वदिने प्रावरणायोपयुक्तमिति दिनान्तरे निरिष्टकं न भवति, शिष्टास्तद्वाऽन्यद्वा स्वेच्छया दिनान्तरे स्वी कुर्वन्ति तद्वत्रापि द्रष्टव्यम् । इदं निरिष्टकमिदं नेत्यत्र शिष्टाचार एव प्रमाणम् । शिष्टाश्च देशादीन्नियमेन न त्यजन्ति । तस्मादैच्छिकाः ।

तत्रैवान्यच्चिन्तितम्—

मा भूदन्यत्वनियमः पात्रे तन्त्रं किमैच्छिकम् ।
नियतं वाऽग्निमो देशवन्मैवं प्रतिपत्तितः ।

देशपात्रर्त्विजां साधारण्येनान्यत्वनियमे निवारिते सति पुनः पात्रेषु नियमान्तरसदसद्भावश्चिन्त्यते । प्रथमप्रयोगे यान्युपयुक्तानि पात्राणि तान्येव प्रयोगान्तरेष्विति नियमो नास्त्युतास्तीति संशयः। यथा देशकर्तृषु त एवेति नियमो नास्त्यैच्छिकस्योक्तत्वात्तथा पात्रेष्वपीति चेन्मैवम् । आमरणं पात्राणां धारणीयत्वात् । आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति प्रतिपत्तिविधानेनाऽऽमरणं धारणमेव गम्यते । ननु पात्रैरिति तृतीयाया गुणभावावगमादर्थकर्मेदं न तु प्रतिपत्तिः । तथा सति पात्रान्तरैरपि दाहसिद्धेर्न धारणनियम इति चेन्मैवम् । दक्षिणे पाणौ जुहूमासादयतीति द्वितीयया प्रतिपाद्यत्वावगमात्पूर्वेषामेव धारणम् । तस्मात्सर्वेषु प्रयोगेषु पात्राणां तन्त्रम् ।

तत्रैवान्यच्चिन्तितम्—

किं पौर्णमासीमारभ्य यद्वाऽऽधानमियं धृतिः ।
प्रकृत्यर्थतयाऽऽद्यः स्यान्मरणानियमात्परः ॥

अनारभ्याधीतानां पात्राणां प्रकृतिगामितया पौर्णमासीमारभ्य धारणमिति प्राप्ते ब्रूमः—आधानकाले पवमानेष्टिषु चोदकप्राप्तत्वात्पात्राण्याधानमारभ्य धारयितव्यानि । अन्यथाऽऽधानपौर्णमास्योर्मध्ये यजमानस्य कदाचिन्मरणे पात्राभावेन दाहाभावप्रसङ्गात् । तस्मादाधानमारभ्य धारणमित्ययं परः पक्षोऽभ्युपगन्तव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

———

( अथ प्रथमाष्टके षष्ठप्रपाठके नवमोऽनुवाकः )।

प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रो य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाऽऽप्नोति य एवं विद्वान्पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति ( १ ) तावदुपाऽऽप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाऽऽप्नोति परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छत्तेन प्रजापतिं निरवासाययत्तेन प्रजापतिः परमां काष्ठामगच्छत्तेनेन्द्रं निरवासाययत्तेनेन्द्रः परमां काष्ठामगच्छत्तेनाग्नीषोमौ निरवासाययत्तेनाग्नीषोमौ परमां काष्ठामगच्छतां यः [ २ ] एवं विद्वान्दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति यो वै प्रजातेन यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते द्वादश मासाः संवत्सरो द्वादश द्वंद्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीत्याहुर्वत्सं चोपावसृजत्युखां चाधि श्रयत्यव च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोप दधाति पुरोडाशं च ( ३ ) अधिश्रयत्याज्यं च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिं च परिगृह्णाति पत्नीं च सं नह्यति प्रोक्षणीश्चाऽऽसादयत्याज्यं चैतानि वै द्वादश द्वंद्वानि दर्शपूर्णमासयोस्तानि य एवꣳ संपाद्य यजते प्रजातेनैव यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते ( ४ ) ॥

( द्वादशद्वंद्वसंपत्त्यभिधानम् )

( उक्थ्येनोपामोत्यंगच्छतां यः पुरोडाशं च चत्वारिꣳशच्च )।

## इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः ) ।

अष्टमे यज्ञायुधसंभृतिरुक्ता । नवमे द्वादशद्वंद्वसंपत्तिरुच्यते । प्रथमं तावदनुष्ठातॄणां फलाधिक्याय वेदनविशेषविधिमुन्नेतुं प्रस्तौति—

**प्रजापतिरिति** । अत्राग्निहोत्रपौर्णमास्यमावास्यायागा अल्पैर्द्रव्यमन्त्रक्रियाविशेषैः साध्या अत एवाल्पफलाः । अग्निष्टोमोक्थ्यातिरात्रयागा बहुभिर्द्रव्यमन्त्रक्रियाविशेषैः साध्या अत एवाधिकफलाः । तानुभयविधान्यज्ञान्प्रजापतिः सृष्ट्वा कनिष्ठपुत्रे पितेव कनीयःस्वाग्निहोत्रादिष्वनुग्रहेण तुलया त्रीणि द्वंद्वान्युन्मितवान् । तदनुग्रहादग्निहोत्रादीन्यग्निष्टोमादिसमानि संपन्नानि ।

वेदनविशेषविधिमुन्नयति—

**य एवं विद्वानिति** । प्रजापत्यनुग्राहादग्निहोत्रादीनामग्निष्टोमादिसाम्यं जानतः समानफलत्वकथनात्फलाधिक्यायानुष्ठातृभिरग्निष्टोमादिसाम्यं भावयेदिति विधिरुन्नीयते । विद्यया युक्तस्य कर्मणः फलाधिक्यं छन्दोगा आमनन्ति—"यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति । लोकेऽपि राज्ञा ग्रामेषु प्रेरिते राजमुद्राधारिणि नीचे कस्मिंश्चिद्भृत्ये राजत्वमुपचरन्तीनां प्रजानां भृत्यचित्तप्रसादेन फलाधिक्यमुपलभामहे। काण्वैश्च बृहदारण्यकस्य पञ्चमाध्याये कानिचिदुपासनान्यथ संपद इति वाक्येनाऽऽम्नायन्ते ।स्वल्पे कर्मण्यधिककर्मत्वस्य मनसा संपादनं संपत्। एतदेवाभिप्रेत्य सर्वेषु स्मृतिपुराणागमेषु शालग्रामप्रतिमादौ विष्ण्वादिबुद्धिर्विहिता । तस्मादेतद्वाक्यमग्निहोत्रादावग्निष्टोमादिसंपादनविधिपरम् । यद्यपि पूर्वमीमांसायां द्वितीयाध्याये य एवं विद्वान्पौर्णमासीं यजत इत्यस्य विद्वद्वाक्यस्य विधायकत्वं निराकृत्यानुवादकत्वमुक्तं तथाऽपि कर्मविधेरेव तत्र निराकरणात्संपद्बुद्ध्युन्नीतो न कोऽपि विरोधः । भावनाविधिपरत्वे वाक्यमेतत्कर्म-

---

१ ख. °पद्विध्युन्नि° ।

प्रकरणादुत्कृष्येतेति चेत् । उत्कृष्यतां नाम । अग्निचयनप्रकरणपठितानां मनश्चिदाद्युपास्तीनां प्रकरणोत्कर्षस्य व्यासेनैव निर्णीतत्वात् । अन्यपरस्यान्यार्थत्वाद्दर्शपूर्णमासौ प्रशंसितुमत्र पाठोऽस्तु ।

पुनरपि दर्शपूर्णमासौ प्रशंसति—

**परमेष्ठिनो वा इति** । परमे पदे सत्यलोके तिष्ठतीति परमेष्ठी चतुर्मुखः । तस्य चाग्रे पूर्वस्मिन्कल्पे यजमानत्वेनावस्थितस्यैष यज्ञो दर्शपूर्णमासयज्ञः प्रवृत्तः। तेन चेश्वरार्पणबुद्ध्याऽनुष्ठितेन स यजमानः परमां काष्ठामिदं परमेष्ठित्वपदं प्राप्तवान् ।प्रजापतिर्दक्षादिः। तं पूर्वस्मिञ्जन्मनि तेनोत्तमफलहेतुदर्शपूर्णमासोपदेशेन निरवासाययत्तोषितवाननुष्ठानाय प्रेरितवान्वा। स च तस्मिञ्जन्मनि यजमानस्तेनानुष्ठानेन परमां काष्ठां दक्षत्वपदं प्राप्तवान् । एवमितरत्र योज्यम् । अत एव दर्शपूर्णमासयोः स्वर्गकामार्थत्वमाम्नातं मीमांसकैर्विचारितं च ।

द्वंद्वसंपादनं विधातुं प्रस्तौति—

**यो वै प्रजातेनेति** । प्रजातेनात्यन्तविस्तृतेन प्रजादिभिः प्रसृतो विस्तृतो जायते । द्वादशमासोपेतसंवत्सरसाम्येन द्वादशद्वंद्वोपेतस्य यज्ञस्य प्रसृतत्वम् ।

द्वंद्वानि विधत्ते—

**वत्सं चोपावसृजतीति** । गां दोग्धुमध्वर्युरयक्ष्मा वः प्रजयेति मन्त्रेण वत्सं बन्धनान्मुञ्चेत्। क्षीरं श्रपयितुं मातरिश्वनो घर्म इति मन्त्रेणोखां गार्हपत्ये स्थापयेत् । अव रक्षो दिव इति शाखान्तरमन्त्रेण व्रीहीनवहन्यात् । इषमा वदेति मन्त्रेण पाषाणेन शम्यया वा पेषणार्थं दृषदुपले समाहन्यात् । देवस्य त्वेत्यादिमन्त्रेण पेषणाय दृषदि तण्डुलानधिवपेत् । ध्रुवमसीत्यादिभिर्मन्त्रैः पुरोडाशश्रपणायाग्नौ कपालान्युपदध्यात् । घर्मोऽसीति मन्त्रेण तेषु कपालेषु पुरोडाशमधिश्रयेत् । अग्निस्ते तेज इति मन्त्रेणाऽऽज्यमाहवनीयेऽधिश्रयेत् । चिकीर्षितवेदिस्थाने पृथिवि देवयजनीत्यादिभिर्मन्त्रैः स्तम्बयजुर्हरेत् । अररुस्ते दिवमिति मन्त्रेणाऽऽग्नीध्रोऽञ्जलिना सतृणपांसूनुत्करे प्रक्षिप्तानभिगृह्णीयात्। वसवस्त्वा परिगृह्णन्त्वित्यादिभिर्मन्त्रैर्वेदिं परिगृह्णीयात् । आशासानेति मन्त्रेण योक्त्रेण पत्नीं संनह्येत् । ऋतसधस्थेति शाखान्तरमन्त्रेण स्फ्यनिष्पादितायां लेखायां प्रोक्षणीरासादयेत् । अग्नेर्जिह्वाऽसीति मन्त्रेण स्फ्यलेखायामाज्यं सादयेत् ।

विहितानि द्वंद्वानि प्रशस्योपसंहरति—

**एतानि वा इति** । यद्यप्युक्तानां वत्सविमोकादीनां चतुर्दशत्वात्स्थैवैतानि

(द्वादशद्वंद्वसंपत्त्यभिधानम्)

द्वंद्वानि तथाऽपि चकारैः पूर्वानुवाकोक्तेषु दशसु यज्ञायुधेषु समुच्चितेषु द्वादश संपद्यन्ते ।

अथ मीमांसा ।

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

एवं विद्वान्पौर्णमासीममावास्यामितीरितम् ।
कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम् ॥
कर्मान्तरं स्यादभ्यासाद्ध्रौवं द्रव्यं हि देवता ।
वार्त्रघ्नीत्यादितो लभ्याऽनुवादस्तु न युज्यते ॥
वार्त्रघ्नीत्याज्यभागाङ्गव्यवस्थोक्तेर्न देवता ।
पौर्णेत्यनूद्यते पौर्णमासीयुक्तं त्रिकं तथा ॥
अमेत्यपि समूहस्य द्वित्वसिद्धिः प्रयोजनम् ।
सहस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिके त्रिके ॥
विद्वद्वाक्ये विधौ विध्यावृत्तिराग्नेयआदिना ।
विहितस्य फलित्वेन प्राधान्यमितरे गुणाः ।

इदमाम्नायते—य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इति । अत्र यजतिना कर्मान्तरं विधीयते न तु प्रकृता आग्नेयादयः षड्यागा अनूद्यन्ते । आग्नेयादयः कालसंयुक्तास्तत्प्रकरण एवाऽऽम्नाताः;—"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इति । "तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजाति" इति । "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" इति । "ऐन्द्रं दध्यमावास्यायाम्" इति । "ऐन्द्रं पयोऽमावास्यायाम्" इति च । एतेभ्यः प्रकृतेभ्यः षड्भ्य आग्नेयादिभ्यो विद्वद्वाक्यविहितस्य कर्मणोऽन्यत्वे सति पूर्वाधिकरणन्यायेन विध्यभ्यास उपपद्यते । न च कर्मान्तरत्वे द्रव्यदेवतयोरभावो ध्रौवादिसद्भावात् । अत एवोक्तम्—

"ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी ।
रूपवन्तौ ततो यागौ विधीयेते पृथक्तया" इति ॥

"सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम्" इति ध्रौवस्य साधारणत्वं श्रुतम् । देवताया मान्त्रवर्णिकत्वमित्थमुन्नेतव्यम्—"तस्माद्वार्त्रघ्नी पूर्णमा-

सेऽनूच्येते वृधन्वती अमावास्यायाम् ” इति। वार्त्रघ्न्यौ वृधन्वत्यौ चर्चौ क्रमेण कालद्वयोपेते विधीयेते। तत्राग्निर्वृत्राणि जङ्घनदित्येको वार्त्रघ्नो मन्त्रः। त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहेत्यपरः। तयोरुक्तावग्नीषोमौ पौर्णमासदेवता। एवमनन्तराम्नातयोर्वृधिधातुयुक्तयोर्मन्त्रयोरुक्तावग्नीषोमावमावास्यादेवता। ताभ्यां द्रव्यदेवताभ्यां रूपवत्त्वाद्यागान्तरमत्र विधीयते। षड्यागानुवादत्वे तदनुवादेन विधेयान्तरस्य कस्यचिददर्शनाद्विद्वद्वाक्यमनर्थकं स्यात्। न केवलं तद्वानर्थक्यं किंतु पौर्णमास्या पौर्णमास्यां यजेत, अमावास्यायाममावास्यया यजेतेत्येतदपि व्यर्थं स्यात्। न चैतत्कालविधायकं यदाग्नेय इत्याद्युत्पत्तिवाक्यैरेव तद्विधानात्। कर्मान्तरत्वे तु कालं विधास्यति। तस्मात्कर्मान्तरविधिरिति प्राप्ते ब्रूमः—आस्तां तावद्द्रव्यं, देवता तु विधित्सितस्य कर्मान्तरस्य सर्वथा न लभ्यते। वार्त्रघ्न्योर्वृधन्वत्योश्चाऽऽज्यभागदेवताप्रतिपादकत्वात्। हौत्रे मन्त्रकाण्डे सामिधेनीरावाहननिगदप्रयाजमन्त्रांश्चाऽऽम्नाय प्रयाजानन्तरभाविनोराज्यभागयोः क्रमेण वार्त्रघ्न्यौ वृधन्वत्यौ चाऽऽम्नाते। लिङ्गं चाग्निविषयं सोमविषयं च तत्रोपलभ्यते। ततो लिङ्गक्रमाभ्यामाज्यभागविषयत्वमवगम्यते। यत्तु वार्त्रघ्नी पूर्णमास इत्यादिवाक्यं तल्लिङ्गक्रमक्लृप्तयोराज्यभागाङ्गयोर्मन्त्रयुगलयोः कालद्वये व्यवस्थामाचष्टे, न तु नूतनकर्माङ्गतां तयोर्विदधाति। अतो रूपराहित्याद्विद्वद्वाक्यं कर्मान्तरविधायकं न भवति, किं तर्हि पूर्वप्रकृतेष्वाग्नेयादिषु षट्सु त्रिकरूपौ द्वौ समुदायावनुवदति। न च कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागानुवादानुपपत्तिः। तत्कालविहितयोर्यागत्रिकयोरुपलक्षितत्वात्। न चानुवादो व्यर्थः। समुदायद्वित्वसिद्धेस्तत्प्रयोजनत्वात्। तत्सिद्धौ च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यस्मिन्फलवाक्ये षड्यागविवक्षया द्विवचननिर्देश उपपद्यते। यदप्युक्तमनुवादपक्षे पौर्णमास्यामित्यादिवाक्यवैयर्थ्यमिति, तदयुक्तम्। कालविधानासंभवेऽप्येकैकस्य त्रिकस्य सहप्रयोगविधानात्। आग्नेयोपांशुयाजाग्नीषोमीयाणां त्रयाणां पौर्णमासीकालविहितानां सह प्रयोगः पौर्णमास्येत्यनेन तृतीयैकवचनान्तेन विधीयते। एवमितरत्रापि। ननु विद्वद्वाक्यस्य कर्मान्तरविधायकत्वाभावेऽपि नानुवादकत्वं, तस्य यागविधायकत्वाभ्युपगमात्। आग्नेयोऽष्टाकपाल इत्यादिवाक्यानि तु विहितयागानुवादेन द्रव्यदेवतालक्षणगुणविधायकानीति चेन्न। तथा सत्येकेन वाक्येनानेकगुण-

(द्वादशद्वंद्वसंपत्त्यभिधानम्)
विध्यसंभवात्। प्रतिगुणं पृथग्विधौ विध्यावृत्तिः प्रसज्येत। आग्नेयादिवाक्यानां विधायकत्वे तु विशिष्टविधित्वान्नास्ति विध्यावृत्तिदोषः। तस्मादाग्नेयादिवाक्यविहितानां विद्वद्वाक्यमनुवादकम्। किंचानुवादमनभ्युपगम्य कर्मान्तरविधिं वदतः प्रयाजादीनामाग्नेयादीनां च गुणप्रधानभावो न सिध्येत्। तथा हि—समिधो यजत्याघारमाघारयतीत्यादयः कालयोगरहिताः केचिद्विधय आम्नाताः। यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चेत्यादयः कालयुक्ता अपरे। तेषामुभयेषां प्रकृतत्वाद्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्येन सर्वेषां फलसंबन्धो बोधनीयः। दर्शपूर्णमासाभ्यामिति द्विवचनं बहुवचनत्वेन परिणेतव्यम्। विद्वद्वाक्याविहिते द्वे कर्मान्तरे प्रयाजादय आग्नेयादयश्चेत्येतेषु द्वित्वासंभवात्। सर्वेषां च फलसंबन्धे राजसूयगतेष्टिपशुसोमवत्समप्राधान्यात्प्रयाजादीनां गुणभावो न स्यात्। तदभावे चानङ्गत्वात्सौर्यादिविकृतिष्वाग्नेयादीनामिवातिदेशो न स्यात्। अनुवादपक्षे तु त्रिकयोः कालयोगेन दर्शपूर्णमासशब्दार्हत्वात्समुदायद्वित्वेन द्विवचनार्हत्वाच्चाऽऽग्नेयादीनामेव फलसंबन्धेन प्राधान्यम्। प्रयाजादीनां तु गुणभाव इति न कोऽपि दोषः। तस्माद्विद्वद्वाक्यमनुवादकम्।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

दर्शादिः सर्वकामेभ्योऽनुवादो वा फले विधिः।
अङ्गोपाङ्गोदितः कामो विध्यभावादनूद्यते॥
उत्पत्तिचोदनासिद्धे आश्रित्य विधिभावने।
फलसंयोगबोधेन भवेदेष फले विधिः॥

इदमाम्नायते—"एकस्मै वा अन्या इष्टयः कामायाऽऽह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ" इति। "एकस्मै वा अन्ये यज्ञक्रतवः। कामायाऽऽह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः" इति। तत्र सर्वेभ्य इत्यनेन वाक्येन दर्शपूर्णमासयोर्न फले विधिः। विधायकस्य लिङादेर्भावनावाचिन आख्यातस्य चाभावात्। अनुवादस्तु भविष्यति, सर्वकामानां प्राप्तत्वात्। न च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधानात्स्वर्ग एव प्राप्तो न तु कामान्तरमिति वाच्यम्। अङ्गोपाङ्गकामानामपि प्राप्तत्वात्। सामिधेन्यो दर्शपूर्णमासयोरङ्गम्। तत्र कामाः श्रूयन्ते—"एकविꣳशतिमनुब्रूयात्प्रतिष्ठाकामस्य" "चतुर्विꣳशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य"

इति । तथा सांनाय्ययागस्य दोहनमङ्गं, तत्साधनं वत्सापाकरणमुपाङ्गं, तत्र पर्ण(-शा)शाखाहरणे काम आम्नातः—“ यं कामयेत पशुमान्त्स्यादिति । बहुपर्णां तस्मै बहुशाखामाहरेत् । पशुमन्तमेवैनं करोति ” इति । त एते सर्वे कामा अनूद्यन्त इति प्राप्ते ब्रूमः—मा भूतामस्मिन्वाक्ये विधिभावने । तथाऽप्युत्पत्तिवाक्यसिद्धे ते आश्रित्य तादर्थ्यवाचिन्या चतुर्थ्या फलसंयोगो बोध्यते । तस्मादेष फले विधिः ।

तृतीयाध्यायस्याष्टमे पादे चिन्तितम्—

वत्सं चोपसृजेत्तद्वदुखां चाधिश्रयेदिति ।
द्वादशद्वंद्वकर्मैतत्स्वामिनो वेतरस्य वा ।
आद्यः पाठात्स्वामिकाण्डे तादर्थ्येन परिक्रयात् ।
महाकाण्डोक्तितोऽन्योऽस्तु[1] द्वंद्वतैवात्र कीर्त्यते ॥

दर्शपूर्णमासयोर्याजमानकाण्डे श्रूयते—द्वादश द्वंद्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीत्याहुर्वत्सं चोपावसृजत्युखां चाधिश्रयत्यव च हन्ति दृषदौ च समाहन्तीत्यादि । तत्र गां दोग्धुं वत्सोपसर्जनमेकं कर्म, दोहनेन संपादितं क्षीरं धारयितुं पिठरस्थापनमपरं कर्म । तदेतदुभयमेकं द्वंद्वम् । तथा व्रीहीणामवघातः, दृषदुपलयोः पाषाणान्तरेण समाघात इत्येतदुभयं द्वितीयं द्वंद्वम् । एवं द्वादश कर्मद्वंद्वान्यनुष्ठेयान्यत्राऽऽम्नातानि । तेषां याजमानकाण्डे पठितत्वात्समाख्यया यजमानेन तान्यनुष्ठेयानीति प्राप्ते ब्रूमः—यजमानस्य यानि कार्याणि तान्यनुष्ठातुमेव परिक्रीता ऋत्विजः । किंच यजुर्वेदे याजमानमिदमवान्तरकाण्डं, महाकाण्डं त्वाध्वर्यवमेव । तत्रैते वत्सापाकरणादयो धर्मा आम्नाताः । तस्मादध्वर्युरेवताननुतिष्ठेत् । याजमाने तु काण्डे न तेषामनुष्ठानप्रकारश्चोदितः, किंतु परिगणनया द्वंद्वसंपादनमात्रमेवाऽऽम्नातम् । तेन यजमानस्तामानुपूर्वीं मनसि निधायाध्वर्योरनुष्ठाने प्रमादराहित्यमनुसंधातुं प्रभवति । तस्मादध्वर्योरेवानुष्ठानम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

१ क. घ. ङ. च. °तोऽन्त्यस्तु° ।

( हविःसादनविधिः )

( अथ प्रथमाष्टके षष्ठप्रपाठके दशमोऽनुवाकः ) ।

ध्रुवोऽसि ध्रुवोऽह॑ᳬ सजातेषु भूयासमित्याह ध्रुवानेवैनान्कुरुत उग्रोऽस्युग्रोऽह॑ᳬ सजातेषु भूयासमित्याहाप्रतिवादिन एवैनान्कुरुतेऽभिभूरस्यभिभूरह॑ᳬ सजातेषु भूयासमित्याह य एवैनं प्रत्युत्पिपीते तमुपास्यते युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेन ( १ ) एवैनं युनक्ति यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन्यज्ञस्य व्यृद्धेनासुरान्पराऽभावयन्यन्मे अग्ने अस्य यज्ञस्य रिष्यादित्याह यज्ञस्यैव तत्समृद्धेन यजमानः सुवर्गं लोकमेति यज्ञस्य व्यृद्धेन भ्रातृव्यान्परा भावयत्यग्निहोत्रमेताभिर्व्याहृतीभिरुप सादयेद्यज्ञमुखं वा अग्निहोत्रं ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म ( २ ) कुरुते संवत्सरे पर्यागत एताभिरेवोपसादयेद्ब्रह्मणैवोभयतः संवत्सरं परि गृह्णाति दर्शपूर्णमासौ चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्या सादयेद्यज्ञमुखं वै दर्शपूर्णमासौ चातुर्मास्यानि ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते संवत्सरे पर्यागत एताभिरेवाऽऽ सादयेद्ब्रह्मणैवोभयतः संवत्सरं परि गृह्णाति यद्वै यज्ञस्य साम्ना क्रियते राष्ट्रम् ( ३ ) यज्ञस्याऽऽशीर्गच्छति यदृचा विशं यज्ञस्याऽऽशीर्गच्छत्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद्ब्रह्मैव प्रतिपदं कुरुते तथा ब्राह्मणः साशीर्केण यज्ञेन यजते यं कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याऽऽशीर्गच्छेदिति तस्यैता

व्याहृतीः पुरोनुवाक्यायां दध्याद्भ्रातृव्यदेवत्या वै पुरोनुवाक्या भ्रातृव्यमेवास्य यज्ञस्य ( ४ ] आशीर्गच्छति यान्कामयेत यजमानान्त्समावर्तयेनान्यज्ञस्याऽऽशीर्गच्छेदिति तेषामेता व्याहृतीः पुरोनुवाक्याया अर्धर्च एकां दध्याद्याज्यायै पुरस्तादेकां याज्याया अर्धर्च एकां तथैनान्त्समावर्ती यज्ञस्याऽऽशीर्गच्छति यथा वै पर्जन्यः सुवृष्टं वर्षत्येवं यज्ञो यजमानाय वर्षति स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परि गृह्णाति मनोऽसि प्राजापत्यम् ( ५ ) मनसा मा भूतेनाऽऽ विशेत्याह मनो वै प्राजापत्यं प्राजापत्यो यज्ञो मन एव यज्ञमात्मन्धत्ते वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाऽऽ विशेत्याहैन्द्री वै वाग्वाचमेवैन्द्रीमात्मन्धत्ते ( ६ ) ॥

( तेनैव ब्रह्म राष्ट्रमेवास्य यज्ञस्य प्राजापत्यꣳ षट्त्रिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठके दशमोऽनुवाकः १० ॥

---

( अथ प्रथमकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः) ।

नवमे द्वंद्वसंपादनमुक्तं, दशमे हविःसादनं विधीयते । प्रथमं तावद्द्वितीयानुवाकस्य पूर्वभागोक्तानां मन्त्राणां व्याख्यानम् । तत्र परिध्यनुमन्त्रणमन्त्रानुदाहृत्य व्याचष्टे—

ध्रुवोऽसीति । सजातेषु ध्रुवो भूयासमित्यनेन न केवलं स्वस्यैव ध्रुवत्वं प्रार्थितं, किंत्वेनाञ्ज्ञातीनपि ध्रुवानेव कर्तुं प्रार्थितम् । स्वस्यानुग्रहत्वेनाशिक्षिता ज्ञातयः प्रतिवादिनो भवन्ति । अत उग्रत्वप्रार्थनेन तन्निवार्यते । ज्ञातिमध्ये यः कोऽप्येनं यजमानं प्रत्युत्पिपीते प्रतिकूलो भूत्वोत्सादयितुमिच्छति तं प्रतिकूलमभिभविता भूयासमित्यनेनोपास्यत उपेक्षिपति ।

---

१ क. घ. ङ. च. °पक्षपयति ।

( हविःसादनविधिः )

अग्नियोगमन्त्रमादौ व्याचष्टे—

**युनज्मीति** । एष मन्त्रपाठ एवाग्नेर्योगो भवति । त्वामग्निं युनज्मीतिमन्त्रे श्रवणात् ।

आसन्नस्य हविषोऽभिमन्त्रणं व्याचष्टे—

**यज्ञस्य वा इति** । यज्ञस्य हि द्वावंशौ समृद्धो व्यृद्धश्च । यथाशास्त्रमनुष्ठितः समृद्धः । अतथाभूतो व्यृद्धः । तत्र समृद्धो देवानां स्वर्गप्राप्तिहेतुः । व्यृद्धोऽसुराणां तिरस्कारहेतुः । अतोऽस्मिन्मन्त्रे रिष्यात्स्कन्दादिति व्यृद्धमनूद्य तेन हन्मि सपत्नमिति वैरिपराभवः कथ्यते । समृद्धो न स्वर्गं प्राप्नोतीत्यर्थो लभ्यते ।

भूर्भुवः सुवरिति व्याहृतिभिरग्निहोत्रहविष उपसादनं विधत्ते—**अग्निहोत्रमिति**।

तदेतदुपपादयति—

**यज्ञमुखमिति** । आधानानन्तरमेवानुष्ठेयत्वात्प्राधान्येन सर्वयज्ञेष्वग्निहोत्रस्य मुखत्वम् । व्याहृतयश्च त्रैलोक्यात्मनो विराड्रूपस्य परब्रह्मण्यारोपितशरीरस्य वाचकत्वेन ब्रह्मरूपाः । अतः प्रशस्ते यज्ञमुखे प्रशस्तं ब्रह्मरूपं व्याहृतित्रयं कृतवान्भवति ।

अग्निहोत्रारम्भदिनगते हविःसादने व्याहृतीर्विधाय कालान्तरगतेऽपि सादने विदधाति—

**संवत्सर इति** । आद्यन्तयोर्दिनयोर्व्याहृतिभिरुपसादनं प्रशंसति—

**ब्रह्मणैवेति** । अग्निहोत्रवत्कर्मान्तरेऽपि व्याहृतिभिरासादनं विधत्ते—

**दर्शपूर्णमासाविति** । यज्ञो ज्योतिष्टोमादिः । ततः पूर्वभावित्वाद्दर्शादेर्मुखत्वम् ।

अन्यत्रापि व्याहृतीर्विधत्ते—

**यद्वै यज्ञस्येति** । यज्ञसंबन्धि किंचिदङ्गं साम्ना क्रियते, यथा बहिष्पवमानादि । अन्यत्किंचिदङ्गमृचा क्रियते, यथा याज्यापुरोनुवाक्यादि । तत्र सामसाध्येनाङ्गेन यज्ञफलं तद्राष्ट्रं प्राप्नोति, राष्ट्रे सस्याद्यभिवृद्धिर्भवतीत्यर्थः । ऋक्साध्येनाङ्गेन यत्फलं तद्विशं प्रजां प्राप्नोति, प्रजाया आयुरारोग्यादि वर्धत इत्यर्थः। अथैवं सति ब्राह्मणो यजमानः फलप्रदैर्यजुर्भिर्विरहितत्वादनाशीर्केण निष्फलेन यज्ञेनेष्टवान्भवति । अतो यज्ञरूपा व्याहृतीः प्रयुञ्ज्यात् । होत्राऽनुवचनीयाः प्र वो वाजा इत्यादय ऋचः सामिधेन्यः । तदनुवचनात्प्रागेव होता व्याहृतीः

---

१ ख. °त्प्राथम्येन । २ क. घ. ङ. च. °त्राद्यनु° ।

पठेत् । तद्देवताब्रह्मरूपं व्याहृतित्रयमेव सामिधेनीनां प्रतिपदं प्रारम्भं कृतवान्भवति । तथा सति यजमानः सफलेन यज्ञेनेष्टवान्भवति ।

प्रकारान्तरेण विनियोगं हेयतयोपन्यस्यति–

**यं कामयेतेति** । यं यजमानं प्रति होता द्वेषादेवं कामयेतास्य यज्ञस्य फलं यजमानवैरिणं गच्छेदिति तस्य यजमानस्य यागे पुरोनुवाक्यायाः प्राग्व्याहृतीः प्रयुञ्ज्यात् । तदा पुरोनुवाक्याया वैरी देवतेति तत्फलं वैरिगाम्येव भवति।

प्रकारान्तरेण विनियोगमुपादेयतया विधत्ते–

**यान्कामयेतेति** । बहुयजमानकानामहीनसत्त्राणामङ्गभूतेष्टिषु होता यद्येवं कामयेतैनान्सर्वान्यजमानान्यज्ञस्य फलं सममेव प्राप्नुयादिति तेषां यजमानानां यागे व्याहृतीरेवं दध्यात्–पुरोनुवाक्याया अर्धर्चेऽभिहिते सति प्रथमा व्याहृतिः। याज्यायाः पुरस्ताद्द्वितीया व्याहृतिः । याज्याया अर्धर्चेऽभिहिते सति तृतीया व्याहृतिः । तथा सत्येनान्सर्वान्यजमानान्यज्ञस्य फलं साम्येन प्राप्नोति ।

तामेतां प्राप्तिं दृष्टान्तेन स्पष्टयति–

**यथा वै पर्जन्य इति** । यथा सर्वतः प्रसृतो मेघः पक्षपातमन्तरेण सर्वेषु देशेष्वेकरूपं सुवृष्टं सस्यनिष्पत्तिक्षमं वर्षं मुञ्चत्येवमयं यथोक्तव्याहृत्युपेतो यज्ञः सर्वयजमानसंघाय सुफलं साधारण्येन प्रयच्छति । तेन च सुवृष्टेन नद्यां पूर्णायां सर्वे जनाः स्थलया कूलेनोदकं परिगृह्णन्ति, तद्वद्यजमानसंघ आशिषा साधारणफलेन युक्तमिमं यज्ञं परिगृह्णाति ।

स्रौवाघारस्रुच्याघारानुमन्त्रणमन्त्रौ व्याचष्टे–

**मनोऽसीति** । सर्वव्यवहारसाधनस्य मनसः प्रजापतिना प्रथमसृष्टत्वान्मनसः प्राजापत्यत्वम् । प्रथमसृष्टिश्च होतृब्राह्मणकाण्डे समाम्नायते–" इदं वा अग्रे नैव किंचनाऽऽसीत् । न द्यौरासीत् । न पृथिवी। नान्तरिक्षम् । तदसदेव सन्मनोऽकुरुत स्यामिति " इति । बृहदारण्यकेऽप्याम्नातम्–" तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति" इति । प्रजापतिर्यज्ञानसृजतेत्युक्तत्वात्प्राजापत्यो यज्ञः । अनेन मन्त्रपाठेन तौ मनोयज्ञौ स्वस्मिन्स्थापयति । इन्द्रेण व्याकृतत्वाद्वागैन्द्री । तां च मन्त्रपाठेन स्वात्मनि स्थापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके

दशमोऽनुवाकः ॥ १० ॥

( प्राधान्येनाऽऽश्रावणादिमन्त्राः )

( अथ प्रथमाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः )।

यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशत आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशते यो वै यज्ञस्य प्रायणं प्रतिष्ठाम् ( १ ) उदयनं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छत्या श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कार एतद्वै यज्ञस्य प्रायणमेषा प्रतिष्ठैतदुदयनं य एवं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छति यो वै सूनृतायै दोहं वेद दुह एवैनां यज्ञो वै सूनृताऽऽ श्रावयेत्यैवैनामह्वदस्तु ( २ ) श्रौषडित्युपावास्राग्यजेत्युदनैषीद्ये यजामह इत्युपासदद्वषट्कारेण दोग्ध्येष वै सूनृतायै दोहो य एवं वेद दुह एवैनां देवा वै सत्रमासत तेषां दिशोऽदस्यन्त एतामार्द्रां पङ्क्तिमपश्यन्ना श्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्रꣳ समप्लावयन्यजेति विद्युतम् ( ३ ) अजनयन्ये यजामह इति प्रावर्षयन्नभ्यस्तनयन्वषट्कारेण ततो वै तेभ्यो दिशः प्राप्यायन्त य एवं वेद प्रास्मै दिशः प्यायन्ते प्रजापतिं त्वो वेद प्रजापतिस्त्वं वेद यं प्रजापतिर्वेद स पुण्यो भवत्येष वै छन्दस्यः प्रजापतिरा श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद पुण्यो भवति वसन्तम् ( ४ ) ऋतूनां प्रीणामीत्याहर्तवो वै प्रयाजा ऋतूनेव प्रीणाति तेऽस्मै प्रीता यथापूर्वं कल्पन्ते कल्पन्तेऽस्मा ऋतवो य

एवं वेदाग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमित्याहा-ग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान्ताभ्यामेव चक्षुरात्मन्धत्तेऽग्नेरहं देवयज्ययाऽन्नादो भूयासमित्याहाग्निर्वै देवानामन्नादस्तेनैव (५) अन्नाद्यमात्मन्धत्ते दब्धिरस्यदब्धो भूयासममुं दभे-यमित्याहैतया वै दब्ध्या देवा असुरानदभ्नुवन्तयैव भ्रातृव्यं दभ्नोत्यग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याहा-ग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्ताभ्यामेव भ्रातृव्य स्तृणुत इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमित्याहेन्द्रि-याव्येवान्नादो भवतीन्द्रस्य (६) अहं देवयज्ययेन्द्रियावी भूयासमित्याहेन्द्रियाव्येव भवति महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमित्याह जेमानमेव महिमानं गच्छ-त्यग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयमित्याहाऽऽयुरेवाऽऽत्मन्धत्ते प्रति यज्ञेन तिष्ठति (७)

(प्रतिष्ठामन्नादस्तु विमुखं वसन्तं तेनैवेन्द्रस्याष्टात्रि॰शच्च)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

(अथ प्रथमकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः)।

दशमे हविःसादनं विहितम्। एकादशे त्वाश्रावणादिमन्त्राः प्राधान्येन विधी-यन्ते। तेषां प्रश्नमन्त्राणामुत्पत्तिं विधातुं प्रस्तौति—

यो वै सप्तेति। अयं मन्त्रसंघः सप्तदशाक्षरोपेतत्वात्प्रजापतिसृष्टत्वाच्च सप्त-दशः प्रजापतिरित्यभिधीयते। स च यज्ञमन्वायत्तः सर्वयज्ञेष्वनुगतस्तद्विद्यज-मानः संपूर्णेन यज्ञेन प्रतिष्ठितो भवति। वैकल्याभावाच्चायं यज्ञान्न भ्रष्टो भवति।

मन्त्रानुत्पादयति—

( प्राधान्येनाऽऽश्रावणादिमन्त्राः )

**आ श्रावयेति** । एतेषु पञ्चसु मन्त्रेष्वाद्यस्य मन्त्रत्रयस्य विनियोगमापस्तम्बोऽध्वर्युकाण्डे दर्शयति—“ब्रह्मन्प्रवरायाऽऽश्रावयिष्यामीति ब्रह्माणमामन्त्र्याऽऽश्रावयोश्रावय श्रावयोमोश्रावयेति वा श्रावयत्यस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन्स्फ्यं संमार्गांश्च धारयन्प्रत्याश्रावयति ” इति । “ अवद्यन्नमुष्मा अनुब्रूहीति पुरोनुवाक्यां संप्रेष्यत्यवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृतावादाय दक्षिणाऽतिक्रम्याऽऽश्राव्य प्रत्याश्राविते॒ऽमुं यजेति याज्यामिति सार्वत्रिकम् ” इति [ च ] । आश्रावयेत्ययमेव पाठोऽत्रत्यः । ओश्रावयेति श्रावयेति ओमाश्रावयेति च त्रयं शाखान्तरीयम् । हे आग्नीध्र यक्ष्यमाणदेवतां प्रति तुभ्यमिदं दीयत इत्याभिमुख्येन श्रावयेत्यध्वर्युणोक्ते सति स आग्नीध्रोऽस्त्वित्यङ्गीकृत्य श्रौषडिति शब्देन श्रावयति । हे देवास्त्व( युष्म )द्विषयमिदं हविर्दानं शृणुतेत्यर्थः । हे होतर्यज याज्यां पठेत्यर्थः । इतरस्य तु मन्त्रद्वयस्य विनियोगमाश्वलायनो होतृकाण्डे दर्शयति—“ आगूर्याज्यादिरनुयाजवर्जं ये यजामह इत्यागूर्वषट्कारोऽन्त्यः सर्वत्र ” इति । ये वयं होतारोऽध्वर्युणा यजेति प्रेषितास्ते वयं यजामहे याज्यां पठामः । वषट्कारशब्देन वौषडित्येवंरूपो मन्त्रो विवक्षितः । तं चाऽऽश्वलायन उदाहृत्य दर्शयति—“ ये यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु वौषळिति वषट्कार इति ” इति । हविर्दीयत इति तस्य शब्दस्यार्थः ।

एतेषां पञ्चमन्त्राणां महिमानं वक्तुं प्रस्तौति—

**यो वै यज्ञस्येति** । प्रायणं प्रारम्भः । प्रतिष्ठा मध्यकालवर्त्यनुष्ठानम् । उदयनं समाप्तिः । यो यजमानो यज्ञस्य मुख्यं प्रारम्भादित्रयं वेद तदीयो यज्ञः प्रतिष्ठितः साङ्गोऽरिष्टो वैकल्यरहितस्तादृशेन यज्ञेन संस्थां फलपर्यन्ततां प्राप्नोति । मन्त्रमहिमानं वक्ति—

**आ श्रावयेति** । आद्यो मन्त्रो मुख्यः प्रारम्भः । मन्त्रत्रयं प्रतिष्ठा । अन्त्य उदयनम् । देवतोद्देशेन द्रव्यत्यागरूपस्य यागशरीरस्यैतैरेव मन्त्रैर्निष्पन्नत्वादवशिष्टानि प्राच्यान्युदीच्यानि चाङ्गानि शरीरगतवस्त्रालंकारस्थानीयानि ।

प्रकारान्तरेण महिमानं वक्तुं प्रस्तौति—

**यो वा इति** । सूनृता समीचीना वाक् । सम्यक्त्वं च तस्याः सत्यप्रियरूपत्वम् ।

१ ख. °षडिति ।

अत एव स्मर्यते---

" सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः " इति ॥

सा च कामधेनुवत्परितोषहेतुत्वाद्गोत्वेनात्र विवक्षिता । तस्याश्च दोहनप्रकारं यो यजमानो वेद सोऽवश्यमेनां दुग्धे ।

काऽसावत्र सूनृता को वा तद्दोहनप्रकार इत्याशङ्क्य तदुभयं दर्शयन्मन्त्रमहिमानं वक्ति---

**यज्ञो वा इति** । लोके हि धोक्ष्यमाणाया गोराभिमुख्याय किमपि भक्ष्यं दातुं सांकेतिकेन नाम्ना तामाह्वयन्ति। अत एव प्रवर्ग्यब्राह्मणे घर्मदुह आह्वानमेवमाम्नायते-"इड एह्यदित एहि सरस्वत्येहीत्याह। एतानि वा अस्यै देवनामानि । देवनामैरेवैनामाह्वयति । असावेह्यसावेह्यसावेहीत्याह । एतानि वा अस्यै मनुष्यनामानि । मनुष्यनामैरेवैनामाह्वयति " इति । तद्वदत्राप्याश्रावयेति मन्त्रपाठेनैवैनां सूनृतामह्वदाह्वयति । अस्तु श्रौषडिति पाठेनोपावास्राग्वत्समुपावसृजति । यजेति पाठेनोदनैषीद्दोहनपात्रमुन्नयति । ये यजामह इति पाठेनोपासदद्दोग्धा प्रत्यासीदिति । वौषडिति पाठेन दोग्धि। अत्र रूपकत्वेन परिकल्पनामन्त्राणां तत्तदर्थवाचकत्वं नापेक्षितम् ।

सामर्थ्यान्तरकल्पनया पुनर्महिमानं वक्ति-

**देवा वा इति** । सत्रमासीनानां देवानां केनापि वैकल्येन वृष्ट्यभावाद्दिशोऽदस्यन्नानादिग्गतानि सस्यानि शोषणेनोपक्षीणानि । तत्परिहाराय देवा आर्द्रां वृष्टिहेतुभूतामेतां पङ्क्तिं मन्त्रपञ्चकमपश्यन् । स्पष्टमन्यत् ।

पुनरपि प्रकारान्तरेण मन्त्रमहिमानं दर्शयितुं प्रस्तौति-

**प्रजापतिमिति** । त्वशब्दः सर्वनामगणे पठित एकशब्दपर्यायः । अत एव संप्रदायविद उत त्वः पश्यन्न ददर्श वाचमित्यृचमेवं व्याचक्षते-अप्येकः पश्यन्न पश्यतीति । सप्तदशाक्षररूपमेनं प्रजापतिमेको यजमानो वक्ष्यमाणमहिमोपेतं वेद। स च प्रजापतिर्ज्ञातारं तमेकं यजमानं वेद जानात्यनुगृह्णाति । यमनुगृह्णाति सोऽन्येभ्यो यजमानेभ्यः पुण्याद्युत्कृष्टो भवति ।

तन्महिमानं दर्शयति-

**एष वा इति** । एषोऽक्षररूपः प्रजापतिश्छन्दस्यः, छन्दःसु वेदेषु सारत्वेन

( प्राधान्येनाऽऽश्रावणादिमन्त्राः )

निष्पन्नः। अत एव तृतीयकाण्डे समाम्नायते–" एतद्वै छन्दसां वीर्यमा श्राव-यास्तु श्रौषड्यज ये यजामहे वषट्कारः " इति। य एवं प्रजापतिं छन्दःसारं वेद स उत्कृष्टो भवति। त्वोवेद त्वंवेदेत्यत्रोभयत्रैकपद्यं सांप्रदायिकम्।

द्वितीयानुवाकोक्तानां प्रयाजानुमन्त्रणमन्त्राणां रूपककल्पनया तात्पर्यं व्याचष्टे–

**वसन्तमिति**। ऋतुदेवतास्तत्कल्पनया प्रीयन्ते। प्रीताश्चास्मै यजमानाय यथापूर्वं कल्पन्तेऽविपर्यासेन प्रवर्तन्ते स्वस्वकालोचितपुष्पोद्भवसंतापवृष्ट्यादिलक्ष-णयुक्ता भवन्ति। वेदितुरपि तदेव फलम्।

आज्यभागानुमन्त्रणमन्त्रं व्याचष्टे–

**अग्नीषोमयोरिति**। चक्षुषी वा एते यज्ञस्य यदाज्यभागावित्यस्मिन्ननुवा-के यज्ञचक्षुष्ट्वमाज्यभागयोः सम्यक्प्रतिपादितम्। अतस्तदीयदेवताभ्यां यज्ञस्य चक्षुष्मत्त्वं यजमानस्य तत्फलं चोच्यते।

आग्नेययागानुमन्त्रणमन्त्रं व्याचष्टे–

**अग्नेरहमिति**। अन्नादो बह्वाशी न त्वन्यदेववदल्पाशी।

उपांशुयाजानुमन्त्रणमन्त्रं व्याचष्टे–

**दब्धिरसीति**। एतयोपांशुयाजरूपया दब्ध्या वैरिघातिन्या हत्याऽदभ्नुवन्हिं-सितवन्तः।

पौर्णमासीगतद्वितीयपुरोडाशानुमन्त्रणमन्त्रं व्याचष्टे–

**अग्नीषोमयोरिति**। वृत्रनामकोऽसुरोऽग्नीषोमौ देवौ दन्तैः संदष्टवान्। तौ निःसारयितुमिन्द्रः शीतज्वरसंतापौ वृत्रे प्रयुज्य जञ्जभ्यमानाद्वृत्रात्तौ निः-सार्य वृत्रं हतवानिति द्वितीयकाण्डे स्पष्टी भविष्यति। स्तृणुते हिनस्ति।

अमावास्यागतद्वितीयपुरोडाशानुमन्त्रणमन्त्रं व्याचष्टे–**इन्द्राग्नियोरिति**।

सांनाय्यानुमन्त्रणमन्त्रं व्याचष्टे–**इन्द्रस्येति**।

गतश्रियां राजन्यादीनां सांनाय्यानुमन्त्रणमन्त्रं व्याचष्टे–**महेन्द्रस्येति**।

स्विष्टकृदनुमन्त्रणमन्त्रं व्याचष्टे–**अग्नेः स्विष्टकृत इति**।

---

१ ख. °न्तः। अनयैव दब्ध्या भ्रातृव्यं वैरिणं दभ्नोति मारयतीत्यर्थः। पौ°।

अथ मीमांसा ।

दशमाध्यायस्याष्टमे पादे चिन्तितम्—

नाऽऽर्षेयं न च होतारं नानूयाजेष्वितीदृशः ।
विकल्पः पर्युदासो वा स्यादाद्यो वचनद्वयात् ॥
अन्याय्यत्वाद्विकल्पस्य विध्यंशः सा निषेधगीः ।
नेत्यनूयाजधातुस्थस्तदर्थं पर्युदस्यति ॥

महापितृयज्ञे चोदकप्राप्तं वरणं प्रत्येवं श्रूयते—" नाऽऽर्षेयं वृणीते । न होता-रम् " इति । तथाऽनारभ्यवादे श्रूयते—" आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः" इति । तथोक्तम्—" नानूयाजेषु येयजामहं करो-ति" इति । तत्र वरणस्य विधिप्रतिषेधौ चोदकप्रत्यक्षवचनाभ्यां प्रतीयेते । ये यजामह इति मन्त्रस्य तु द्वाभ्यां प्रत्यक्षवचनाभ्यां विधिप्रतिषेधप्रतीतिः । तत्र विधायकप्र-तिषेधकयोर्द्वयोः प्रमाणयोरवैयर्थ्याय विकल्प इति प्राप्ते ब्रूमः—अष्टदोषग्रस्तत्वाद्वि-कल्पो न न्याय्यः । ननु परस्परविरुद्धयोर्विधिनिषेधयोः समुच्चयस्याप्यसंभवात्का गतिरत्रेति चेदुच्यते—निषेधत्वेन प्रतीयमानमिदं नेत्यनेन शब्देनोपेतं वाक्यं विधि-वाक्यस्य शेषो भविष्यति । तथा हि—यदि नेत्ययं शब्दः करोतिना संबध्येत तदा येयजामहं न करोतीत्येवं प्रतिषेधः स्यात् । यदि च वृणीत इत्येवाऽऽख्यातप्र-त्ययेन संबध्येत तदा वरणं न कर्तव्यमिति निषिध्येत । न चैवं संबध्यते, किं-त्वनूयाजपदेन वृञ्धातुना च संबध्यते । तथा सत्यनूयाजव्यतिरिक्तेषु यागेषु येयजामहः कर्तव्यः । वरणव्यतिरिक्तमङ्गजातमनुष्ठेयमित्यनूयाजवरणपर्युदासेन विधेरेव विशेषितत्वे सति प्रतिषेधवाक्यस्य कस्यचिदभावान्न विकल्पः शङ्कि-तुमपि शक्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके
एकादशोऽनुवाकः ॥ ११ ॥

———

१ ख. °वयस्यांशो भ° ।

( अथ प्रथमाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः )।

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः। इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः। शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः। इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु। इन्द्र तानि त आ वृणे। अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये। अनु (१) क्षत्रमनु सहो यजतेन्द्र देवेभिरनु ते नृषह्ये। आ यस्मिन्त्सप्त वासवास्तिष्ठन्ति स्वारुहो यथा। ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः। आमासु पक्वमैरय आ सूर्यꣳ रोहयो दिवि। घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः। इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत। गायन्ति त्वा गायत्रिणः (२) अर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रतवुद्वꣳशमिव येमिरे। अꣳहोमुचे प्र भरेमा मनीषामोषिष्ठदाव्ने सुमतिं गृणानाः। इदमिन्द्रप्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः। विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः। अꣳहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते। प्र सम्राजं प्रथममध्वराणाम् (३) अꣳहोमुचं वृषभं यज्ञियानाम्। अपां नपातमश्विना हयन्तमस्मिन्नर इन्द्रियं धत्तमोजः। वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अधस्पदं तमीं कृधि यो अस्माꣳ अभिदासति। इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम्। अपानुदो जनममित्रयन्तमुरुं

( याज्यापुरोनुवाक्याभिधानम् )

देवेभ्यो अकृणोरु लोकम् । मृगो न भीमः कुचरो गिरिष्ठाः परावतः ( ४ ) आ जंगामा परस्याः । सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रून्ताढि वि मृधो नुदस्व । वि शत्रून्वि मृधो नुद वि वृत्रस्य हनू रुज । वि मन्युमिन्द्र भामितोऽमित्रस्याभिदासतः । त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः । मा ते अस्याम् ( ५ ) सहसावन्परिष्टावघाय भूम हरिवः परादै । त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम । अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् । ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ । वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः । अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ( ६ ) ॥

( वृत्रहत्येऽनु गायत्रिणोऽध्वराणां परावतोऽस्यामष्टाचत्वारिꣳशच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

सं त्वा ध्रुवोऽस्यग्निर्मा बर्हिषोऽहमा प्यायतामगन्म यथा वै यो वै श्रद्धां प्रजापतिर्यज्ञान्ध्रुवोऽसीत्याह यो वै सप्तदशमिन्द्रं वो द्वादश ॥ १२ ॥

सं त्वा बर्हिषोऽहं यथा वा एवं विद्वान्श्रौषट्सहसावन्नेकपञ्चाशत् ॥ ५१ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके षष्ठप्रपाठकः समाप्तः ॥ ६ ॥

( याज्यापुरोनुवाक्याभिधानम् )

( अथ प्रथमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ) ।

सप्तमादिष्वेकादशान्तेषु पञ्चस्वनुवाकेषु याजमानब्राह्मणप्रसङ्गादाध्वर्यवब्राह्मणमपि कियदभिहितम् । द्वादशानुवाके याज्या [ पुरोनुवाक्या ] उच्यन्ते । काम्येष्टिकाण्डे सप्तमानुवाके काचिदिष्टिरेवमाम्नायते—

"ऐन्द्रं चरुं निर्वपेत्पशुकाम ऐन्द्रा वै पशव इन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून्प्र यच्छति पशुमानेव भवति" [ सं० का० २ प्र० २ अ० ७ ] इति ।

पशूनामैन्द्रत्वमर्थवादान्तरे द्रष्टव्यम् ।

पुरोडाशादिपरित्यागेन चरुविधानं प्रशंसति—

"चरुर्भवति स्वादेवास्मै योनेः पशून्प्र जनयति" [ सं० का० २ प्र० २ अ० ७ ] इति ।

वाजपेये हि नैवारं चरुमश्वानवघ्रापयेत् । अश्वमेधेऽपि लाजीनित्यादिमन्त्रेणाश्वायान्नमुपावहरन्ति । तच्च भक्षितमन्नमुत्पत्स्यमानानामश्वानां रेतोरूपेण बीजमित्यभिप्रेत्य चरोः पशुयोनित्वमत्राभिधीयते ।

तस्या ऐन्द्रेष्टेः पुरोनुवाक्यामाह—

**इन्द्रं व इति** । हे ऋत्विग्यजमाना वो युष्माकं जनेभ्यः पुत्रभृत्यादिजनसिद्ध्यर्थं विश्वतस्परि सर्वस्य जगत उपरि स्थितमुत्कृष्टत्वेन वर्तमानमिन्द्रं हवामह आह्वयामः । स चेन्द्रोऽस्माकं केवलोऽस्त्वसाधारणोऽस्तु । इतरयजमानेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः ।

याज्यामाह—

**इन्द्रं नर इति** । अग्निचयनमनुतिष्ठन्तो नर इन्द्रं नेमधिता वह्न्यादिभिर्देवैः सह नेमस्यार्धस्य हविषो धिता धारणाय हवन्त आह्वयन्ति । अत एव चयनब्राह्मणमेवमाम्नायते—"अर्धेन्द्राणि जुहोति" इति । तन्मन्त्राश्चैवमाम्नायन्ते—"अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे" इत्यादयः । यद्यस्मात्कारणात्पार्याश्रितेऽग्नावग्निष्टोमादिपारमर्हन्तो यजमानास्ता धियो युनजते युञ्जते तान्यग्निष्टोमादीन्यनुतिष्ठन्ति । तादृश हे इन्द्र त्वं शूरो रक्षोभिरनभिभूतो नृषाता मनुष्येभ्यः सनिता धनस्य दाता शवसोऽस्मदीयस्य बलस्य चकानस्तर्पको भूत्वा नोऽस्मान्गोमति बहुगवादिपशुयुक्ते व्रजे संच आभजाऽऽभिमुख्येन स्थापय ।

१ क. घ. ङ. च. °येतेति । अ° । २ ख. °रति । त° । ३ क. घ. ङ. च. अस्य च° । ४ ङ. °कानः सम्यक्प्रकाशको ।

इष्ट्यन्तरं विधत्ते--

" इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत्पशुकाम इन्द्रियं वै पशव इन्द्रमेवेन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मा इन्द्रियं पशून्प्र यच्छति पशुमानेव भवति " [ सं० का० २ प्र० २ अ० ७ ] इति ।

इन्द्रियं बलं प्रभूतमस्यास्तीतीन्द्रियावान् । क्षीरघृतादिद्वारेणेन्द्रियवृद्धिहेतुत्वात्पशूनामिन्द्रियत्वम् । इन्द्रियं पशून् । चेति समुच्चयेऽध्याहर्तव्यः ।

तस्यामिष्टौ पुरोनुवाक्यामाह--

**इन्द्रियाणीति** । हे शतक्रतो पञ्चसु जनेषु निषादपञ्चमेषु ब्राह्मणादिवर्णेषु यानि ते तवानुग्रहादिन्द्रियाणि सामर्थ्यानि सन्ति, हे इन्द्र तानि सर्वाणि ते तवानुग्रहादावृणे समन्ताद्गृह्णामि ।

याज्यामाह--

**अनु ते दायीति** । यजत्र यष्टव्य हे इन्द्र मह महते सर्वेभ्यो देवेभ्योऽधिकाय ते तुभ्यं सत्रा सत्रेषु विश्वं सर्वं हविर्देवैरग्न्यादिभिरनुदायि अनुक्रमेण दीयते । किमर्थम् । वृत्रहत्ये वृत्रवधमनु ते तवेन्द्रियाय बलसिद्ध्यर्थम् । न केवलं वृत्रवधमनुसृत्य किंतु क्षत्रमनु त्वदीयं क्षत्रियत्वजात्यभिमानमनुसृत्य, सहोऽनु त्वदीयं बलमनुसृत्य, नृषह्ये वैरिमनुष्यतिरस्कारशीलमनुसृत्य, त्वयि यथोक्तान्गुणानवेक्ष्य ते तुभ्यं पुनः पुनर्दीयत इति शेषः ।

अन्यामिष्टिं विधत्ते--

" इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामो ब्रह्मवर्चसं वै घर्म इन्द्रमेव घर्मवन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति " [ सं० का० २ प्र० २ अ० ७ ] इति ।

घर्मवते वेदशास्त्रादिप्रयुक्तब्राह्मतेजोयुक्ताय । विद्वत्सु वेदशास्त्रादिरूपेण ब्रह्मवर्चसेन दीप्यत इति ब्रह्मवर्चसस्य घर्मत्वम् ।

एतस्यामिष्टौ पुरोनुवाक्यामाह--

**आ यस्मिन्निति** । वासयन्ति रथस्योपर्यादित्यमिति वासवा आदित्यस्याश्वाः । ते च सप्तसंख्याकाः । सप्त युञ्जन्ति रथमेकचक्रमिति मन्त्रवर्णात् । न चैवं सत्येको अश्वो वहति सप्तनामेत्यनेन विरोधः । वचनद्वयबलेन विकल्पस्था-

१ ख. °द्वत्सभासु वे° ।

( याज्यापुरोनुवाक्याभिधानम् )

ङ्गीकृतत्वात् । ते च सप्ताश्वाः स्वारुह्यो यथाऽऽदित्यपरतन्त्रा अपि स्वयमेवाऽऽरोहन्त इव वर्तन्ते, सुशिक्षितत्वेन प्रेरणं विनैव प्रवृत्तत्वात् । तादृशाः सप्ताश्वा यस्मिन्नादित्य आतिष्ठन्ति अभिवर्तन्ते स आदित्य ऋषिर्हातीन्द्रियज्ञान्येव सर्वदा वेदत्रयोपेतत्वात् । अत एवाऽऽम्नायते—"वेदैरशून्यस्त्रिभिरेति सूर्यः" इति । दीर्घश्रुत्तमस्त्रैलोक्यप्रकाशनेन प्रथितकीर्तितमः । ईदृशो घर्मो दीप्यमान आदित्य इन्द्रस्य गृहेऽतिथिः स्वाभीष्टं याचितुं यदा कदाचिदागच्छति तस्येन्द्रस्य महिमा किमिव वक्तव्य इत्यभिप्रायः ।

याज्यामाह—

आमास्विति । आमासु फलपाकरहितास्वोषधीषु पक्वं सम्यक्पाकयुक्तं फलं हे इन्द्र त्वमैरयो वृष्टिद्वारा संपादितवानसि । सूर्यं विचरन्तं परिवर्तनसामर्थ्यप्रदानेन दिव्यारोहयासि । हेतिभिर्यजमाना जुष्टमिन्द्रस्य प्रियं हविः पुरोडाशरूपं तपत सुष्ठु हुतं कुरुत । किमिव, घर्मं न प्रवर्ग्यमिव, सुवृक्तिभिर्हुंकारप्रस्तावादिशोभनभक्तियुक्तैः सामन्सामभिर्घर्मं यथा तपन्ति । गिर्वणसे गीर्भिः स्तुत्यायेन्द्राय गिरः स्तुतिरूपाः प्रयुङ्क्तेति शेषः ।

इष्ट्यन्तरं विधत्ते—

"इन्द्रायार्कवते पुरोडाशमेकादशकपालं निर्वपेदन्नकामोऽर्को वै देवानामन्नमिन्द्रमेवार्कवन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवति" [ सं० का० २ प्र० २ अ० ७ ] इति ।

बुभुक्षुभिरर्थ्यमानत्वादादरेण स्वीक्रियमाणत्वादन्नस्यार्कत्वम् ।

तत्र पुरोनुवाक्यामाह—

इन्द्रमिदिति । गाथिनः सामगा बृहद्बृहता साम्नेन्द्रमिदिन्द्रमेवानूषतास्तुवन् । ऋच स्तुतावित्यस्माद्धातोरुत्पन्नोऽर्कशब्द ऋचमाचष्टे । अर्केभिर्ऋग्भिरर्किणो बह्वृचा इन्द्रमस्तुवन् । वाणीरन्या अपि वाचो यजूरूपा इन्द्रमस्तुवन् ।

याज्यामाह—

गायन्तीति । हे शतक्रतो गायत्रिणो गायत्रसामयुक्ता उद्गातारस्त्वां गायन्ति । अर्किणो बह्वृचास्त्वामर्चन्ति स्तुवन्ति । ब्रह्माणस्तदुपलक्षिता अध्वर्यवोऽपि त्वामुद्येमिर उत्थापयन्ति वर्धयन्तीत्यर्थः । किमिव, वंशमिव । यथा कुलाचारादिभिः स्वकीयं वंशमुन्नतं कुर्वन्ति तद्वत् ।

---

१ ख. ॰न्ति आश्रित्य व॰ । २ ख. किमु वक्त॰ । ३ ख. ॰भिर्हिंका॰ । ४ च. प्रतीयन्ते । इ॰

इष्ट्यन्तरं त्रिहविष्कं विधत्ते-

"इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायेन्द्रियावत इन्द्रायार्कवते भूतिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति यदिन्द्रायेन्द्रियावत आत्मानमेवास्य तेन करोति यदिन्द्रायार्कवते भूत एवान्नाद्ये प्रति तिष्ठति भवत्येव" [ सं० का० २ प्र० २ अ० ७ ] इति ।

तेन घर्मवते निर्वापेणाध्वर्युरस्य यजमानस्य शिरः करोति । एवंविधैश्वर्यादिभिः सभायामुन्नतशिरस्कं करोति । तेनेन्द्रियावते निर्वापेणास्य यजमानस्याऽऽत्मानमेव करोति पुष्टशरीरमेव करोति । अर्कवते निर्वापेण यजमानो भूत एवैश्वर्यं प्राप्त एव सन्नदनयोग्ये सम्यगन्ने प्रतितिष्ठति । भवत्येव पुनरप्यधिकमैश्वर्यं प्राप्नोत्येव । अत्र घर्मवतो हविषि " आ यस्मिन् " इत्यादिके याज्यानुवाक्ये । इन्द्रियावतो हविषि " इन्द्रियाणि शतक्रतो " इत्यादिके । अर्कवतो हविषि " इन्द्रमिद्गाथिनो बृहत् " इत्यादिके ।

इष्ट्यन्तरं विधत्ते-

" इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यात्पाप्मा वा अꣳह इन्द्रमेवाꣳहोमुचꣳ स्वेन भागधेयेनोप धावति स एवैनं पाप्मनोऽꣳहसो मुञ्चति " [ सं० का० २ प्र० २ अ० ७ ] इति ।

अंहःशब्देनात्र नरकहेतुर्निषिद्धाचरणादिरूपः पाप्मोच्यते । पाप्मनोंऽहसोऽत्यधिकात्पापादित्यर्थः ।

तत्र पुरोनुवाक्यामाह-

**अꣳहोमुच इति** । गृणानाः स्तुवन्तो वयमोषिष्ठदाव्ने ग्रीष्मकाले दावाग्निनाऽत्यन्तदग्धभूप्रदेशेभ्यो वर्षित्रे वृष्टिदात्रेंऽहोमुचे पापान्मोचयित्रे मनीषां बुद्धिं प्रभरेम स्वी कुर्मः । कीदृशीं सुमतिं, त्वां तोषयेमेत्येवमादिशोभनमननोपेताम् । हे इन्द्रेदं त्यज्यमानं हव्यं प्रतिगृहाण । तेन यजमानस्य कामाः सत्याः सन्तु ।

याज्यामाह-

**विवेषेति** । यद्यस्मात्कारणाद्धिषणा पूर्वोक्ता बुद्धिर्मां विवेष व्याप्तवती तस्मादहं सुबुद्धिर्जजान जातवानस्मि । अत एव पार्यादह्नः पुरोत्तमान्मरणादिवसात्पुरा त्वां स्तवै, आमरणं स्तवानीत्यर्थः । यत्र यस्यां धिषणायां सत्यामिन्द्रोऽस्मानंहसः पापात्पीपरदुत्तारितवान्सा धिषणा विवेषेत्यन्वयः । अथवा यत्रा-

१ ख. °ह्नः पारे भवान्म° । २ क. घ. ङ. च. त्वां तथैवाऽऽम° ।

( याज्यापुरोनुवाक्याभिधानम् )

हन्यस्मानंहसः पारयति तस्मात्पार्यादंह्नः पुरा स्तवा इत्यन्वयः। यथा लोके नावा नद्यां यान्तं नाविकमुभये कूलद्वयवर्तिनो हवन्ते[1] मामुत्तारयेत्याह्वयन्ति तथैवांहसो मुक्तानस्मानुभयकूलप्रभवा आह्वयन्तीत्यर्थः।

अत्रैव विकल्पितामन्यां याज्यामाह—

**प्रसम्राजमिति**। हे नरो मनुष्या ऋत्विजः प्रकर्षेणेन्द्रं भजतेति शेषः। कीदृशं, सम्राजं सम्यग्दीप्यमानम्। अध्वराणामग्निष्टोमादीनां प्रथमं मुख्यदेवम्। अंहोमुचं पापान्मोचयितारम्। यज्ञियानां यज्ञसंबन्धिफलानां वृषभं वर्षितारम्। अपां वृष्टिरूपाणामुदकानां नपातमविनाशयितारम्। हयन्तमैश्वर्यस्य गमयितारम्। हेऽश्विनावस्मिन्यजमान इन्द्रियं चक्षुरादिपाटवमोजो बलं च धत्तं स्थापयतम्।

इष्ट्यन्तरं विधत्ते—

“ इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्यं[2] मृधोऽभि प्रवेपेरन्राष्ट्राणि वाऽभि समियुरिन्द्रमेव वैमृधꣳ स्वेन भागधेयेनोप धावति स एवास्मान्मृधोऽपहन्ति ” [ सं० का० २ प्र० २ अ० ७ ] इति।

मृधो वैरिणो यं यजमानमभितः प्रवेपेरन्प्रकर्षेण कम्पयेयुर्भीतिमुत्पादयेयुः। अथवा राष्ट्राणि देशानभितो विनाशयितुं समियुः संगता भवेयुः, तस्य यजमानस्य रक्षार्थं वैमृधाय शत्रुविनाशकायेन्द्राय निर्वपेत्। स चेन्द्रोऽस्माद्यजमानान्मृधः शत्रूनपहन्ति।

तत्र पुरोनुवाक्यामाह—

**वि न इन्द्रेति**। हे इन्द्र नोऽस्माकं मृधः शत्रून्विशेषेण जहि। किंच, पृतन्यतोऽस्मान्घातयितुं सेनामिच्छतः शत्रून्नीचान्यग्भूतान्यच्छोपरतान्कुरु। यश्चान्योऽस्मानभिदासत्युपक्षपयति तमीं तमपि वैरिणमधस्पदमस्मत्पादयोः प्रणतशिरस्कं कृधि कुरु।

तत्र याज्यामाह—

**इन्द्र क्षत्रमिति**। हे इन्द्र वामं वननीयं क्षत्रं क्षताद्रक्षणमोजोऽस्मदीयं बलं चाभिलक्ष्याजायथा एतत्सर्वं संपादयितुं जातोऽसि। चर्षणीनां मनुष्याणां हे वृषभ कामानां वर्षकामित्रयन्तं शत्रुभावमिच्छन्तं जनमपानुदास्तिरस्कृतवानासि।

---

१ ख. °न्ते भो मा°। २ ख. °न्द्रायैकादशकपालं पुरोडाशं नि°।

देवेभ्यो हविष्प्रदानादिव्यवहारिभ्यो यजमानेभ्य उरुं विस्तीर्णं लोकं भोगस्थानमकृणोरु कृतवानेवासि ।

तस्यामेवेष्टौ विकल्पितां पुरोनुवाक्यामाह--

**मृगो नेति** । हे इन्द्र भीमो भयंकरः कुचरः प्राणिभक्षणादिरूपकुत्सिताचरणशीलो गिरिष्ठाः पर्वतनिवासी मृगो न सिंहव्याघ्रादिमृग इव परस्याः परावतो महतो दूरादाजगामास्मद्विरोधिनं हन्तुमागतोऽसि । आजगन्थेति हि शाखान्तरे मध्यमपुरुषः पठितः । सृकं परशरीरादिषु सरणशीलं तिग्मं तीक्ष्णं पविं वज्रं संशाय सम्यक्तीक्ष्णं कृत्वा विशेषेण शत्रूंस्ताडय । मृधो योद्धॄञ्शत्रून्विशेषेण नुदस्व निराकुरु ।

विकल्पितां याज्यामाह--

**वि शत्रूनिति** । हे इन्द्र शत्रून्विशेषेण नुद निराकुरु । मृधो योद्धॄनपि विशेषेण नुद । वृत्रस्य हनू विरुज विशेषेण भग्नौ कुरु । त्वं भामितः क्रुद्धः सन्नभिदासतोऽस्मानुपक्षपयतोऽमित्रस्य वैरिणो मन्युं विशेषेण भग्नं कुरु ।

इष्ट्यन्तरं विधत्ते--

" इन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायते " [ सं० का० २ प्र० २ अ० ७ ] इति ।

बद्धः शृङ्खलया निगडितः । परियत्तः शृङ्खलामन्तरेण परितो भटैरवरुद्धः ।

तत्र पुरोनुवाक्यामाह--

**त्रातारमिति** । त्रातारं शृङ्खलाबन्धाद्रक्षितारम् । अवितारं भटावरोधाद्रक्षितारम् । शूरं बन्धकानामवरोधकानां च तिरस्कारे क्षमम् । हवे हवे सुहवं सर्वस्मिन्होमे सुखेनाऽऽह्वातुं शक्यम् । शक्रं सर्वेषु कार्येषु शक्तियुक्तम् । पुरुहूतं बहुभिर्यजमानैराहूतमिन्द्रं हुवे नु आह्वयाम्येव । प्रतिविशेषणमिन्द्रशब्दावृत्तिर्वाक्यभेदार्थम् । त्रातारमिन्द्रं हुवे । अवितारमिन्द्रं हुव इत्येवं वाक्यभेदः । तैश्च बहुभिर्वाक्यैरादरातिशयः प्रदर्श्यते[1] । इन्द्राऽऽगच्छ हरिव आगच्छेत्यादौ तद्दर्शनात् । लोकेऽप्यतिबालं पुत्रमुपलालयितुं पितरागच्छ भ्रातरागच्छेत्यादौ[2] दृश्यते । मघवा धनवानिन्द्रो नोऽस्मभ्यं स्वस्ति धातु अविनाशं ददातु[3] ।

---

१ ख. °क्यैर्महिमाति° । २ ख. घ. ङ. च. °दौ तद्दृश्य° । ३ ख. दधातु ।

तत्रैव याज्यामाह—

**मा ते अस्यामिति** । हे सहसावन्बलवन्निन्द्रास्यां परिष्टौ परित्राणार्थं क्रियमाणायामिष्टौ वयमघाय वैकल्याय मा भूम, अस्मदनुष्ठिते कर्माणि वैकल्यं मा भूदित्यर्थः । हे हरिवो हरिभिरश्वैस्तद्वन्परादै परादातुं त्वामवज्ञातुं वयं मा भूम कदाचिदप्यवज्ञां मा करवामेत्यर्थः । त्वं नोऽस्मानवृकेभिर्हिंसकरहितैर्वरूथै-र्गृहैस्त्रायस्व । तादृशान्गृहान्प्रयच्छ । सूरिषु विद्वत्सु यजमानेषु मध्ये वयं तव प्रिया भवेम ।

इष्ट्यन्तरं विधत्ते—

" इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपन-मेदेते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधाविन्द्रमेवार्काश्वमेधवन्तꣳ स्वेन भाग-धेयेनोप धावति स एवास्मा अन्ततो महायज्ञं च्यावयत्युपैनं महायज्ञो नमति " ( सं० का० २ प्र० २ अ० ७ ] इति ।

अश्वमेधयज्ञस्य साधनभूतो योऽग्निः सोऽर्कः । यश्च तत्फलभूत आदित्यः सोऽश्वमेधः । अत एव पञ्चमकाण्डे पञ्चार्काहुतिविधिशेषार्थवादे समाम्नायते— " अर्को वा एष यदग्निरसावादित्योऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतीꣳषि संदधाति " इति । अश्वमेधब्राह्मणेऽप्याम्नायते—"अग्निर्वा अश्वमेधस्य योनिरायतनम् । सूर्योऽग्नेर्योनिरायतनम् । यदश्वमेधेऽग्नौ चित्य उत्तरवेदिं चिनोति तावर्काश्वमेधौ " इति । वाजसनेयिनोऽपि चित्यस्याग्नेरुपासने समामनन्ति— "एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ " इति । इन्द्रः स्तुतयोरग्न्यादित्ययोः स्वामित्वाद-र्काश्वमेधवानित्युच्यते । यं यजमानं प्रत्यश्वमेधराजसूयरूपो महायज्ञो नोपनमेन्न प्राप्नुयात्स यजमानोऽर्काश्वमेधस्वामिने निर्वपेत् । यावेतावर्काश्वमेधशब्दवाच्याव-ग्न्यादित्यौ तावुभौ महायज्ञस्याश्वमेधस्यान्त्ये तनू प्रारम्भसमाप्तिकोट्योर्वर्तमान-शरीरे । चित्याग्निः साधनत्वेन प्रारम्भकोटौ वर्तते । आदित्यः फलरूपत्वेन स-माप्तिकोटिगामी । स एवेन्द्र एवास्मै यजमानस्य समीपे महायज्ञं प्रेरयति । स च महायज्ञ एनं यजमानमुपनमति प्राप्नोति ।

तत्र पुरोनुवाक्यामाह—

**अनवस्त इति** । हे पुरुहूत बहुभिर्यजमानैराहूतेन्द्र ते तव रथमनवो मनु-

१ ख. इन्द्रस्तु त° । २ ख. °सूयाद्गिम° ।

ष्यास्तक्षंस्तक्षन्तु संस्कुर्वन्तु । किमर्थम् । अश्वायाश्वं संयोक्तुम् । त्वष्टा देवः शिल्पी द्युमन्तं दीप्तिमन्तं वज्रं तक्षतु । ब्रह्माणो ब्राह्मणा ऋत्विजोऽर्कैरर्चनसाधनैर्मन्त्रैर्महयन्तः पूजयन्त इन्द्रमवर्धयन्यशसा वर्धयन्तु । अहयेऽहिमघं महायज्ञप्राप्तिप्रतिबन्धकं पापं हन्तवा उ अवश्यं हन्तुमवर्धयान्नित्यन्वयः ।

याज्यामाह—

**वृष्णे यत्त इति** । हे इन्द्र यद्यदा वृष्णे ते कामाभिवर्षिणस्तव संबन्धिनमर्कमर्चनीयं वृषणो वर्षणं(कं) फलाभिवर्षकं यागं ग्रावाणः साधनभूता दृषदुपलादयः पदार्था अर्चानर्चयन्ति अलंकुर्वन्ति, तदानीमदितिर्वेदिरूपा पृथिवी सजोषास्त्वया समानप्रीतिर्भवतु । इन्द्रेषिता इन्द्रप्रेरिता ये पवयो वज्राः सन्ति तेऽप्यरथा अनश्वासो रथाश्वनिरपेक्षा एव दस्यून्महायज्ञप्राप्तिप्रतिबन्धकानसुरानभ्यवर्तन्ताभिलक्ष्य हन्तुं प्रवर्तन्ताम् ।

अत्र विनियोगसंग्रहः—

> " इन्द्रं वो विश्वतोऽमुष्मिंमश्वरावैन्द्र ऋचोर्द्वयम् ।
> इन्द्रीन्द्रियावद्यागे स्यादा यस्मिन्घर्मवद्यजौ ॥ १ ॥
> इन्द्रं स्यादर्कवद्यागे तिस्रोंऽहोमुग्यजावृचः ।
> विनो (वे)मृधे चतस्रः स्युस्त्रातारं त्रातुमद्यजौ ।
> अनवोऽर्काश्ववद्यागे मन्त्राः सप्तदशेरिता(न्त्रा एकोनविंशतिः" )
> ॥ २ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके
द्वादशोऽनुवाकः ॥ १२ ॥

---

> वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
> पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

**इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥**

(अथ प्रथमाष्टके सप्तमः प्रपाठकः)।

(तत्र प्रथमोऽनुवाकः)।

हरिः ॐ।

पाकयज्ञं वा अन्वाहिताग्नेः पशव उप तिष्ठन्त इडा खलु वै पाकयज्ञः सैषाऽन्तरा प्रयाजानूयाजान्यजमानस्य लोकेऽवहिता तामाह्रियमाणामभि मन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोप ह्वयते यज्ञं वै देवा अदुहन्यज्ञोऽसुराꣳ अदुहन्तेऽसुरा यज्ञदुग्धाः पराऽभवन्यो वै यज्ञस्य दोहं विद्वान् (१) यजतेऽप्यन्यं यजमानं दुहे सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादित्याहैष वै यज्ञस्य दोहस्तेनैवैनं दुहे प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते वा इडायै स्तना इडोपहूतेति वायुर्वत्सो यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेत् (२) मात्रे वत्समुपावसृजति सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन्पाकयज्ञेन मनुरश्राम्यत्सेडा मनुमुपावर्तत तां देवासुरा व्यह्वयन्त प्रतीचीं देवाः पराचीमसुराः सा देवानुपावर्तत पशवो वै तद्देवानवृणत पशवोऽसुरानजहुर्यं कामयेतापशुः स्यादिति पराचीं तस्येडामुप ह्वयेतापशुरेव भवति यम् (३) कामयेत पशुमान्त्स्यादिति प्रतीचीं तस्येडामुप ह्वयेत पशुमानेव भवति ब्रह्मवादिनो वदन्ति स त्वा इडामुप ह्वयेत य इडामुपहूयाऽऽत्मानमिडानामुप ह्वयेतेति सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवोपहूयाऽऽत्मानमिडायामुप ह्वयते व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति (४)

सामि मार्जयन्त एतत्प्रति वा असुराणां यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः समदधुर्बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह संतत्यैव विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दिशति यां वै ( ५ ) यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु सं क्रामन्ति स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै तत्कार्यमित्याहुर्यथा देवत्रा दत्तं कुर्वीताऽऽत्मन्पशून्रमयेतेति ब्रध्न पिन्वस्वेत्याह यज्ञो वै ब्रध्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तं कुरुत आत्मन्पशून्रमयते ददतो मे मा क्षायीत्याहाक्षितिमेवोपैति कुर्वतो मे मोप दसदित्याह भूमानमेवोपैति ( ६ ) ॥

( विद्वान्ध्यायेद्भवति यं प्राश्नन्ति यां वै म एकान्नविꣳशतिश्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमकाण्डे सप्तमः प्रपाठकः ) ।

( तत्र प्रथमोऽनुवाकः ) ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके सप्तमेऽस्मिन्ननुवाकास्त्रयोदश ।
याजमानब्राह्मणस्य शेषः षट्स्वादिमेषु हि ॥
वाजपेयस्य मन्त्रास्तु षट्स्वन्त्येष्वथ याज्यकाः ।
इडानुमन्त्रणं तस्या इडायाश्च प्रशंसनम् ।
अन्वाहार्योऽथ मन्त्रानुवाकव्याख्या त्रिषु स्मृता ।
रथमन्त्रा धावनं च रोहणं वाजहोमकः ।
उज्जित्यतिग्मास्ययाज्या इत्यर्था अनुवाकगाः ॥

( इडानुमन्त्रणम् )

तत्र प्रथमेऽनुवाके इडानुमन्त्रणमुच्यते । तदेतद्विधातुं प्रस्तौति—

**पाकयज्ञमिति** । पाकयज्ञस्य स्वरूपमापस्तम्बसूत्रव्याख्यातृभिरुक्तम्—“ औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञसंस्थाः ” इति । बौधायनोऽप्याह—“ हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्थाः ” इति । अन्ये त्वाहुः—“ अल्पयज्ञाः पाकयज्ञाः ” इति । आश्वलायनोऽप्याह—त्रयः पाकयज्ञा हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुताः ” इति ।

एतेषां मध्ये यं कंचिदप्याहिताग्नेः पाकयज्ञमनु गवाद्याः पशवोऽवस्थिता भवन्ति पाकयज्ञेन लभ्यन्त इत्यर्थः । अत्र त्विडाभक्षणमेव पाकयज्ञो ब्रह्मणि हुतत्वात् । अतोऽनेनापीडाभक्षणेन पशवो लभ्यन्ते । तत्रेयमिडा यजमानस्य लोके फलसाधने यज्ञे प्रयाजानुयाजमध्ये व्यवस्थिता । प्रयाजाज्यभागप्रधानस्विष्टकृद्भ्य ऊर्ध्वमनूयाजेभ्यश्च प्रागिडाया अनुष्ठेयत्वात् । एतच्च हौत्रकाण्डे स्विष्टकृद्याज्याया अनूयाजयाज्यायाश्च मध्य इडोपाह्वानमन्त्रपाठादवगम्यते ।

विधत्ते—

**तामाह्रियमाणामिति** । तामिडामाह्रियमाणामवदाय होतृसमीपमानीयमानाम् । तत्प्रकारमापस्तम्ब आह—“ इडापात्रमुपस्तीर्य सर्वेभ्यो हविर्भ्य इडाᳲ समवद्यति चतुरवत्तां वा पञ्चावत्ताम् ” इति । “ अभिघार्येडाᳲ होत्रे प्रदाय ” इति च । इडादेवतायाः पशुसाधनत्वाद्गोरूपत्वाच्च मन्त्रगतेनेहीति पदेन पशूनेवोपह्वयते ।

सा मे सत्याऽऽशीरित्येतं मन्त्रभागं व्याख्यातुं प्रस्तौति—

**यज्ञं वा इति** । दोहनं रिक्तीकरणम् । गां दोग्धीत्यत्र तथा दर्शनात् । देवाः प्रथमं यज्ञमदुहन्नदुहन्, तद्गतसारफलस्वीकारेण रिक्तं चक्रुः । स च यज्ञोऽसुरानदुहत्तदीयसारापहारेण रिक्तं चकार । ततस्ते पराभूताः । यो यजमानो देवकर्तृकं यज्ञरिक्तीकरणं यज्ञकर्तृकमसुररिक्तीकरणं च विद्वान्यजते सोऽन्यमपि यजमानं दुहे रिक्तं करोति । एतस्य वाक्यस्य मन्त्रप्रशंसारूपत्वादन्यस्य यजमानस्य न काचिद्धानिः ।

व्याचष्टे—

**सा मे सत्येति** । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूत इत्या-

१ क. घ. °जनं ब्र° ।

दिका येयमाशीरुपह्वानमन्त्रगता सेयमस्य यज्ञस्य संबन्धिन्याशीर्मम सत्या भूयादित्येवंरूपो यज्ञदोहस्तेनैवान्यं यजमानं दोग्धि ।

वायुध्यानं विधातुं प्रस्तौति--

**प्रत्ता वा इति** । प्रत्ता वत्सलेहनेन प्रस्नुतस्तनी गौर्दुहे पयः क्षारयति तद्वदत्रेडा प्रत्ता सती यजमानस्य फलं दोग्धि । तस्या इडाया इडोपहूतेत्यादिमन्त्रभागाः स्तनाः । वायुर्वत्सः ।

विधत्ते---

**यर्हि होतेति** । यर्हि यस्मिन्काले ।

इडोपहूतेत्यादिमन्त्रभागप्रयोगे हेयोपादेयपक्षौ विधातुं प्रस्तौति--

**सर्वेणेति** । मनुसहिताः सर्वे देवाः कृत्स्नेन दर्शपूर्णमासयागेन स्वर्गलोकं प्राप्तुमुद्यताः । तत्र मनुः पाकयज्ञेन श्रान्तोऽभूत् । "इडा खलु वै पाकयज्ञः" इत्युक्तम् । अतो मनुर्होता सन्निडोपाह्वान एव तात्पर्यवानभूदित्युक्तं भवति । सा चेडा देवता तात्पर्यवन्तं मनुमुपगतवती । तां दृष्ट्वा देवाश्चासुराश्च परस्परव्यत्ययेनाह्वयन्त । ते देवाः प्रतीचीं संमुखमुपाह्वयन्त । असुराः पराचीनमुखमुपाह्वयन्त । इडोपहूतेत्येवमादाविडाशब्दप्रयोगः सांमुख्यम् । उपहूतेडेति पश्चादिडाशब्दप्रयोगो विमुखत्वम् । तत्र संमुखत्वेन तुष्टा सती सा देवानुपावर्तत । पशवो वा इडेत्यन्यत्राऽऽम्नातत्वादिडारूपाः पशवस्तत्तदा देवानवृणत वृतवन्तः प्राप्तवन्तः । विमुखत्वेनेडाया अपरितोषात्तद्रूपाः पशवोऽसुरानजहुः संत्यक्तवन्तः ।

तत्र हेयपक्षं विधत्ते---**यं कामयेतेति** ।

उपादेयपक्षं विधत्ते---**यं कामयेतेति** ।

सा नः प्रियेतिमन्त्रभागं व्याख्यातुं प्रस्तौति--

**ब्रह्मवादिन इति** । वेदार्थविचारका विद्वांसः परस्परमित्याहुः । किमिति, यो बुद्धिमान्मन्त्रेणेड एह्यदित एहीत्यादिनेडामुपहूय तस्यामिडायामात्मानमुपह्वयते योजयति स एवेडां यथाशास्त्रमुपह्वयेतेति ।

मन्त्रं व्याचष्टे---

**सा नः प्रियेति** । येयमिडाऽस्माभिरिड एहीत्यादिनोपहूता सेयमिडा त्वं नोऽस्माकं प्रियेत्यनेन वचनेन स्वात्मानमिडायां योजितवान्भवति ।

मार्जनार्थं मनो ज्योतिरित्यादिकामृचं व्याख्यातुं प्रस्तौति--

( इडानुमन्त्रणम् )

**व्यस्तमिवेति**। इडेति यदेतेन यज्ञस्याङ्गं व्यस्तं विच्छिन्नमिव भवति। तत्कथमिति। उच्यते—सामि पुरोडाशस्य लेशमिडाभागरूपमृत्विजः प्राश्नन्ति, साम्युदकलेशं मार्जयन्ते शिरसि सिञ्चन्ति, तदानीं प्रधानयागाः पूर्वमेव हुता अनूयाजादियागा इत ऊर्ध्वं यष्टव्यास्तन्मध्ये त्वेतदिडाभक्षणं मार्जनं च क्रियते, तयोरयागरूपत्वाद्यागविच्छेदकत्वम्। तथा सत्यसुरा यष्टव्याननूयाजादीन्विस्मृतवन्तः। अतोऽसुराणां यज्ञ एतत्प्रति भक्षणमार्जनद्वयं प्रत्येतद्वीये काले विच्छिन्नोऽभूत्। देवास्त्वप्रमत्ताः सन्तो ब्रह्मणा परिवृढेन केनचित्पुरुषेण समदधुस्तयोर्विच्छिन्नयोः पूर्वोत्तरयोर्यज्ञभागयोः संधानं कृतवन्तः।

तस्या ऋचस्तृतीयपादं व्याचष्टे—

**बृहस्पतिरिति**। देवगुरुत्वाद्बृहस्पतेः परिवृढत्वम्।

संधातृप्रतिपादकं तृतीयपादं व्याख्याय संधानप्रतिपादकं द्वितीयपादं व्याचष्टे—

**विच्छिन्नमिति**। अविच्छेदायेत्यर्थः।

तस्य संततस्य यज्ञस्य देवसमर्पणप्रतिपादकं चतुर्थपादं व्याचष्टे—

**विश्वे देवा इति**। ब्रध्न पिन्वस्वेत्यादिकं पुरोडाशाभिमन्त्रणमन्त्रं व्याख्यातुं प्रस्तौति—

**यां वै यज्ञ इति**। यजमानेनर्त्विग्भ्यो दीयमानां गवान्वाहार्यादिरूपां दक्षिणां तदीयाः पशवः सर्वेऽप्यनुगच्छन्ति, तदा यज्ञानुष्ठाता च पशुरहितो भवति। अतः स्वेन दत्तं दक्षिणाद्रव्यं यथा देवत्रा देवेषु ऋत्विक्ष्ववस्थितं भवति, पशवश्च यथा स्वस्मिन्नेव रमन्ते, तथा यजमानेन कर्तव्यमिति बुद्धिमन्त आहुः।

मन्त्रस्य प्रथमभागं व्याचष्टे—

**ब्रध्न पिन्वस्वेति**। हे यज्ञ प्रीणीहीत्यनेन यज्ञस्य पूजारूपेण प्रोत्साहनेन यथोक्तं प्रयोजनद्वयं संपद्यते।

द्वितीयं भागं व्याचष्टे—

**ददतो म इति**। दानप्रयुक्तो द्रव्यक्षयो मा क्षायीति प्रार्थनेन निवारितो भवति।

तृतीयभागं व्याचष्टे—

**कुर्वतो म इति**। उपक्षयनिवारणस्य पूर्वमेव प्रार्थितत्वान्मोपदसदित्यनेनाभिवृद्धिलक्षणं बाहुल्यमेव प्रार्थ्यते भूमानमेवोपैतीति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके
प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः )।

सꣳश्रवा ह सौवर्चनसस्तुमिञ्जमौपोदितिमुवाच यत्सत्रिणाꣳ होताऽभूः कामिडामुपाह्वथा इति तामुपाह्व इति होवाच या प्राणेन देवान्दाधार व्यानेन मनुष्यानपानेन पितॄनिति छिनत्ति सा न छिनत्ती ३ इति छिनत्तीति होवाच शरीरं वा अस्यै तदुपाह्वथा इति होवाच गौर्वै ( १ ) अस्यै शरीरं गां वाव तौ तत्पर्यवदतां या यज्ञे दीयते सा प्राणेन देवान्दाधार यया मनुष्या जीवन्ति सा व्यानेन मनुष्यान्यां पितृभ्यो घ्नन्ति साऽपानेन पितॄन्य एवं वेद पशुमान्भवत्यथ वै तामुपाह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्याभवतीत्यन्नं वा अस्यै तत् (२) उपाह्वथा इति होवाचौषधयो वा अस्या अन्नमोषधयो वै प्रजाः प्रभवन्तीः प्रत्याभवन्ति य एवं वेदान्नादो भवत्यथ वै तामुपाह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति प्रतिष्ठां वा अस्यै तदुपाह्वथा इति होवाचेयं वा अस्यै प्रतिष्ठा ( ३ ) इयं वै प्रजाः पराभवन्तीरनु गृह्णाति प्रत्याभवन्तीर्गृह्णाति य एवं वेद प्रत्येव तिष्ठत्यथ वै तामुपाह्व इति होवाच यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति छिनत्ति सा न छिनत्ती ३

( इडाप्रशंसा )

इति न छिनत्तीति होवाच प्र तु जनयतीत्येष वा इडामुपाह्वथा इति होवाच वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति य एवं वेद प्रैव जायतेऽन्नादो भवति (४) ॥

( गौर्वा अस्यैतत्प्रतिष्ठाऽह्वथा इति विꣳशतिश्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ) ।

इडाद्यनुमन्त्रणमन्त्राः प्रथमे व्याख्याताः। तामिडां द्वितीये द्वयोर्मुन्योः प्रश्नोत्तराभ्यां प्रशंसति । तत्र प्रश्नमवतारयति—

सꣳश्रवा इति । संश्रवा इत्यृषेर्नामधेयम् । स च सुवर्चनसः पुत्रः। तुमिञ्ज इत्यृष्यन्तरस्य नामधेयम् । स चोपोदितस्य पुत्रः ।

संश्रवसः प्रश्नं दर्शयति—

यत्सत्रिणामिति । यद्यदा, तदेत्यध्याहारः । कां किंगुणकाम् ।

तुमिञ्जस्योत्तरं दर्शयति—

तामुपाह्व इति । प्राणादिवृत्तिभिरिडाया देवादिधारणमुत्तरत्र स्पष्टी करिष्यते । तां देवादिधारणगुणकामिडामुपहूतवानस्मि ।

पुनः प्रश्नं दर्शयति—

छिनत्तीति । त्वयोपहूता सेयमिडा गोरूपा सती दक्षिणात्वेन प्रतिग्रहीतृन्किं छिनत्ति प्रतिग्रहदोषेण विनाशयत्यथवा न च्छिनत्तीति विचारार्थः प्लुतः ।

उत्तरं दर्शयति—छिनत्तीति ।

एवं तर्हि नेयं मुख्येडेति प्रश्नवादिनोक्तं दूषणं दर्शयति—

शरीरमिति । अस्या इडादेवतायाः शरीरमेव त्वयोपहूतं न तु सा देवता ।

इदानीमाख्यायिकातोऽपसृत्य श्रुतिः स्वयमेवाऽऽह—

गौर्वा इति । गौरेवास्या इडायाः शरीरम् । एतच्च मानवी घृतपदी मैत्राव-

---

१ ख. घ. ङ. च. 'नत्ति । किं' ।

रुणीत्येतस्य हौत्रस्येडोपाह्वानमन्त्रस्य ब्राह्मणे मनुः पृथिव्या इत्याद्यनुवाके प्रसिद्धम् । अत इडायाः शरीरभूतां गामेव ज्ञातवन्तौ तदानीं छिनत्तीत्येतादृशाभ्यां प्रश्नोत्तराभ्यामनिन्दताम् ।

इदानीं देवादिधारणं स्पष्टी करोति-

**या यज्ञ इति** । यज्ञे दक्षिणारूपेण दत्तया गवा देवास्तूष्णीमिव तुष्यन्ति न तु तां दुहन्ति नापि घ्नन्ति । अतः प्राणेन प्रकृष्टचेष्टयोत्तमया वृत्त्या देवान्धारयति । मनुष्यास्तु गां दुग्ध्वा जीवन्ति, तदा नात्यन्तमहानिः। क्षीरस्य हीनत्वात् । नाप्यत्यन्तं हानिः । शरीरस्य वधाभावात् । अतः प्राणापानमध्यवर्तिन्या व्यानसमानया मध्यमवृत्त्या मनुष्यान्धारयति ।अष्टकाश्राद्धे गां पितृभ्यो घ्नन्ति। तथा चाऽऽपस्तम्बः-"श्वोभूते दर्भेण गामुपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमि" इति । सेयं गौरपानेनाधमवृत्त्या मारणरूपया पितॄन्धारयति ।

उक्तस्य देवादिधारणस्य वेदनं प्रशंसति-

अथ तुमिञ्जः स्वेनोपहूताया इडाया मुख्यत्वं संपादयितुं गुणान्तरेणेडां विशिनष्टीति दर्शयति-

**अथ वेति** । पक्षान्तरद्योतनायाथ वा इति पदद्वयम् । येयमिडा प्रभुत्वोपेताः प्रजाः प्रत्याभिमुख्येन वर्तते तादृशीमिडामुपहूतवानस्मि ।

संश्रवा एतस्या अपीडाया मुख्यत्वं वारयतीति दर्शयति-

**अन्नं वा इति** । अस्या इडायाः संबन्धि यदन्नं तदेवोपहूतवानसि न तु मुख्यामिडाम् ।

तदेतद्वेद उपपादयति--

**ओषधय इति** । ओषधीनां गवामन्नत्वं प्रसिद्धम् ।प्रभुत्वोपेतानां च प्रजानां गृहेषु बहुजनभोजनाय व्रीह्याद्योषधय आगत्य वर्तन्ते ।

एतद्वेदनं प्रशंसति-**य एवमिति** ।

पुनरपि तुमिञ्जस्य गुणान्तरोक्तिमिडाया मुख्यत्वसंपादिकामुदाहरति-

**अथवा इति** । येयमिडा व्याध्यादिभिः पराभूयमानाः प्रजाः स्वस्यामवस्थाप्यानुगृह्णाति, पराभूयमानाः प्रजास्तत्तदपेक्षितस्थानप्रदानेन स्वी करोति ।

अस्या अपीडाया मुख्यत्वानिराकरणोक्तिं दर्शयति-

( इडाप्रशंसा )

**प्रतिष्ठामिति**। प्रतितिष्ठत्यस्यामिडा गोरूपेति प्रतिष्ठा भूमिस्तामेवोपहूतवानसि न मुख्यामिडाम् ।

तदेतद्वेद उपपादयति—**इयं वा इति** ।

वेदनं प्रशंसति—**य एवमिति** ।

मुख्यत्वसंपादनाय गुणान्तरोक्तिं दर्शयति—

**अथ वा इति** । यस्या वृष्टिरूपाया इडाया निष्क्रमणे न्यग्भावेन पतने सति यद्घृतं क्षरदुदकं तज्जीवनार्थिन्यः प्रजा उपजीवन्ति तादृशीमिडामुपहूतवानस्मि ।

संश्रवा अस्यामिडायां पूर्ववद्दोषाभावाभावौ पृच्छति—

**छिनत्तीति** । वृष्टेर्गवान्नभूमीनामिव प्रतिग्राह्यद्रव्यत्वाभावात्तमिज्ञस्य प्रतिग्राह्यदोषाभावोक्तिं गुणान्तरोक्तिं च दर्शयति—

**न छिनत्तीति** । वृष्टिरूपेयमिडा कमपि पुरुषं न च्छिनत्ति न दूषयति किंतु प्रकर्षेण सस्यादिकं जनयति ।

संश्रवसो मुख्येडात्वाङ्गीकारोक्तिं दर्शयति—

**एष वा इति** । एष वृष्टिरूपेडावादी त्वमेव मुख्यामिडामुपहूतवानसि ।

एतस्यामुक्तायामिडायां पूर्वोक्तलक्षणं वेदो दर्शयति—

**वृष्टिर्वा इति** । तदेवमस्मिन्ननुवाके सर्वप्राण्युपकारिभिर्गवान्नभूमिवृष्टिरूपैरियमिडा प्रशस्ता ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके

द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः ) ।

परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवाः परोक्षमिज्यन्ते तानेव तद्यजति यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेव तेन प्रीणात्यथो दक्षिणैवास्यैषाऽथो यज्ञस्यैव छिद्रमपि दधाति यद्वै यज्ञस्य क्रूरं यद्वि-

( अन्वाहार्याभिधानम् )

लिष्टं तदन्वाहार्येण (१) अन्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वं देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति प्रजापतिर्देवेभ्यो यज्ञान्व्यादिश्य स रिरिचानोऽमन्यत स एतमन्वाहार्यमभक्तमपश्यत्तमात्मन्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोत्यपरिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापतेः (२) आप्त्यै देवा वै यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन्तमन्वाहरन्त ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषोऽन्वाहार्य आह्रियते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैवं विदुषोऽन्वाहार्य आह्रियते स त्वेवेष्टापूर्ती प्रजापतेर्भागोऽसि (३) इत्याह प्रजापतिमेव भागधेयेन समर्धयत्यूर्जस्वान्पयस्वानित्याहोर्जमेवास्मिन्पयो दधाति प्राणापानौ मे पाहि समानव्यानौ मे पाहीत्याहाऽऽशिषमेवैतामा शास्तेऽक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इत्याह क्षीयते वा अमुष्मिँल्लोकेऽन्नमितःप्रदानꣳ ह्यमुष्मिँल्लोके प्रजा उपजीवन्ति यदेवमभिमृशत्यक्षितिमेवैनद्गमयति नास्यामुष्मिँल्लोकेऽन्नं क्षीयते (४) ॥

( अन्वाहार्येण प्रजापतेरसि ह्यमुष्मिँल्लोके पञ्चदश च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अन्वाहार्याभिधानम् )

(अथ प्रथमकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः)।

द्वितीय इडायाः प्रशंसोक्ता। तृतीयेऽन्वाहार्य उच्यते। तस्य दानं विधातुं प्रस्तौति—

**परोक्षमिति**। परोक्षमिति क्रियाविशेषणम्। अग्नीन्द्रादीनामदृश्यमानत्वात्तद्यागः परोक्षः। ऋत्विजां दृश्यमानत्वात्तद्यागः प्रत्यक्षः।

अन्वाहार्यदानं विधत्ते—

**यदन्वाहार्यमिति**। अन्वाहार्यः पक्व ओदनस्तमाहरत्यृत्विग्भ्यो दद्यात्। प्रत्यक्षं वर्तन्त इति शेषः।

अन्वाहार्यस्य दक्षिणारूपत्वेन यज्ञच्छिद्रपिधायकत्वेन च तं प्रशंसति—

**अथो दक्षिणेति**। अन्वाहार्यशब्दं निर्वक्ति—

**यद्वै यज्ञस्येति**। अतिरिक्तं कर्मणो यच्च हीनमित्यस्मिन्प्रायश्चित्ताहुतिमन्त्रे प्रोक्तमधिकं यज्ञाङ्गमत्र क्रूरं, न्यूनं विलिष्टं, तदुभयमनेनान्वाहार्यदानेनानुकूलं यथा भवति तथाऽऽहरति समादधाति। तस्मादन्वाहार्यत आनुकूल्येन समाधीयतेऽनेनेत्यन्वाहार्यः।

ऋत्विक्प्रीतिहेतुत्वेन पुनः प्रशंसति—**देवदूता इति**।

प्रजापतिभागत्वेन पुनस्तं प्रशंसति—

**प्रजापतिरिति**। आग्नेयाग्नीषोमीयपुरोडाशान्यागानग्न्यादिदेवेभ्यो विभज्य दत्त्वा स्वकीययागराहित्येन रिक्तमात्मानं मन्यमानः प्रजापतिरभक्तं देवेभ्यो विभज्यासमर्पितं दृष्ट्वा तमात्मनि स्थापितवान्। ततोऽन्वाहार्यः प्राजापत्यः।

तस्यान्वाहार्यस्य बाहुल्यसंपादनं विधत्ते—

**अपरिमित इति**। सर्वदेवस्वामित्वेन व्याप्तिबाहुल्यात्प्रजापतेरपरिमितत्वम्।

स्वविजयहेतुत्वेन वैरिपराजयहेतुत्वेन च पुनः प्रशंसति—**देवा वा इति**।

इष्टापूर्तकारित्वपूरणेन च पुनः प्रशंसति—

**यज्ञेन वा इति**। इष्टमाग्नेयादि श्रौतकर्म। पूर्तं वापीकूपादि स्मार्तकर्म। तत्राऽऽग्नेयादियागेनेष्टसंपत्तिः। पक्वेनान्वाहार्येण पूर्तसंपत्तिः।

तस्याभिमर्शनमन्त्रप्रथमभागं व्याचष्टे—**प्रजापतेरिति**।

द्वितीयभागं व्याचष्टे—**ऊर्जस्वानिति**।

तृतीयभागं व्याचष्टे—

प्राणापानाविति । ऋत्विग्भिरन्वाहार्यस्य नीयमानत्वात्तेन स्वकीयप्राणादिपालनमाशीर्वाद एव ।

चतुर्थभागं व्याकुर्वन्नभिमर्शनं विधत्ते–

अक्षितोऽसीति । स्वर्गस्य कर्मभूमित्वाभावान्न तत्साधनानुष्ठानेनान्नं संपादयितुं शक्यं, किंतु स्वर्गप्राप्ताः प्रजा इतःप्रदानमेतल्लोकानुष्ठितकर्मसंपादितमेवान्नं स्वर्गे लोक उपजीवन्ति । तस्मात्तत्र भुज्यमानमिदं क्षीयते । अक्षितोऽसीति मन्त्रेण यदभिमर्शनं तेनान्नस्याक्षयत्वप्रापणादन्नं न स्वर्गे क्षीयते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथामष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः ) ।

बर्हिषोऽहं देवयज्यया प्रजावान्भूयासमित्याह बर्हिषा वै प्रजापतिः प्रजा असृजत तेनैव प्रजाः सृजते नराशꣳसस्याहं देवयज्यया पशुमान्भूयासमित्याह नराशꣳसेन वै प्रजापतिः पशूनसृजत तेनैव पशून्त्सृजतेऽग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयमित्याहाऽऽयुरेवाऽऽत्मन्धत्ते प्रति यज्ञेन तिष्ठति दर्शपूर्णमासयोः ( १ ) वै देवा उज्जितिमनूदजयन्दर्शपूर्णमासाभ्यामसुरानपानुदन्ताग्नेरहमुज्जितिमनूज्जेषमित्याह दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूज्जयति दर्शपूर्णमासाभ्यां भ्रातृव्यानप नुदते वाजवतीभ्यां व्यूहत्यन्नं वै वाजोऽन्नमेवाव रुन्धे द्वाभ्यां प्रतिष्ठित्यै यो वै यज्ञस्य द्वौ दोहौ विद्वान्यजत उभयतः ( २ ) एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्चैष वा अन्यो यज्ञस्य दोह इडायामन्यो यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा

( शेषाहुत्यनुमन्त्रणमन्त्रव्याख्यानम् )

अग्मन्नाशिषो दोहकामा इति स꣡ꣳस्तुता एव देवता दुहेऽथो उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्च रोहितेन त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्वाः (३) यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानꣳ सुवर्गं लोकं गमयति वि ते मुञ्चामि रशना वि रश्मीनित्याहैष वा अग्नेर्विमोकस्तेनैवैनं वि मुञ्चति विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्याह यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रति तिष्ठति सोमस्याहं देवयज्यया सुरेताः (४) रेतो धिषीयेत्याह सोमो वै रेतोधास्तेनैव रेत आत्मन्धत्ते त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमित्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्तेनैव पशूनाꣳ रूपमात्मन्धत्ते देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासमित्याहैतस्माद्वै मिथुनात्प्रजापतिर्मिथुनेन (५) प्राजायत तस्मादेव यजमानो मिथुनेन प्र जायते वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वं यद्यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्तदेवास्य सर्वं वृङ्क्ते घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोत्याऽस्य प्रजायां वाजी जायते य एवं वेद (६)।

( दर्शपूर्णमासयोरुभतो देवाश्वाः सुरेताः प्रजापतिर्मिथुनेनाऽऽप्नोत्यष्टौ च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ प्रथमकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ) ।

तृतीयेऽन्वाहार्योऽभिहितः । चतुर्थे शेषाहुतीनामनुमन्त्रणमन्त्रा व्याख्यायन्ते । तत्रानूयाजमन्त्रान्व्याचष्टे—

**बर्हिषोऽहमिति** । बर्हिषा बर्हिर्यागानुमन्त्रणेन । एवमितरत्रोभयत्र ।

सूक्तवाकानुमन्त्रणमन्त्रं व्याचष्टे—

**दर्शपूर्णमासयोरिति** । अनुष्ठितयोर्दर्शपूर्णमासयोरनेनोज्जितिमन्त्रपाठेनोज्जितिरुत्कर्षः संपूर्णता भवति । तां च यज्ञोज्जितिमनु देवा अप्युत्कर्षेणाजयन् । ताभ्यां च संपूर्णाभ्यां दर्शपूर्णमासाभ्यामसुरान्निराचक्रुः ।

स्रुग्व्यूहनानुमन्त्रणं विधत्ते—

**वाजवतीभ्यामिति** । व्यूहति अध्वर्युणा क्रियमाणमनुमन्त्रयेदित्यर्थः ।

पादद्वयेनेव प्रकर्षेण स्थित्यर्थं मन्त्रद्वित्वमित्याह—

**द्वाभ्यामिति** । कालविशिष्टमेमा अग्मन्निितिमन्त्रपाठं विधातुं प्रस्तौति—

**यो वा इति** । एष इदानीमेव वक्ष्यमाण एमा अग्मन्निितिमन्त्रपाठः पृथग्दोहः । पूर्वमिडायामुक्तः सा मे सत्याऽऽशीरितिमन्त्रपाठः पृथग्दोहः ।

विधत्ते—

**यर्हि होतेति** । होता सूक्तवाकं पठन्नाशास्तेऽयं यजमानोऽसाविति यदा नाम गृह्णाति तदानीमेमा अग्मन्निति मन्त्रं पठेत् । या देवताः "अग्निमग्न आवह" "अग्निरिदं हविरजुषत" इत्यादिना होत्रा बहुशः संस्तुताः सर्वा अप्यनेन मन्त्रपाठेन यजमानो दुग्धे । किंचेडाकालीनो दोह इदानींतनो दोह इत्युभयमपि संपादितं भवति ।

प्रस्तरानुमन्त्रणमन्त्रं व्याचष्टे—

**रोहितेनेति** । यजमानवद्यागसाधनत्वात्प्रस्तरे यजमानत्वोपचारः ।

परिधिविमोकानुमन्त्रणमन्त्रं व्याचष्टे—

**वि ते मुञ्चामीति** । ते रशना विमुञ्चामीत्याग्निमुद्दिश्याभिधानादयमग्नेर्विमोकः ।

शंयुवाकानुमन्त्रणमन्त्रं व्याचष्टे—

**विष्णोरिति** । यज्ञस्य फलव्याप्त्या विष्णुत्वम् । अन्ततः समाप्तिकाले ।

( शेषाहुत्यनुमन्त्रणमन्त्रव्याख्यानम् )

प्रथमस्य संयाजस्यानुमन्त्रणमन्त्रं व्याचष्टे—

**सोमस्येति**। गर्भाशये रेतोधारणं सोमस्यानुग्रहाद्भवति। ततः सोमो रेतोधाः।

द्वितीयपत्नीसंयाजानुमन्त्रणमन्त्रं व्याचष्टे—

**त्वष्टुरिति**। अन्यत्र " यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति " इत्याम्नानान्मनुष्यगवाश्वादिपशूनां स्त्रीपुरुषमिथुनात्मकानां रूपं त्वष्टा करोति।

तृतीयचतुर्थपत्नीसंयाजयोरेकीकारेणानुमन्त्रणमन्त्रं व्याचष्टे—**देवानामिति**।

वेदाभिमर्शनमन्त्रं व्याचष्टे—

**वेदोऽसीति**। वित्तं पूर्वलब्धं धनं, वेद्यमितः परं लब्धव्यं, तदुभयमसुरसंबन्धि यत्र क्वापि निक्षिप्तं, तदुभयं देवाः कदाचिद्वेदेन भूमिं संमृजन्तोऽलभन्त। ततो विद्यते वित्तमनेनेति व्युत्पत्त्या वेदत्वं निष्पन्नम्।

विधत्ते—

**यद्यद्भ्रातृव्येति**। वैरिणः संबन्धि यद्गृहक्षेत्रादिकं यजमानो ममास्त्वित्यभिध्यायेत्तस्य सर्वस्य नामधेयं मन्त्रमध्ये गृहीत्वा विदेयेत्येतत्पदं पठेत्।

एतस्य मन्त्रस्यान्त्यभागे सहस्रिणमिति पदस्योच्चारणं प्रशंसति—**घृतवन्तमिति**।

मन्त्रार्थवेदनं प्रशंसति—

**आऽस्येति**। प्रजायां संततौ सर्वतः पुत्रोऽन्नसंमृद्धो जायते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके पञ्चमोऽनुवाकः )।

**ध्रुवां वै रिच्यमानां यज्ञोऽनु रिच्यते यज्ञं यजमानो यजमानं प्रजा ध्रुवामाप्यायमानां यज्ञोऽन्वा प्यायते यज्ञं यजमानो यजमानं प्रजा आ प्यायतां ध्रुवा घृतेनेत्याह**

ध्रुवामेवाऽऽ प्यायँयति तामाप्यायँमानां यज्ञोऽन्वा प्यायते यज्ञं यजँमानो यजँमानं प्रजाः प्रजापँतेर्विभाज्नाम लोकस्तस्मि॰स्त्वा दधामि सह यजँमानेनेति ( १ ) आहायं वै प्रजापँतेर्विभाज्नाम लोकस्तस्मिन्नेवैनं दधाति सह यजँमानेन रिच्यँत इव वा एतद्यद्यजँते यद्यँजमानभागं प्राश्नात्यात्मानँमेव प्रीणात्येतावान्वै यज्ञो यावान्यजमानभागो यज्ञो यजँमानो यद्यँजमानभागं प्राश्नाति यज्ञ एव यज्ञं प्रति ष्ठापयत्येतद्वै सूयवँस॰ सोदँकं यद्बर्हिश्चाऽऽपँश्चैतत् ( २ ) यजँमानस्याऽऽयतँनं यद्वेदिर्यत्पूर्णपात्रमँन्तर्वेदि निनयँति स्व एवाऽऽयतँने सूयवँस॰ सोदँकं कुरुते सदँसि सन्मे भूया इत्याहाऽऽपो वै यज्ञ आपोऽमृतं यज्ञमेवामृतँमात्मन्धत्ते सर्वाणि वै भूतानि व्रतमुँपयन्तमनूपँ यन्ति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्यांहैष वै दर्शपूर्णमासयोरवभूथः ( ३ ) यान्येवैनं भूतानि व्रतमुँपयन्तमनूपयन्ति तैरेव सहावँभृथमवैति विष्णुमुखा वै देवाश्छन्दोँभिरिमाँल्लोकाननपजय्यमभ्यँजयन्यद्विष्णुक्रमान्क्रमँते विष्णुरेव भूत्वा यजँमानश्छन्दोँभिरिमाँल्लोकाननपजय्यमभि जयति विष्णोः क्रमोँऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिँक्षं जागँती द्यौरानुँष्टुभीर्दिशश्छन्दोँभिरेवेमाँल्लोकान्यँथापूर्वमभि जँयति ॥ ४ ॥

( यजँमानेनेति चैतदँवभृथो दिशः सप्त चँ ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( आप्यायनादिमन्त्रव्याख्यानम् )

( अथ प्रथमकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ) ।

चतुर्थे शेषाहुत्यनुमन्त्रणमन्त्रा व्याख्याताः । पञ्चमे त्वाप्यायनादिमन्त्रा व्याख्यायन्ते । तत्राऽऽप्यायनमन्त्रं व्याख्यातुमन्वयव्यतिरेकाभ्यां प्रस्तौति—

**ध्रुवां वा इति** । ध्रुवायां रिक्तायां यज्ञस्यासंपूर्त्या यजमानस्य फलाभावात्तदीयप्रजाया अन्नाद्यभाव इति व्यतिरेकः । एवमन्वये योज्यम् ।

मन्त्रं व्याचष्टे—**आ प्यायतामिति** ।

यजमानभागप्राशनमन्त्रं व्याचष्टे—

**प्रजापतेरिति** । विशेषेण कर्मभूमित्वेन भातीति विभानयं भूलोकः । एनं यजमानभागम् ।

यजमानस्य रिक्तीकरणनिवारणेन भागप्राशनं प्रशंसति—

**रिच्यत इति** । यजत इति यत्, एतेन पुरोडाशाज्यसांनाय्यद्रव्यैर्होमे यजमानो रिक्त इव भवति । भागप्राशनेन तु प्रीतस्तं क्लेशं जहाति ।

यज्ञप्रतिष्ठाहेतुत्वेनापि तदेव प्रशंसति—

**एतावानिति** । यजमानस्य भागो यावानस्ति एतावानेवेह लोके यजमानस्योपयुक्तो यज्ञोऽवशिष्टस्य देवैर्ऋत्विग्भिश्च भक्ष्यमाणत्वात् । स्वयं च यज्ञस्वामित्वेन यज्ञात्मकः । तथा सति यजमानेन भागे प्राशिते यज्ञ एव यज्ञः प्रतिष्ठापितो भवति ।

पूर्णपात्रस्य निनयनं विधातुं प्रस्तौति—

**एतद्वा इति** । वेदेर्हविर्धारणेन यजमानस्थानत्वम् । एतच्च स्थानं बर्हिषाऽऽस्तीर्णत्वात्समीचीनतृणोपेतं प्रणीतानामत्र स्थापितत्वादुदकोपेतं च ।

विधत्ते—

**यत्पूर्णपात्रमिति** । × सुवयसं तृणसमृद्धिं सा× मुदकसमृद्धिं च कुरुते ।

निनयनमन्त्रं व्याचष्टे—

**सदसीति** । अपां यज्ञसाधनत्वाद्यज्ञत्वं जीवनहेतुत्वाच्चामृतत्वं, तस्मादपोऽभिलक्ष्य सन्मे भूया इत्युक्ते सति यज्ञरूपममृतं स्वस्मिन्धारयति ।

× अयं भावप्रधाननिर्देशो बोध्यः । + ख. पुस्तकटिप्पण्यां समृद्धमिति तै° ।

१ ख. °व्यहानेर्यज° ।

व्युत्सेचनमन्त्रं व्याचष्टे–

**सर्वाण्यिति** । यो यजमानो यज्ञव्रतमुपैति तमनु देवपित्रादीनि सर्वाणि भूतानि व्रतं प्रारभन्ते । अतो देवपित्रादिमार्जनप्रतिपादकेनानेन मन्त्रेण तैः सर्वैर्भूतैः सहैवावभृथं प्राप्नोति ।

विष्णुक्रमान्विधत्ते–

**विष्णुमुखा इति** । देवाः पूर्वं स्वेषु विष्णुमेव मुख्यं कृत्वा छन्दोभिमानिदेवैः सहिता अन्यैर्जेतुं यथा न शक्यते तथा लोकानजयन् । अतो यजमानो विष्णुक्रमान्क्रमत इति यत्स विष्णुरेव भूत्वेमाँल्लोकानाभिजयति ।

तत्रत्यान्मन्त्रान्व्याचष्टे–

**विष्णोः क्रम इति** । गायत्रादिच्छन्दोदेवानां पृथिव्यादिलोकस्वामित्वेन तैः सह लोकानां जेतुं शक्यतया मन्त्रेषु गायत्रेण छन्दसेत्यादि पठितमित्यभिप्रायः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः ) ।

**अगन्म सुवः सुवरगन्मेत्याह सुवर्गमेव लोकमेति संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते माऽऽवृक्षीत्याह यथायजुरेवैतत्सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहीत्याहाऽऽशिषमेवैतामा शास्ते प्र वा एषोऽस्माल्लोकाच्च्यवते यः ( १ ) विष्णुक्रमान्क्रमते सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते ब्रह्मवादिनो वदन्ति स त्वै विष्णुक्रमान्क्रमेत य इमाँल्लोकान्भ्रातृव्यस्य संविद्य पुनरिमं लोकं प्रत्यवरोहेदित्येष वा अस्य लोकस्य प्रत्यवरोहो यदाहेदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिव इतीमानेव लोकान्भ्रातृव्यस्य**

---

१ ख. °नोऽपि विष्णुक्रमैस्तथा ज° । २ क. घ. ङ. °क्रमतया ज° ।

( उपस्थानादिमन्त्रव्याख्यानम् )

संविद्य पुनारमं लोकं प्रत्यवरोहति सम् ( २ ) ज्योतिषाऽभूवमित्याहास्मिन्नेव लोके प्रति तिष्ठत्यैन्द्रीमावृतमन्वावर्त इत्याहासौ वा आदित्य इन्द्रस्तस्यैवाऽऽवृतमनु पर्यावर्तते दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यवत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तते समहं प्रजया सं मया प्रजेत्याहाऽऽशिषम् ( ३ ) एवैतामा शास्ते समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याह यथायजुरेवैतद्वसुमान्यज्ञो वसीयान्भूयासमित्याहाऽऽशिषमेवैतामा शास्ते बहु वै गार्हपत्यस्यान्ते मिश्रमिव चर्यत आग्निपावमानीभ्यां गार्हपत्यमुप तिष्ठते पुनात्येवाग्निं पुनीत आत्मानं द्वाभ्यां प्रतिष्ठित्या अग्ने गृहपत इत्याह ( ४ ) यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रः ( ५ ) जातः स्यात्तेज एवास्मिन्ब्रह्मवर्चसं दधाति यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति कस्त्वा युनक्ति स त्वा वि मुञ्चत्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति प्रजापतिना वि मुञ्चति प्रतिष्ठित्या ईश्वरं वै व्रतमविसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिषमित्याह व्रतमेव ( ६ ) वि सृजते शान्त्या अप्रदाहाय पराङ्वाव यज्ञ एति न नि वर्तते पुनर्यो वै यज्ञस्य पुनरालम्भं विद्वान्यजते तमभि

नि वर्तते यज्ञो बभूव स आ बभूवेत्याहैष वै यज्ञस्य पुनरालम्भस्तेनैवैनं पुनरा लभतेऽनवरुद्धा वा एतस्य विराड्य आहिताग्निः सन्नसभः पशवः खलु वै ब्राह्मणस्य सभेष्टा प्राङुत्क्रम्य ब्रूयाद्गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञ इत्यव सभाꣳ रुन्धे प्र सहस्रं पशूनाप्नोत्याऽस्य प्रजायां वाजी जायते ( ७ ) ॥

( यः समाशिषं गृहपत इत्याहामुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो व्रतमेव खलु वै चतुर्विꣳशतिश्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ) ।

आप्यायनादिमन्त्राः पञ्चमे व्याख्याताः । उपस्थानादिमन्त्राः षष्ठे व्याख्यायन्ते । तत्राऽऽहवनीयोपस्थानमन्त्रस्य पूर्वभागं व्याचष्टे—

अगन्मेति । द्विरुक्त्याऽऽदरस्य प्रतीतेः सर्वथा प्राप्नोत्येव ।

उत्तरभागं व्याचष्टे—

संदृश इति । अस्मिन्युजषि तपःशब्ददर्शनात्तपसश्च विच्छिन्नो मा भूवमिति यत्प्रतीयत एतद्यजुरनतिक्रम्य तथैव प्रार्थ्यते ।

आदित्योपस्थानमन्त्रं व्याचष्टे—

सुभूरसीति । आयुर्मे धेहीत्यनेनाऽऽशीः प्रतीयते ।

इदमहमित्यादिकं वैरिनिःसारणमन्त्रं व्याख्यातुं प्रस्तौति—

प्र वा इति । विष्णुक्रमाणां स्वर्गार्थत्वाद्विष्णुक्रमैरस्माल्लोकात्प्रच्युतिर्भवति । तस्याः प्रच्युतेः परिहारोपायं ब्रह्मवादिनः परस्परमेवमाहुः—यो यजमानो वैरिण इमाँल्लोकांस्तेन संपादितान्वैरिनिःसारणेन लब्ध्वा विष्णुक्रमैः स्वर्गारोहणादूर्ध्वं पुनरिमं मनुष्यलोकं प्रत्यवरोहेत्स एव यजमानो विष्णुक्रमेषु चतुर इति ।

मन्त्रं व्याचष्टे—

( उपस्थानादिमन्त्रव्याख्यानम् )

**एष वा इति**। इदमहमित्यादिमन्त्रमाहेति यदेष एव पाठोऽस्य भूलोकस्य संबन्धी प्रत्यवरोहः।

आत्माभिमर्शनमन्त्रं व्याचष्टे—

**सं ज्योतिषेति**। एतल्लोकप्रापकेन(ण) ज्योतिषा संगतोऽहमित्येवं मन्त्रे प्रतीयमानत्वात्।

प्रदक्षिणावृत्तिमन्त्रं व्याचष्टे—

**ऐन्द्रीमिति**। परमैश्वर्ययोगादादित्यस्येन्द्रत्वम्।

प्रदक्षिणावृत्तिं विधत्ते—

**दक्षिणेति**। दक्षिणा प्रादक्षिण्येन। दक्षिणभागमवस्थाप्य वामभागस्य परि[1]भ्रामणात्प्रादक्षिण्यम्। पुरुषस्य दक्षिणभागे सामर्थ्यातिशयसद्भावात्तदेवानुसृत्याऽऽवृत्तिः कृता भवति। यस्माद्दक्षिणभागे वीर्यं श्रुतेरभिप्रेतं तस्माल्लोकेषु सर्वेषु व्यापारेषु दक्षिणहस्तस्यैव वीर्यातिशय उपलभ्यते। किंच, आदित्यो मेरुं प्रदक्षिणी करोति तदप्यत्रानुसृतं भवति।

विपर्ययेणाऽऽवृत्तिमन्त्रं व्याचष्टे—

**समहमिति**। स्वयं यथा प्रजादिना संगच्छते तथा प्रजादिरपि स्वेन संगच्छत इत्येतदुभयं द्वितीयावृत्त्या प्रार्थ्यते।

समिदाधानमन्त्रं स्पष्टार्थत्वेन व्याचष्टे—**समिद्ध इति**।

आहवनीयोपस्थानमन्त्रं व्याचष्टे—

**वसुमानिति**। वसीयानतिशयेन धनवान्।

विधत्ते—

**बहु वा इति**। गार्हपत्योऽजस्रं धार्यते। तथा सति[2] एतत्संनिधौ बहुविधजन्तुपातकं[3] संभाव्यते। अतो यजमानेन गार्हपत्यस्य समीपे पापमिश्रमिव होमादिकर्मानुष्ठीयते।

ततोऽग्न आयूंषीत्याद्याभ्यामग्निपवमानदेवताकाभ्यां[4] शुद्धिहेतुभ्यामृग्भ्यामग्न्युपस्थाने वह्नेः स्वस्य च शुद्धिर्भवति।

अन्यमपि गार्हपत्योपस्थानमन्त्रं व्याचष्टे—

**अग्ने गृहपत इति**। तदिदं मन्त्रब्राह्मणं स्पष्टार्थं पूर्वप्रपाठके व्याख्यातं च। तत्र नाम गृह्णातीति विधिः।

---

१ ख. °रिभ्रमणं प्राद°। २ ख. °ति तस्मिन्नग्नौ ब°। ३ ख. °पातः सं°। ४ ख. °वताका°।

तद्ग्रहणे प्रकारविशेषमाहाऽऽपस्तम्बः—

" तन्तव इत्यजातस्यामुष्मा इति जातस्य " इति ।

अजातस्य पुत्रस्य विशेषनामाभावात्तन्तव इत्येतदेव सामान्यनाम गृह्णीयात् । जातस्य पुत्रस्य त्वमुष्मा इत्यनेन विशेषनामनिर्देशो विवक्ष्यते ।

यज्ञविमोकमन्त्रं व्याचष्टे—**यो वै यज्ञमिति** ।

व्रतविसर्जनमन्त्रं व्याचष्टे—

**ईश्वरं वा इति** । यद्व्रतं गृहीतं सन्न विसृष्टं तद्व्रतं प्रदहो यजमानं प्रदग्धुमीश्वरं समर्थम् । अग्ने व्रतपत इत्यादिमन्त्रपाठ एव व्रतविसर्गः । तेन शीतं सत् न दहति ।

पुनरालम्भमन्त्रं व्याख्यातुं प्रस्तौति—

**पराङिति** । पराङ्वाव विमुख एव पुनर्न निवर्तते, पुनरालम्भमन्त्रवादिनं यजमानं प्रति तु पुनर्निवर्तते, पुनरप्यसावनुतिष्ठतीत्यर्थः ।

मन्त्रं व्याचष्टे—

**यज्ञ इति** । एष वै मन्त्रपाठ एव ।

गोमतीमन्त्रं विधातुं प्रस्तौति—

**अनवरुद्धा इति** । यो यजमान आहिताग्निरपि सन्सभारहितो भवेत्, एतस्य यजमानस्य विराड्विशेषेण राजमाना स्वोचितसभा कदाचिदप्यनवरुद्धाऽस्वाधीना भवति। यागकाले सभाहीनस्य लोकव्यवहारकालेऽपि सभा न संभवेदित्यर्थः । नात्र राज्ञ इवामात्यस्वभटरूपा सभा ब्राह्मणस्योचिता, किं तर्हि यज्ञनिष्पादका द्विपादश्चतुष्पादश्च पशवोऽस्य सभा ।

मन्त्रं विधत्ते—

**इष्ट्वा प्राङिति** । भूमनिन्दाप्रशंसास्विति वैयाकरणैरुक्तत्वाद्गोमानित्यादिको मतुप्प्रत्ययो बाहुल्यवाची । अतः सहस्रप्राप्तिर्युक्ता । इडावान्प्रजावानिति मन्त्रेऽभिधानादस्य प्रजायामन्नवतः पुत्रस्योत्पत्तिर्युक्ता ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

———

( वाजपेयोपयुक्तरथविषयमन्त्राभिधानम् )

( अथ प्रथमाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः )।

देवं सवितः प्र सुव यज्ञं प्र सुव यज्ञपतिं भगाय दिव्यो गन्धर्वः। केतपूः केतं न पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः। इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात्। वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे। यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत्। अप्सु ( १ ) अन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिनः। वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः। ते अग्रे अश्वमायुञ्जन्ते अस्मिञ्जवमाऽदधुः। अपां नपादाशुहेमन्य ऊर्मिः ककुद्मान्प्रतूर्तिर्वाजसातमस्तेनायं वाजꣳ सेत्। विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमस्यङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनु संचरन्तौ दूरेहेतिरिन्द्रियावान्पतत्री ते नोऽग्नयः पप्रयः पारयन्तु ( २ )॥

( अप्सु न्यङ्कौ पञ्चदश च )।

**इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥**

---

( अथ प्रथमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः )।

इत्थं षट्स्वनुवाकेषु दार्शिकयाजमानब्राह्मणशेषो वर्णितः। अथ देव सवितः प्र सुवेत्यादिषु षट्सु वाजपेयविषया आध्वर्यवमन्त्रा उच्यन्ते। तत्रास्मिन्सप्तमेऽनुवाके रथविषया मन्त्राः कथ्यन्ते। तेषां वाजपेयमन्त्राणां व्याख्यानं ब्राह्मणग्रन्थे प्रथमकाण्डे तृतीयप्रपाठके द्वितीयमारभ्य नवमान्तेष्वष्टस्वनुवाकेष्वाम्नातम्। तत्र वाजपेयविधिर्ग्रहविधिः पशुविधिश्चाऽऽद्येषु त्रिष्वनुवाकेषु क्रमेणाऽऽम्नाताः। अनयोर्वाजपेयविषययोर्मन्त्रब्राह्मणयोरत्यन्तविप्रकृष्टदेशवर्तित्वेन बुद्धिसां-

( वाजपेयोपयुक्तरथविषयमन्त्राभिधानम् )

निष्पाभावाच्छ्रोतृणां प्रतिपत्तिसौकर्याय पूर्वोक्तदार्शिकसौमिककाण्डवद्ब्राह्मणेन सहैव मन्त्रा व्याख्यायन्ते ।

तस्य च ब्राह्मणस्य प्रथमानुवाके वाजपेयं विधातुं प्रस्तौति–

" देवा वै यथादर्शं यज्ञानाहरन्त । योऽग्निष्टोमम् । य उक्थ्यम् । योऽतिरात्रम् । ते सहैव सर्वे वाजपेयमपश्यन् । ते । अन्योन्यस्मै नातिष्ठन्त । अहमनेन यजा इति । तेऽब्रुवन् । आजिमस्य धावामेति ( १ ) । तस्मिन्नाजिमधावन् । तं बृहस्पतिरुदजयत् । तेनायजत । स स्वाराज्यमगच्छत् । तमिन्द्रोऽब्रवीत् । मामनेन याजयेति । तेनेन्द्रमयाजयत् । सोऽग्रं देवतानां पर्यैत् । अगच्छत्स्वाराज्यम् । अतिष्ठन्तास्मै ज्यैष्ठ्याय ( २ ) " [ ब्रा० का० १ प्र० ३ अ० २ ] इति ।

देवानां मध्ये कश्चिदग्निष्टोमं ददर्श । अन्य उक्थ्यमपरोऽतिरात्रम् । ते च स्वस्वदर्शनमनतिक्रम्य तान्यज्ञानाहरन्तानुष्ठितवन्तः । ते देवाः सर्वे सहैव वाजपेयं दृष्ट्वाऽहमेव प्रथममनेन वाजपेयेन यजा इत्येवं विवदमानाः परस्परं प्रथमानुष्ठातृत्वलक्षणाय ज्यैष्ठ्याय नातिष्ठन्त ज्यैष्ठ्यं नाङ्गी चक्रुः । तत एवं समयं चक्रुरस्माकं मध्य आजिं धावनेन यः कश्चिज्जयति स एव ज्येष्ठोऽस्त्विति । आजिर्धावनप्रदेशस्यावधिर्भूविशेषः । एवं समयं कृत्वा तस्मिन्वाजपेयविषये विजयायाऽऽजिमधावन् । तत्र तं वाजपेयं प्रति धावन्बृहस्पतिरुत्कर्षेणाजयत् । इतरेभ्यः प्रथममवधिं पस्पर्श । ततः प्रथमं स एव तेन वाजपेयेनेष्ट्वा स्वाराज्यमपारतन्त्र्यरूपं माहाराज्यमगच्छत् । तत इन्द्रस्तं बृहस्पतिं संप्रार्थ्य तेन वाजपेयेनेष्ट्वा देवानां मध्ये ज्येष्ठत्वमपारतन्त्र्येण स्वर्गाधिपत्यलक्षणं स्वाराज्यं चागच्छत् । अस्येन्द्रस्य ज्यैष्ठ्यमितरे सर्वे देवा मात्सर्यं परित्यज्याङ्गी चक्रुः ।

स्वाराज्यादिकामिनो वाजपेयं विधत्ते–

" य एवं विद्वान्वाजपेयेन यजते । गच्छति स्वाराज्यम् । अग्रं१ समानानां पर्येति । तिष्ठन्तेऽस्मै ज्यैष्ठ्याय " [ ब्रा० का० १ प्र० ३ अ० २ ] इति ।

अधिकारविशेषविधिमुन्नयति ।

" स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः " [ ब्रा० का० १ प्र० ३ अ० २ ] इति ।

---

१ ख. कारिवि°।

( वाजपेयोपयुक्तरथविषयमन्त्राभिधानम् )

स बृहस्पतिनाऽनुष्ठितः। एष इन्द्रेणानुष्ठितः। देवानां मध्ये बृहस्पतिर्ब्राह्मणजात्यभिमानी, इन्द्रः क्षत्रियजात्यभिमानी, ताभ्यामेवानुष्ठितत्वान्मनुष्येष्वपि ब्राह्मणराजन्ययोरेवात्राधिकारो न तु वैश्यस्य। अत एवाऽऽपस्तम्ब आह— "शरदि वाजपेयेन यजेत ब्राह्मणो राजन्यो वर्द्धिकामः" इति।

नामनिर्वचनं दर्शयति—

"तं वा एतं वाजपेय इत्याहुः। वाजाप्यो वा एषः। वाज१ं ह्येतेन देवा ऐप्सन्" [ ब्रा० का० १ प्र० ३ अ० २ ] इति।

वाजो देवान्नरूपः सोमः पेयो यस्मिन्यागे स वाजपेय इत्येकं निर्वचनम्। यस्मादेतेन यज्ञेन देवा वाजं फलरूपमन्नमाप्तुमैच्छंस्तस्मादन्नरूपो वाजः पेयः प्राप्यो येन स वाजपेय इत्यपरं निर्वचनम्।

सोमस्यैतद्यागसाधनत्वात्तदभेदेन यागं तद्वेदनं च स्तौति—

"सोमो वै वाजपेयः। यो वै सोमं वाजपेयं वेद (३) वाज्येवैनं पीत्वा भवति। आऽस्य वाजी जायते" [ ब्रा० का० १ प्र० ३ अ० २] इति।

एनं वाजपेयगतं सोमम्।

फलभूतान्नाभेदोपचारेण स्तौति—

"अन्नं वै वाजपेयः। य एवं वेद। अत्त्यन्नम्। आऽस्यान्नादो जायते" [ ब्रा० का० १ प्र० ३ अ० २ ] इति।

यागप्रतिपादकवेदाभेदोपचारेण स्तौति—

"ब्रह्म वै वाजपेयः। य एवं वेद। अत्ति ब्रह्मणाऽन्नम्। आऽस्य ब्रह्मा जायते (४)" [ ब्रा० का० १ प्र० ३ अ० २ ] इति।

ब्रह्मणा वेदाध्यापनसंपादितया गुरुदक्षिणयेत्यर्थः। ब्रह्मा वेदाध्यापकः।

मन्त्रोच्चारणसाधनभूतवागभेदोपचारेण स्तौति—

"वाग्वै वाजस्य प्रसवः। य एवं वेद। करोति वाचा वीर्यम्। ऐनं वाचा गच्छति। अपिवर्तीं वाचं वदति" [ ब्रा० का० १ प्र० ३ अ० २] इति।

देव सवितः प्र सुवेत्यादिमन्त्ररूपा वागेव वाजस्य वाजपेयस्य प्रसव उत्पत्तिहेतुः। य एतद्वेदिता स तया सभायां पाण्डित्यरूपया वाचा वीर्यमतिशयं करोति। सभागतश्च विद्वत्संघः स्तुतिरूपया वाचा युक्त एनमागच्छति बहुधा प्रशंसतीत्यर्थः। पुनरपि वाजपेयवाक्यं श्रोष्यामि तदर्थं ज्ञास्याम्यनुष्ठास्यामीत्येतादृशीं पुनरपीत्यपिशब्दोपेतां वाचं सर्वदा वदति श्रद्धालुर्भवतीत्यर्थः।

( वाजपेयोपयुक्तरथविषयमन्त्राभिधानम् )

एकादशानुवाकगतानामुज्जितिमन्त्राणां पाठं विधातुं प्रस्तौति-

" प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स आत्मन्वाजपेयमधत्त । तं देवा अब्रुवन् । एष वाव यज्ञः । यद्वाजपेयः ( ५ ) अप्येव नोऽत्रास्त्विति । तेभ्य एता उज्जितीः प्रायच्छत् " [ ब्रा० का० १ प्र० ३ अ० २ ] इति ।

प्रजापतिरितरेभ्यो देवेभ्योऽग्निष्टोमादीन्यज्ञान्विभज्य दत्त्वा वाजपेयं स्वस्मिन्नेव स्थापितवान् । देवाश्च वाजपेय एव मुख्यो यज्ञोऽतोऽस्माकमप्यत्र भागोऽस्त्वित्यब्रुवन्, स च तेभ्य उज्जितिमन्त्रान्प्रायच्छत् ।

विधत्ते-

" ता वा एता उज्जितयो व्याख्यायन्ते यज्ञस्य सर्वत्वाय । देवतानामनिर्भागाय " [ ब्रा० का० १ प्र० ३ अ० २ ] इति ।

व्याख्यायन्ते व्याख्यायेरन्पठनीया इत्यर्थः । तत्पाठेन यज्ञस्य सर्वत्वमवैकल्यं भवति । देवताश्च भागयुक्ता भवन्ति । तेषु मन्त्रेष्वग्निरश्विनौ विष्णुः सोम इत्येवं तत्तद्भागभाजो देवता आम्नाताः । अयं विधिरापस्तम्बेन स्पष्टं दर्शितः-"अग्निरेकाक्षरेणेति धावत्सूज्जितीर्यजमानं वाचयति" इति । उज्जितिमन्त्राणां रथधावनकाले पठनीयत्वाद्धावनविधिसमीप एवायं विधिरुत्क्रष्टव्यः ।

अस्य च विध्युत्कर्षस्य प्रसङ्गेन बुद्धिस्थं पुरुषार्थत्वेन क्रतुप्रकरणादुत्कष्टव्यं कंचित्प्रतिग्रहनिषेधं विधित्सुः प्रस्तौति-

" देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन् । यद्ब्रह्मणः शमलमासीत् । सा गाथा नाराशꣳस्यभवत् । यदन्नस्य । सा सुरा ( ६ ) " [ ब्रा० का० १ प्र० ३ अ० २ ] इति ।

ब्रह्मणो वेदस्य शमलं मलिनभागमपाघ्नन्नपनीतवन्तः । नराणां राजामात्यादीनामा समन्तात्प्रशंसनं नराशंसस्तद्विषया गीर्नाराशंसी ।

प्रतिग्रहनिषेधं विधत्ते-

" तस्म द्गायतश्च मत्तस्य च न प्रतिगृह्यम् । यत्प्रतिगृह्णीयात् । शमलं प्रतिगृह्णीयात् " [ ब्रा० का० १ प्र० ३ अ० २ ] इति ।

यस्माल्लौकिकमनुष्यविषयगानसुरे मलरूपे तस्मात्तादृशगानपरस्य सुरापानमत्तस्य च धनं न प्रतिगृह्णीयात् ।

प्रकारान्तरेण वाजपेयं प्रशंसति-

( वाजपेयोपयुक्तरथविषयमन्त्राभिधानम् )

" सर्वा वा एतस्य वाचोऽवरुद्धाः। यो वाजपेययाजी। या पृथिव्यां याऽग्नौ या रथंतरे। याऽन्तरिक्षे या वायौ या वामदेव्ये। या दिवि याऽऽदित्ये या बृहति। याऽप्सु यौषधीषु या वनस्पतिषु" [ब्रा० का० १ प्र० ३ अ० २] इति।

पृथिव्यन्तरिक्षद्युरूपं यल्लोकत्रयं तदभिमानिदेवतात्रयं रथंतरवामदेव्यबृहद्रूपमुक्तलोकाभिमानिदेवताग्नियं यत्सामत्रयमबोषधिवनस्पतिरूपं यद्यागोपयुक्तद्रव्यत्रयं तस्य सर्वस्य संबन्धिन्यो या वाचस्ताः सर्वा एतस्य वाजपेययाजिनोऽवरुद्धाः संपन्नाः। तत्र सामसंबन्धिन्यो वाचस्तदाश्रयभूता ऋच एव। पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्येते यूपप्रोक्षणमन्त्राः। पृथिव्यादिविषया वाचः। अग्न आयूंषीत्यादिराग्नेयातिग्राह्यमन्त्रोऽग्निविषया वाक्। आ वायो भूषेति ग्रहान्तरमन्त्रो वायुविषया वाक्। तुरीयाऽऽदित्य सवनं त इन्द्रियमित्यादिग्रहान्तरमन्त्र आदित्यविषया वाक्। आप उन्दन्त्वित्यादिरब्विषया वाक्। ओषधे त्रायस्वैनमित्योषधिविषया वाक्। सूपस्था देवो वनस्पतिरित्यादिर्वनस्पतिविषया वाक्। एवं पृथिवी दीक्षेत्यादयो बहव उदाहार्याः। तदेवं सर्ववागवरोधाद्वाजपेयः प्रशस्तः।

तामिमां प्रशंसामुपसंहरति—

" तस्माद्वाजपेययाज्यार्त्विजीनः। सर्वा ह्यस्य वाचोऽवरुद्धाः (७) " [ब्रा० का० १ प्र० ३ अ० २] इति।

आर्त्विजीनो वाजपेयं यष्टुं प्रशस्तानृत्विजोऽर्हति। वाजपेयेनेष्ट्वा परार्थमार्त्विज्यं चार्हति।

इत्थमेकेनानुवाकेन वाजपेयो विहितः। अथान्येनानुवाकेन ग्रहविशेषा विधीयन्ते, तत्रातिग्राह्यान्विधातुं प्रस्तौति—

" देवा वै यदन्यैर्ग्रहैर्यज्ञस्य नावारुन्धत। तदतिग्राह्यैरतिगृह्यावारुन्धत। तदतिग्राह्याणामतिग्राह्यत्वम् " [ब्रा० का० १ प्र० ३ अ० ३] इति।

अन्यैरैन्द्रवायवातिग्रहैर्यत्फलं न प्राप्नुवंस्तदप्राप्यं फलमतिग्राह्यसंज्ञकैर्ग्रहैरतिशयेन गृहीत्वा स्वाधीनं कृतवन्तः। इतरग्रहानतिक्रम्य दुष्प्रापं फलं गृह्यत एभिरित्यतिग्राह्याः।

विधत्ते—

" यदतिग्राह्या गृह्यन्ते। यदेवान्यैर्ग्रहैर्यज्ञस्य नावरुन्धे। तदेव तैरतिगृह्यावरुन्धे " [ब्रा० का० १ प्र० ३ अ० ३] इति।

प्रकृतिगतानामाग्नेयैन्द्रसौर्याणामतिग्राह्याणां चोदकादेव प्राप्तत्वात्तद्विधित्वभ्रान्तिव्युदासाय संख्याविशेषं विधत्ते—

“ पञ्च गृह्यन्ते । पाङ्क्तो यज्ञः । यावानेव यज्ञः । तमाप्त्वाऽवरुन्धे ( १ ). [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

धानाः करम्भ इत्यादिब्राह्मणोदाहरणेन यज्ञस्य पाङ्क्तत्वमसकृद्दर्शितम् ।

वक्ष्यमाणैरिन्द्राय जुष्टं गृह्णामीत्येतादृशैरिन्द्रलिङ्गकैर्मन्त्रैरेव तद्ग्रहणं विधत्ते—

“ सर्वे ऐन्द्रा भवन्ति । एकधैव यजमान इन्द्रियं दधति ” [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

सर्वेषामेकदेवताकत्वेनैकविधेन्द्रियधारकत्वम् ।

ग्रहान्तराणि विधत्ते—

“ सप्तदश प्राजापत्या ग्रहा गृह्यन्ते । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै” ( ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

प्रजापतेः सप्तदशत्वं यो वै सप्तदशमित्यत्रोपपादितम् ।

वक्ष्यमाणामया विष्ठा इत्यादिकामृचं कुविदङ्गेत्यादिकां च विषयविशेषेण व्यवस्थितां विधत्ते—

“ एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यं दधाति ” [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

तेषु ग्रहेषु द्रव्यद्वयं विधत्ते—

“ सोमग्रहाँश्च सुराग्रहाँश्च गृह्णाति । एतद्वै देवानां परममन्नम् । यत्सोमः ( २ ) एतन्मनुष्याणाम् । यत्सुरा । परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे ” [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

मनुष्याणामधमजातीनामिति शेषः । शालिमुद्गादिकं परमान्नं यावनालप्रियंग्वादिकमवरम् । यदा परमान्नसंपत्तिस्तदानीमवरान्नसंपत्तिः किमु वक्तव्या । उक्तग्रहप्रकारश्चाऽऽपस्तम्बेन स्पष्टीकृतः—“ ऐन्द्रमतिग्राह्यं गृहीत्वोपयामगृहीतोऽसि नृषदं त्वेति पञ्चैन्द्रानतिग्राह्यान्गृह्णाति तेषां पूर्ववत्कल्पः, षोडशिनं गृहीत्वाऽया विष्ठा जनयन्कर्वराणीति सप्तदश प्राजापत्यान्गृह्णाति तेषां षोडशिवत्कल्पः, कुविदङ्गेत्यपरस्मिन्खरे प्रतिप्रस्थाता सप्तदशभिरुपयामैः सुराग्रहान्गृह्णाति” इति ।

द्विविधग्रहाविधिमनूद्य प्रशंसति—

( वाजपेयोपयुक्तरथविषयमन्त्राभिधानम् )

" सोमग्रहान्गृह्णाति । ब्रह्मणो वा एतत्तेजः। यत्सोमः। ब्रह्मण एव तेजसा तेजो यजमाने दधाति । सुराग्रहान्गृह्णाति । अन्नस्य वा एतच्छमलम् । यत्सुरा ( ३ ) अन्नस्यैव शमलेन शमलं यजमानादपहन्ति " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

ब्रह्मणो ब्राह्मणस्योचितं तेजः सोमः। अत एव तदभावे व्रात्यत्वमाम्नायते— " यस्य पिता पितामहो वा सोमं न पिबेत्स व्रात्यः " इति ।

प्रकारान्तरेण विधिद्वयं प्रशंसति—

" सोमग्रहांश्च सुराग्रहांश्च गृह्णाति । पुमान्वै सोमः। स्त्री सुरा। तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । आत्मानमेव सोमग्रहैः स्पृणोति । जायां सुराग्रहैः। तस्माद्वाजपेययाज्यमुष्मिँल्लोके स्त्रियं संभवति । वाजपेयाभिजितं ह्यस्य ( ४ ) " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

स्पृणोति प्रीणयति । तस्माज्जायाभिमानिदेवतायाः सुराग्रहैस्तोषितत्वात्स्वर्गलोके स्वापेक्षितां रम्भादिस्त्रियमनुभवति । तदेतत्सामर्थ्यमस्य युक्तं वाजपेयेन संपादितत्वात् ।

वर्गद्वयस्य पूर्वोत्तरकालविशेषं स्थानविशेषं च विधत्ते—

" पूर्वे सोमग्रहा गृह्यन्ते । अपरे सुराग्रहाः। पुरोक्षं सोमग्रहान्सादयति । पश्चादक्षं सुराग्रहान् । पापवस्यसस्य विधृत्यै " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

पुरोक्षं शकटस्याधस्तादक्षस्य पुरः। पापं सुराग्रहरूपं निन्दितं कर्म, वस्यसं वसुमत्तरं सोमग्रहरूपं पुण्यं कर्म, तयोर्विधृत्यै विभागेन धारणाय ।

व्यतिषङ्गं विधत्ते—

" एष वै यजमानः। यत्सोमः। अन्नं सुरा । सोमग्रहांश्च सुराग्रहांश्च व्यतिषजति । अन्नाद्येनैवैनं व्यतिषजति( ५ ) " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

व्यतिषङ्गप्रकार आपस्तम्बेन दर्शितः—" व्यतिषङ्गं सोमग्रहैः सुराग्रहान्गृह्णाति पूर्वोऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थाता " इति । व्यतिषङ्गं व्यतिषज्येत्यर्थः। अध्वर्युणा प्रथमे सोमग्रहे गृहीते सति प्रतिप्रस्थाता प्रथमं सुराग्रहं गृह्णीयात् । ततो द्वितीये द्वितीयं, सोऽयं व्यतिषङ्गः।

अध्वर्योरुद्द्रवणस्य विधास्यमानस्य मन्त्रमुत्पाद्य व्याचष्टे—

" संपृचः स्थ सं मा भद्रेण पृङ्क्तेत्याह । अन्नं वै भद्रम् । अन्नाद्येनैवैनꣳ सꣳसृजति " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

हे सोमग्रहा यूयं संपृचः स्थ संपर्कयोग्याः स्थ। अतो मां भद्रेण श्रेयसाऽन्नेन संपृङ्क्त संयोजयत ।

प्रतिप्रस्थातुरुद्द्रवणस्य विधास्यमानस्य करणभूतं मन्त्रमुत्पादयितुं प्रस्तौति-

" अन्नस्य वा एतच्छमलम् । यत्सुरा । पाप्मेव खलु वै शमलम् । पाप्मना वा एनमेतच्छमलेन व्यतिषजति । यत्सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

पाप्मेव पापरूपमेव । लोकवेदनिषिद्धत्वात् ।

मन्त्रमुत्पाद्य व्याचष्टे-

" विपृचः स्थ वि पाप्मना पृङ्क्तेत्याह । पाप्मनैवैनꣳ शमलेन व्यावर्तयति (६) तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

हे सुराग्रहा यूयं विपृचः स्थ विभागयोग्याः स्थ। अतो मां पाप्मना विपृङ्क्त वियोजयत । तस्मात्पापव्यावृत्तत्वादयं शुद्धो यष्टुं दक्षिणां दातुं च योग्यः ।

अध्वर्युप्रतिप्रस्थात्रोरुद्द्रवणं विधत्ते-

" प्राङुद्द्रवति सोमग्रहैः । अमुमेव तैर्लोकमभिजयति । प्रत्यङ्सुराग्रहैः । इममेव तैर्लोकमभिजयति " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

तदेतदुद्द्रवणमापस्तम्बः स्पष्टी चकार-" संपृचः स्थ सं मा भद्रेण पृङ्क्तेति प्राङध्वर्युः सोमग्रहैरुद्द्रवति, विपृचः स्थ वि मा पाप्मना पृङ्क्तेति प्रत्यङ्प्रातिप्रस्थाता सुराग्रहैराहवनीयं न्यङ्क्ते सोमग्रहैरवतिष्ठन्ते(ते)मार्जालीयं न्यङ्क्ते सुराग्रहैः" इति ।

प्रचारं विधत्ते-

" प्रतिष्ठन्ति सोमग्रहैः । यावदेव सत्यम् । तेन सूयते " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

प्रतिष्ठन्ति प्रचरन्ति जुह्वतीत्यर्थः । सत्यमवश्यंभावि फलं तद्यावदस्ति तेन सर्वेणायं यजमानः सूयते प्रेर्यते । कृत्स्नं फलमुद्दिश्य सोमग्रहैर्हुतवान्भवतीत्यर्थः ।

विधत्ते-

" वाजसृद्भ्यः सुराग्रहान्हरन्ति । अनृतेनैव विशꣳ सꣳसृजति " [ ब्रा० का० १ प्र० ३ अ० ३ ] इति ।

( वाजपेयोपयुक्तरथविषयमन्त्राभिधानम् )

वाजसृतोऽन्नस्यार्जयितारो वैश्याः। तेभ्यः सुराग्रहान्सोमरहितान्दद्युः। सुरायाः शमलत्वेनानृतसदृशत्वाद्विशमधमजातिमनृतेनैव संयोजितवान्भवति।

दक्षिणाविशेषं विधत्ते—

"हिरण्यपात्रं मधोः पूर्णं ददाति। मधव्योऽसानीति" [ब्रा० का० १ प्र० ३ अ० ३] इति।

मधु माक्षिकम्। मध्वादिभोज्यद्रव्ययुक्तो भवानीत्यनेनाभिप्रायेण मधुपूर्णं सुवर्णपात्रं दद्यात्।

तद्दानस्य कृष्णलदानसाहित्यं विधत्ते—

"एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुस्तेजो दधाति (७)" [ब्रा० का० १ प्र० ३ अ० ३] इति।

कृष्णलसाहित्यं चाऽऽपस्तम्बो दर्शयति—"कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति तानि प्रत्यादाय ब्रह्मणे ददाति मधुष्ठालं च सौवर्णं शतमानस्य कृतम्" इति।

ग्रहविधिमनेनानुवाकेन समाप्यानुवाकान्तरेण पशून्विधातुं प्रस्तौति—

"ब्रह्मवादिनो वदन्ति। नाग्निष्टोमो नोक्थ्यः। न षोडशी नातिरात्रः। अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति। पशुभिरिति ब्रूयात्" [ब्रा० का० १ प्र० ३ अ० ४] इति।

यज्ञशब्देनोद्देशत्यागरूपाः प्रयाजादयः प्रत्येकमभिधीयन्ते। तत्समूहरूप एव फलसाधनात्मा कर्मविशेषः क्रतुः। वेदवादिनो मिलित्वा परस्परमेवं विचारयन्ति—यज्ञाश्च क्रतवश्च सर्वेऽपि वाजपेयेऽन्तर्भूता इत्यस्ति प्रसिद्धिः। तत्कथमुपपद्यते। तथा हि—प्रयाजादीनां दीक्षणीयादिद्वारा तत्रान्तर्भावेऽप्यग्निष्टोमादीनामनन्तर्भावात्। तेषां ब्रह्मवादिनां मध्ये कश्चिद्बुद्धिमानेवमुत्तरं ब्रूयात्—अग्निष्टोमादिगतैराग्नेयादिसवनीयपशुभिः क्रतवोऽन्तर्भूता इति।

पशून्विधत्ते—

"आग्नेयं पशुमालभते। अग्निष्टोममेव तेनावरुन्धे। ऐन्द्राग्नेनोक्थ्यम्। ऐन्द्रेण षोडशिनः स्तोत्रम्। सारस्वत्याऽतिरात्रम् (१) मारुत्या बृहतः स्तोत्रम्। एतावन्तो वै यज्ञक्रतवः। तान्पशुभिरेवावरुन्धे" [ब्रा० का० १ प्र० ३ अ० ४] इति।

---

१ क. घ. ङ. च. °हान्होम°। २ क. घ. ङ. च. °भोज्याय द्र°। ख. °भोग्यद्र°।

आग्नेयादयोऽग्निष्टोमादीनां व्यावर्तकाः पशवः। षोडशिनो ग्रहस्य स्तोत्रं, तेन स क्रतुरुपलक्ष्यते। सारस्वती मेषी, सा चातिरात्रस्य व्यावृत्तिहेतुः। मारुती वशा, तयाऽनुबन्ध्यया बृहत्सामसंबन्धि स्तोत्रमवरुन्धे, तेन च स्तोत्रेण वाजपेय उपलक्ष्यते, तस्य चासाधारणत्वात्।

तानेतान्पशुविधीन्बौधायन उदाहरति–

"आश्विनं गृहीत्वा षड्रशना आदाय यूपमभ्यैति स्वर्वन्तं यूपमुत्सृज्याथैनान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रं मारुतीं वशां सप्तदश प्राजापत्याञ्श्यामानेकरूपान्सारस्वतीमन्ततः" इति।

आपस्तम्बस्त्वाग्नेयादीनां चोदकप्राप्तानामनुवादं मत्वा मेषीमारुत्योर्विधिमुदाहरति–

"पशुकाले त्रीन्क्रतुपशूनुपाकृत्य मारुतीं वशामुपाकरोति सारस्वतीं च मेषीम्" इति।

आत्मादिप्रीतिहेतुत्वेन भूम्यादिलोकजयहेतुत्वेन तेजःप्रभृतिधारणहेतुत्वेन च क्रतुपशून्प्रशंसति–

"आत्मानमेव स्पृणोत्याग्निष्टोमेन। प्राणापानावुक्थ्येन। वीर्यꣳ षोडशिनः स्तोत्रेण। वाचमतिरात्रेण। प्रजां बृहतः स्तोत्रेण। इममेव लोकमभिजयत्याग्निष्टोमेन। अन्तरिक्षमुक्थ्येन (२)। सुवर्गं लोकꣳ षोडशिनः स्तोत्रेण। देवयानानेव पथ आरोहत्यतिरात्रेण। नाकꣳ रोहति बृहतः स्तोत्रेण। तेज एवाऽऽत्मन्धत्त आग्नेयेन पशुना। ओजो बलमैन्द्राग्नेन। इन्द्रियमैन्द्रेण। वाचꣳ सारस्वत्या। उभावेव देवलोकं चाभिजयति मारुत्या वशया" [ब्रा० का० १ प्र० ३ अ० ४] इति।

अत्राग्निष्टोमेनेत्यादिशब्दैस्तन्निष्पादका आग्नेयादिपशवो विवक्षिताः। पशुविधेः प्रस्तुतत्वात्, आग्नेयेन पशुनेत्यन्तिमपर्याय(ये) विधानाच्च।

विधत्ते–

"सप्तदश प्राजापत्यान्पशूनालभते। सप्तदशः प्रजापतिः (३) प्रजापतेराप्त्यै" [ब्रा० का० १ प्र० ३ अ० ४] इति।

तेषु पशुषु गुणद्वयं वाक्यभेदमङ्गीकृत्य विधत्ते–

"श्यामा एकरूपा भवन्ति। एवमिव हि प्रजापतिः समृद्ध्यै" [ब्रा० का० १ प्र० ३ अ० ४] इति।

ताड्यमानं प्रदेशं विधत्ते—

"शीर्षतो घ्नन्ति । शीर्षतो ह्यन्नमद्यते" [ब्रा० का० १ प्र० ३ अ० ७] इति ।

चतुर्दिक्षु हननं विधत्ते—

"दिग्भ्यो घ्नन्ति । दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते" [ब्रा० का० १ प्र० ३ अ० ७] इति ।

**अमृतमसीति** । कल्पः—"अत्रास्मै प्रत्यवरोहत आसन्दीं निदधाति तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानꣳ हिरण्यं दक्षिणं पादꣳ हिरण्य उपावरोहयति अमृतमसीति, पुष्टिरसि प्रजननमसीति सव्यं बस्ताजिने" इति ।

हे हिरण्य त्वं विनाशरहितमसि। नह्यग्नौ प्रक्षिप्तमपि हिरण्यं काष्ठादिवद्विनश्यति । हे बस्ताजिन त्वं पुष्टिरसि संवत्सरे बह्वपत्योत्पादकत्वात् । एतदेवाभिप्रेत्य प्रजननमसीत्युच्यते ।

हिरण्येऽवरोहं विधातुं प्रस्तौति—

"ईश्वरो वा एष पराङ्प्रदघः । यो यूपꣳ रोहति" [ब्रा० का० १ प्र० ३ अ० ७] इति ।

यूपमारूढो यजमानः पराङ्भूलोकाद्विमुखः प्रदघः प्रदग्धुं स्वात्मानं विनाशयितुमीश्वरः समर्थो भवति । अथवा प्रदघः प्रकर्षेण गन्तुमीश्वरो न पुनरावर्तेत इत्यर्थः ।

विधत्ते—

"हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृतꣳ सुवर्गो लोकः । अमृत एव सुवर्गे लोके प्रतितिष्ठति" [ब्रा० का० १ प्र० ३ अ० ७] इति ।

हिरण्यस्य परिमाणं विधत्ते—

"शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति" [ब्रा० का० १ प्र० ३ अ० ७] इति ।

मानशब्देन पणस्य विंशो भागोऽभिधीयते । ततः पञ्चपणपरिमितमित्युक्तं भवति । शतसंख्याकाः संवत्सराः पुरुषस्याऽऽयुः । दशानां ज्ञानकर्मेन्द्रियाणां मध्ये चक्षुरादीन्द्रियस्यैकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वम् ।

बस्ताजिने वामपादप्रक्षेपं विधातुं प्रस्तौति—

( वाजपेयविषययूपारोहणाभिधानम् )

“ पुष्टयै वा एतद्रूपम् । यदजा । त्रिः संवत्सरस्यान्यान्पशून्परिप्रजायते ”
[ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

संवत्सरे सकृत्प्रसवोपेतानन्यान्गवादिपशून्परित्यज्य संवत्सरे त्रिरपत्यानि प्रसूतेऽतोऽस्याः पुष्टिरूपत्वम् ।

विधत्ते—

“ बस्ताजिनमध्यवरोहति । पुष्ट्यामेव प्रजनने प्रतितिष्ठति ( ७ ) ”
[ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

अत्र विनियोगसंग्रहः—

“क्षत्र तार्प्यं क्षत्र दार्भ्यं परिधत्तोऽत्र दंपती ।
जाये स्वाम्याह्वयेज्जायां रोहा तं प्रतिवक्ति सा ॥ १ ॥
अहं स्वाम्याह वाजश्च जुहुयाद्द्वादशाऽऽहुतीः ।
आयुर्दशभिरारोहेत्स्वयं बाहूद्ग्रहः सुवः ॥ २ ॥
सं भुवं प्रेक्षतेऽन्नाय चतुर्भिस्तु महर्त्विजः ।
दिग्भ्यो घ्नन्त्यासपुटकैरमूपुष्टिद्वयात्पदे ।
स्वर्णबस्तत्वचोर्दद्यात्पञ्चत्रिंशत्त्विहोदिताः ॥ ३ ॥ ” इति ।

अथ मीमांसा ।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

“तार्प्यमहतवस्त्रस्य बाधकं स्यान्न वाऽग्रिमः ।
गुह्याच्छादनकार्यैक्यादयोग्यत्वात्समुच्चयः ” ॥

महाव्रते श्रूयते—“ तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी ” इति । प्रकृतौ “ अहतं वासः परिधत्ते ” इति श्रुताकं वस्त्रं तार्प्यमित्युच्यते । ताभ्यां तार्प्यदर्भमयाभ्यां दंपत्योरहतं वस्त्रं बाध्यते । कुतः । परिधत्त इत्यनेन प्रकृतिलिङ्गेन गुह्याच्छादनलक्षणस्य कार्यस्यैकत्वावगमात् । मैवम् । तार्प्यदर्भमययोर्गुह्यमाच्छादयितुमयोग्यत्वात् । परिधानं त्वत्रोपरितनं प्रावरणम् । तत्कार्यभेदात्समुच्चयः ।

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

“ भवेत्सप्तदशारत्निर्वाजपेयस्य यूपकः ।
उन्मानं क्रत्वगं वाजपेयस्याङ्गं पशोरुत ॥

( वाजपेयविषययूपारोहणाभिधानम् )

आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ।
ऊर्ध्वपात्रं खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सोमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥ "

वाजपेयप्रकरणे श्रूयते—" सप्तदशारत्निर्वाजपेयस्य यूपो भवति " इति । अत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गं, सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वमानं न संभवेत्तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं संबध्य तद्द्वारा कर्मणान्वेतीति प्राप्ते ब्रूमः—सप्तदशारत्निर्यूप इति सामानाधिकरण्याद्यूपेन साक्षात्संबध्यते । तस्य च यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति । तस्यापि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम् । यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावात्पशुव्यवधानमभ्युपेयम् । वाजपेयस्येति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहितसंबन्धमप्यसावभिधत्ते, देवदत्तस्य नप्तेति प्रयोगवत् । सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यं यच्च प्रकरणं तदुभयं न विरुद्धं, पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किंच पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम् । सिद्धान्ते तु नासौ दोषः ।

तत्रैवाष्टमपादे चिन्तितम्—

" वाचयेत्स्वामिनं ज्ञाज्ञौ वाचनीयो ज्ञ एव वा ।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम् ॥ "

वाजपेये श्रूयते—" क्लृप्तीर्यजमानं वाचयति " इति । आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः क्लृप्तयः । तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्, विद्वांसं वाचयेदित्येवं विशेषस्याश्रवणात् । अनभिज्ञं तदेव शिक्षयित्वाऽपि वाचयितुं शक्यत्वादिति चेन्मैवम् । अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात् । तस्मादभिज्ञमेव वाचयेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

१ क. घ. ङ. च. भयमवि° ।